# THE TAITTIRĪYA SAṂHITĀ

With the Commentary of Bhaṭṭa Bhāskara Miśra

# तैत्तिरीयसंहिता

भट्टभास्करमिश्रविरचितभाष्यसहिता

# तैत्तिरीयसंहिता

## भट्टभास्करमिश्रविरचितभाष्यसहिता

सम्पादकौ

ए० महादेव शास्त्री

के० रङ्गाचार्यश्च

प्राक्कथनलेखकः

प्रो० आर० एन० दाण्डेकरः

पंचमो भागः

[ काण्डः ३; प्रश्नाः १–५ ]

मो ती ला ल ब ना र सी दा स

दिल्ली वाराणसी पटना मद्रास

THE

# TAITTIRĪYA SAṂHITĀ

OF THE

## BLACK YAJURVEDA

With the Commentary of
BHAṬṬA BHĀSKARA MIŚRA

*Edited by*
A. MAHADEVA SASTRI
and
K. RANGACHARYA

*Foreword by*
Prof. R. N. DANDEKAR

VOL. V
[ Kāṇḍa III : Praśnas 1-5 ]



MOTILAL BANARSIDASS
*Delhi Varanasi Patna Madras*

# PREFATORY NOTE.

The portion comprised in this volume has been edited from the manuscripts found in the Sarasvatí-Bhaṇḍâra of His Highness the Mahârája of Mysore, in the Sarasvatí-Mahal in Tanjore, in the Sanskrit Library of His Highness the Raja of Pudukotta, and in the Adyar Library (Madras).

A. M. S.

# तृतीयकाण्डविषयानुक्रमणिका.

---

## प्रथमः प्रपाठकः.



## द्वितीयः प्रपाठकः.

## तृतीयप्रपाठकः.



## चतुर्थप्रपाठकः,

## पञ्चमप्रपाठकः

हरिः ओम्

# तैत्तिरीयसंहिता

## भट्टभास्करमिश्रविरचितभाष्यसहिता.

### तृतीयः काण्डः.

### प्रथमः प्रश्नः.

प्रजापतिरकामयत प्रजास्सृजेयेति
स तपोतप्यत स सर्पानसृजत

[1]प्रजापतिरिति प्रजा–पतिः । अकामयत ।
प्रजा इति प्र–जाः । सृजेय । इति । सः । तपः ।
अतप्यत । सः । सर्पान् । असृजत । सः । अकामयत ।

---

एवं निष्पावके शाके कुशिकान्वयजन्मना ।
भट्टभास्करमिश्रेण ज्ञानयज्ञः प्रकीर्तितः ॥

[1]औपानुवाक्यं काण्डं वैश्वदेवमारभ्यते । मन्त्रानाम्नाय तदानीमेव ब्राह्मणैर्विनियुज्यते । अनारभ्याधीतत्वाच्च प्रकृत्यर्थमेतत् । अत्र लिङ्गवचनाभ्यां विनियोगः । प्रायश्चात्र व्यामिश्रलिङ्गा मन्त्राः, ते च यथालिङ्गं नियम्यन्ते । तत्र दीक्षितवादं विधास्यंस्तदर्थं पुराकल्पं विदधाति—प्रजापतिरकामयतेत्यादि ॥ पूर्वं प्रजानां पतिरकामयत, प्रजास्सर्वास्सृजेयेति । सृज विसर्गे,

सोंऽकामयत प्रजास्सृंजेयेति स द्वि-
तीयंमतप्यत स वयाꣳस्यसृजत
सोंऽकामयत प्रजास्सृंजेयेति स तृ-
तीयंमतप्यत स एतं दींक्षितवाद-

प्रजा इतिं प्र—जाः । सृजेय । इति । सः । द्विती-
यंम् । अतप्यत । सः । वयाꣳसि । असृजत । सः ।
अकामयत । प्रजा इतिं प्र—जाः । सृजेय । इतिं ।
सः । तृतीयंम् । अतप्यत । सः । एतम् । दीक्षि-
तवादमिति दीक्षित—वादम् । अपश्यत् । तम् ।

दैवादिकोऽनुदात्तेत् । तौदादिक उदात्तेत् । तत्राद्यस्य विकरण-व्यत्ययः । द्वितीयस्य त्वात्मनेपदव्यत्ययः । स तथा कामयमानः तपोऽतप्यत 'अग्निष्टोमेन वै प्रजापतिः प्रजा असृजत '* इति प्रजासृष्ट्यर्थमग्निष्टोमेन यजमानः केवलं तप एवातप्यत । न दीक्षितवादमवदत् । 'तपस्तपः कर्मकस्यैव' इति कर्मवद्भावः । किन्नाम पुनस्तत्तपः यत्सोतप्यत? उच्यते—'अङ्गिरसस्सुवर्गं लोकं यन्तोप्सु दीक्षातपसी प्रावेशयन्नप्सु स्नाति साक्षादेव दीक्षातपसी अव रुन्धे '† इत्यादि ब्राह्मणं वेदितव्यम् । किं पुनस्तर्हि तपोऽङ्गिरसोप्सु प्रावेशयन्? उपवासादिनियममित्येके । उपसदात्मकमित्यन्ये । दीक्षित्वा दीक्षितवादमवदन्नेवोपसद उपासीददिति । स तथा कुर्वन् प्रजापतिः सर्पानेवासृजत न मनुष्यादीन् ।

*सं. ७-१-१. †सं. ६-१-१.

मंपश्यत्तमंवदत्ततो वै स प्रजा अंसृ-
जत यत्तपंस्तप्त्वा दींक्षितवादं व-
दंति प्रजा एव तद्यजंमानः ॥ १ ॥

अवदत् । ततः । वै । सः । प्रजा इतिं प्र—जाः । असृजत । यत् । तपः । तप्त्वा । दीक्षित-वादमितिं दीक्षित—वादम् । वदंति । प्रजा इतिं प्र—जाः । एव । तत् । यजंमानः ॥ १ ॥

मासा एवैत उक्ता भवन्तीत्याचार्याः । स पुनरप्यकामयत, सर्वाः प्रजास्सृजेयेति । स द्वितीयमतप्यत । द्वितीयं तृतीयमिति क्रिया-विशेषणम् । स पुनरपि तथा चरन् वयांसि पक्षिण एवासृजत । छन्दांस्येवैतान्युक्तानि भवन्तीत्याचार्याः । स भूयोऽप्यकामयत सर्वाः प्रजास्सृजेयेति । स तृतीयमतप्यत, अथ स तृतीयं तप्यमान एतं दीक्षितवादमपश्यत् । दीक्षितेन वेदितव्यं दीक्षितवादम् । संस्कृतवाणीत्येके । अन्य आहुः—एतमिति वचनादनन्तरवक्ष्यमाणवि-षयत्वात्, यद्दीक्षितेन वदितव्यममेध्यदर्शनादौ 'अबद्धं मनः'* इत्यादि तद्दीक्षितवाद इति । 'थाथघञ्क्त' इत्युत्तरपदान्तोदा-त्तत्वम् । अथ तं दीक्षितवादमवदत्प्रजापतिः । ततस्सर्वाः प्रजा असृजत । यस्मादेवं तस्माद्यजमानोऽपि यत् यदि तपस्तप्त्वा दीक्षितवादं वदति तत्तेन हेतुना प्रजाः पुत्रपौत्रादीन् सृजते । तस्माद्दीक्षितेन वादः कर्तव्यः इति विधिरनुमीयते । 'व्यादाय स्वपिति' इतिवत्पूर्वकालता तत्राविवक्षिता । तपश्च तप्तव्यं दीक्षितवादश्च वदितव्य इत्युभयं विधीयते ॥

* तै. सं. ३-१-१.४

सृजते यद्वै दीक्षितोऽमेध्यं पश्यत्य-
पास्माद्दीक्षा क्रामति नीलमस्य ह-
रो व्येत्यबद्धं मनो दरिद्रं चक्षुस्सू-
र्यो ज्योतिषाꣳ श्रेष्ठो दीक्षे मा मा
हासीरित्याह नास्माद्दीक्षाऽप क्राम-

सृजते । [2]यत् । वै । दीक्षितः । अमेध्यम् । पश्यं-
ति । अपेति । अस्मात् । दीक्षा । क्रामति ।
नीलम् । अस्य । हरः । वीति । एति । [3]अब-
द्धम् । मनः । दरिद्रम् । चक्षुः । सूर्यः । ज्योति-
षाम् । श्रेष्ठः । दीक्षे । मा । मा । हासीः । इति ।
आह । न । अस्मात् । दीक्षा । अपेति । क्राम-

---

[2]अथ दीक्षितस्यामेध्यदर्शने दोषमाह—यद्वा इति ॥ यद्य-मेध्यं दीक्षितः पश्यति अस्माद्दीक्षाफलमपक्रामति । किञ्च—नीलं पापं अमेध्यदर्शनाच्च अस्य भवति; दीक्षापक्रमणमात्रमेव मा । किञ्च—हरस्तेजस्तदप्यस्माद्व्येति विगच्छति । केचिदाहुः—नील मितिरूपमात्रं गृह्यते; अस्य रूपं तेजश्च नश्यति ॥

[3]अथ प्रमादकृते जपं विदधाति—अबद्धं मन इत्यादि ॥ मा मा हासीः इत्यन्तं इमं मन्त्रमाह जपेदित्यर्थः । अथोक्तदो-षाभावमाह—नास्मादिति । दीक्षा चास्मान्नापक्रामति, नीलं चास्य न भवति, हरश्चास्मान्न व्येति ॥

ति नास्य नीलं न हरो व्येति यद्वै
दीक्षितमभिवर्षति दिव्या आपोशा-
न्ता ओजो बलं दीक्षाम् ॥ २ ॥
तपोस्य निर्घ्नन्त्युन्दतीर्बलं धत्तौ-

ति । न । अस्य । नीलम् । न । हरः । वीति । एति । [4]यत् । वै । दीक्षितम् । अभिवर्षतीत्यभि–वर्षति । दिव्याः । आपः । अशान्ताः । ओजः । बलम् । दीक्षाम् ॥ २ ॥ तपः । अस्य । निरिति । घ्नन्ति । [5]उन्दतीः । बलम् । धत्त । ओजः । धत्त ।

मन्त्रार्थस्तु—अबद्धमनियतं मनः अन्तःकरणं शुभानशुभांश्च विषयाननुधावति न नियन्तुं शक्यते । किञ्च—दरिद्रं कृपणं चक्षुः बाह्यं करणं न प्रभु* । इष्टमेव विषयं गृह्णाति नानिष्टमिति एतस्य नास्तीत्यर्थः । दरिद्रातेः पचाद्यचि छान्दसमन्त्यात्पूर्वस्योदात्तत्वम् । किं च—सूर्यो ज्योतिषां प्रकाशकानां श्रेष्ठः गहनान्यपि प्रकाशयति । न किं चिदप्यावरणं च प्रतीतमस्ति । तस्मादेभिरेव त्रिभिरेतत्कृतं न मयेति भावः । यस्मादेवं तस्माद्धे दीक्षे मा मा हासीः मा त्याक्षीः मत्तो मा क्रमीः । समानवाक्ये निघातादिविधानादपदात्परत्वादामन्त्रितानुदात्तत्वाभावे षाष्ठिकमामन्त्रिताद्युदात्तत्वमेव ॥

[4]अथ दीक्षितस्याभिवर्षणे दोषमाह—यद्वा इति ॥ यद्दीक्षित-

*क.—प्रभुवत्.

जौं धत्त बलं धत्त मा मे दीक्षां मा
तपो निर्वधिष्टेत्याहैतदेव सर्वमा-
त्मन्धत्ते नास्यौजो बलं न दीक्षां
न तपो निर्घ्नन्त्यग्निर्वै दीक्षितस्य

बलम् । धत्त । मा । मे । दीक्षाम् । मा । तपः । निरिति । वधिष्ट । इति । आह । एतत् । एव । सर्वम् । आत्मन्न् । धत्ते । न । अस्य । ओजः । बलम् । न । दीक्षाम् । न । तपः । निरिति । घ्नन्ति । [6]अग्निः । वै । दीक्षितस्य । देवता । सः ।

---

मभिवर्षति दिव्या अन्तरिक्ष्या अभूमिगता अशान्ताः असुखहेतवः आपः अस्य दीक्षितस्य ओजः बलं ओजिष्ठं बलं दीक्षां च तपश्च पुरोक्तं निर्घ्नन्ति निश्चयेन नाशयन्ति ॥

[5]अथ प्रमादकृते परिहारार्थं जपमाह—उन्दतीरिति मा तपो निर्वधिष्टेत्यन्तम् ॥ अस्य जपेन एतत्पूर्वोक्तं सर्वमात्मन् आत्मनि धत्ते स्थापयति । दोषाभावमाह—नास्यौजिष्ठं बलं न दीक्षां निर्घ्नन्ति दिव्या आपः ॥

मन्त्रार्थस्तु—हे आपः उन्दतीः मां क्लेदयन्त्यो यूयं बलं मयि धत्त स्थापयत । ओजो दीप्तिं च बलं प्राणं जीवितं वा मयि धत्त । कर्मभ्रेषादाध्वरिकं कर्म मा छेद्दि । किं च—मम दीक्षां तपश्च मा निर्वधिष्ट निष्कृष्य मा नीनशत ॥

[6]अथभद्रादभि श्रेय इत्यादिना ‘ दैवीं धियं मनामहे ’* इत्याम्नातानां

---

*सं १–२–३ 18—21

देवता सोऽस्मादेतर्हि तिर इव यर्हि याति तमीश्वरꣳ रक्षाꣳसि हन्तोः ॥ ३ ॥ भद्रादभि श्रेयः प्रेहि बृहस्पतिः पुरएता ते अस्त्वित्याह ब्रह्म वै देवानां बृहस्पतिस्तमेवान्वा-

अस्मात् । एतर्हि । तिरः । इव । यर्हि । याति । तम् । ईश्वरम् । रक्षाꣳसि । हन्तोः ॥ ३ ॥ भद्रात् । अभीति । श्रेयः । प्रेति । इहि । बृहस्पतिः । पुरएतेति पुरः–एता । ते । अस्तु । इति । आह । ब्रह्म । वै । देवानाम् । बृहस्पतिः । तम् । एव । अन्वारभतेत्यनु–आरभते । सः । एनम् । स-

आध्वरिकाणां प्रयाणादिमन्त्राणां ब्राह्मणम् । तत्र 'अच्छिन्नं तन्तुं पृथिव्या अनु गेषमित्याह सेतुमेव कृत्वाऽत्येति '* इति समाप्य शिष्टानां तेषां प्रकरणमुल्लङ्घ्यास्मिन्प्रदेशे ब्राह्मणमाम्नातं किमर्थमिति चिन्त्यम् । केचिदाहुः—उपानुवाक्यत्वेन काण्डविशेषप्रापणार्थमिति । अपरे तु ब्रुवते—एषां दीक्षितवादप्रसिद्ध्यर्थमस्मिन्ननुवाके एषां ब्राह्मणमाम्नायत इति । तत्र प्रयाणमन्त्रः—भद्रादभि श्रेय इति ॥ व्याख्यातश्चायम्† । अत्र किंचिद्विशेषं ब्राह्मणं दर्शयति—अग्निर्वै दीक्षितस्येति ॥ दीक्षितस्याग्निर्देवता । स चाग्निरस्माद्दीक्षितादेतर्हि अस्मिन् काले तिर

*सं. ६-१-४. †सं. १-२-३.

रंभते स एनꣳ सं पारयत्येदमगन्म
देवयजनं पृथिव्या इत्याह देवयज-
नꣳ ह्येष पृथिव्या आगच्छति यो-
यजते विश्वे देवा यदजुषन्त पूर्वे

मिति । पारयति । एति । इदम् । अगन्म । देव-
यजनमिति देव-यजनम् । पृथिव्याः । इति । आह ।
देवयजनमिति देव-यजनम् । हि । एषः । पृथि-
व्याः । आगच्छतीत्या-गच्छति । [7]यः । यजते ।
विश्वे । देवाः । यत् । अजुषन्त । पूर्वे । इति ।

---

इव तिरोहित इव 'इदमो र्हिल्' 'एतेतौ रथोः' । कस्मिन् काले इत्याह—यर्हि यातीति । यस्मिन् काले अरण्योरग्नीन् समारोप्यायं याति तदास्मादग्निस्तिरोहित इव । सर्वात्मना तिरोधानं नास्तीति दर्शयितुमिवेत्युक्तम् । 'अनद्यतनेर्हिलन्यतरस्याम्' इति यच्छब्दा-द्धिल् प्रत्ययः । ततश्च तं दीक्षितं तादृशमात्मनो देवतया अग्निना विहीनं रक्षांसि हन्तोः हन्तुमीश्वरमीश्वराणि । वचन-व्यत्ययेनैकवचनम् । 'ईश्वरे तोसुन्कसुनौ' इति तोसुन् प्रत्ययः । यागविघ्नाचरणं हननम् । तत्र भद्रादभि श्रेय इत्यनया बृहस्पतिवत्यर्चा प्रयाणेन एतद्दोषप्रसङ्गाभावः । तथाहि—ब्रह्म वै देवानां बृहस्पतिः तमेवान्वारभते अनुसंप्रक्तो भवति । स एनं संपारयति अ-विघ्नेन निर्वर्तितयागं करोति । पार तीर कर्मसमाप्तौ । अथ देवयजनमेदमगन्मेत्युच्यते ॥

[7]विश्वे देवा इत्यादि ॥ एताद्धि विश्वे देवा जोषयन्ते सेवन्ते यद्ब्राह्म-

इत्याह विश्वे ह्येतद्देवा जोषयन्ते यद्ब्रा-
ह्मणा ऋक्सामाभ्यां यजुषा संतरन्त
इत्याहर्क्सामाभ्याꣳ ह्येष यजुषा संत
रति यो यजते रायस्पोषेण समिषा
मदेमेत्याहाशिषमेवैतामा शास्ते॥४

आह । विश्वे । हि । एतत् । देवाः । जोषयन्ते । यत् । ब्राह्मणाः । ऋक्सामाभ्यामित्यृक्साम–भ्याम् । यजुषा । सन्तरन्त इति सं–तरन्तः । इति । आह । ऋक्सामाभ्यामित्यृक्साम–भ्याम् । हि । एषः । यजुषा । सन्तरतीति सं–तरति । [8]यः । यजते । रायः । पोषेण । सामिति । इषा । मदेम । इति । आह । आशिषमित्या–शिषम् । एव । एताम् । एति । शास्ते ॥ ४ ॥

यजमानो दीक्षाꣳ हन्तोर्ब्राह्मणाश्चतुर्विꣳशतिश्च ॥१

णास्सेवन्ते । तस्माद्विश्वे देवा यदजुषन्त इति ब्राह्मणैः पूर्वैस्सेवित-मुच्यते । अचतुरादिसूत्रे ऋक्सामशब्दोऽच्प्रत्ययान्तो निपातितः ॥
[8]रायस्पोषेणेत्यादि ॥ मदेमेत्येतामाशिषमनेनाशास्ते ॥

इति भट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये तृतीयकाण्डे
प्रथमप्रपाठके प्रथमोनुवाकः.

एष ते गायत्रो भाग इति मे सो-
माय ब्रूतादेष ते त्रैष्टुभो जागतो
भाग इति मे सोमाय ब्रूताच्छन्दो-
मानाꣳ साम्राज्यं गच्छेति मे सोमा-

[1-4]एषः । ते । गायत्रः । भागः । इति । मे । सोमाय । ब्रूतात् । एषः । ते । त्रैष्टुभः । जागतः । भागः । इति । मे । सोमाय । ब्रूतात् । छन्दोमानामिति छन्दः-मानाम् । साम्राज्यमिति सां-रा-

---

[1-4]पुरस्तात्सोमस्य क्रयाद्राजानमभिमन्त्रयते । एष वल्लीसोमस्तव गायत्रो भागः अंशः । 'कर्षात्वतः' इत्यन्तोदात्तत्वम् । एतदुक्तं भवति—गायत्रीविषयं यत्तव साम्राज्यं तस्येदं स्थानं इममधिष्ठाय तत्साम्राज्यं कुरुष्वेति । इत्थं मे मदर्थं मदीयं वा सोमं सोमाय राज्ञे ब्रूतात् ब्रूत । हे छन्दांसि । यद्वा—हे देवाः 'तस्य तात्' इति तादादेशः । एवं 'एष ते त्रैष्टुभः एष ते जागतः' इत्येतयोरपि वेदितव्यम् । भाग इत्युभयत्राप्यनुषज्यते । त्रिष्टुप्जगतीशब्दाभ्यामुत्सादित्वात्प्राग्दीव्यतीयोऽण् । छन्दांसि प्रधानानि वा । गायत्रीत्रिष्टुप्जगत्येतद्विषयं तत्संबन्धि यत्तव साम्राज्यादिकं तदेतेन वल्लीसोमेन गच्छ कुर्वित्यर्थः । एवं त्वां साम्राज्यं गमयामः अनेनाभिमन्त्रणेनेति भावः । शिष्टं स्पष्टम् । सम्यग्राजत इति सम्राट्, क्विप् 'मो राजिसमः क्वौ' इति मः । तस्य भावः साम्राज्यं गुणवचनत्वात् ष्यञ् । छन्दोविषयं तवैश्वर्यमित्यर्थः ॥

य ब्रूताद्यो वै सोमꣳ राजानꣳ
साम्राज्यं लोकं गमयित्वा क्रीणाति
गच्छति स्वानाꣳ साम्राज्यं छन्दाꣳ-
सि खलु वै सोमस्य राज्ञस्साम्रा-
ज्यो लोकः पुरस्तात्सोमस्य क्रया-

ज्यम् । गच्छ । इति । मे । सोमाय । ब्रूतात् ।
[5]यः । वै । सोमम् । राजानम् । साम्राज्यमिति
सां–राज्यम् । लोकम् । गमयित्वा । क्रीणाति ।
गच्छति । स्वानाम् । साम्राज्यमिति सां–राज्यम् ।
छन्दाꣳसि । खलु । वै । सोमस्य । राज्ञः । सा-
म्राज्य इति सां–राज्यः । लोकः । पुरस्तात् । सो-

---

[5]अथैतेषां मन्त्राणां ब्राह्मणम्—यो वै सोममिति ॥ लोकः प्रकाशः । साम्राज्यलक्षणं लोकं गमयित्वा यस्सोमं क्रीणाति स स्वानामात्मीयानां साम्राज्यं गच्छति । तिङः परत्वान्न निहन्यते । समानवाक्ये वा पदात्परत्वाभावात् । कः पुनः* साम्राज्यलक्षणो लोकः इत्याह—छन्दांसीत्यादि । साम्राज्यस्य छन्दोविषयत्वात् ताच्छब्द्यमुपचर्यते, व्यत्ययेन पुल्लिङ्गता । कथं-पुनस्तत्सोमो गमयितव्य इत्यत आह—पुरस्तादित्यादि । पुरस्तात् पूर्वस्मिन् काले । ‘दिक्शब्देभ्यः’ इत्यादिना अस्तातिः, ‘अस्ताति च’ इति पुरादेशः । एवमिति ‘एष ते गायत्रः’†

---

*क—क्व पुनः.        †सं. ३-१-२[1–4].

देवमभि मन्त्रयेत साम्राज्यमेव ॥५॥
एनं लोकं गमयित्वा क्रीणाति ग-
च्छति स्वानाꣳ साम्राज्यं यो वै
तानूनप्त्रस्य प्रतिष्ठां वेद प्रत्येव ति-

मस्य । क्रयात् । एवम् । अभीति । मन्त्रयेत । साम्राज्यमिति सां-राज्यम् । एव ॥ ५ ॥ एनम् । लोकम् । गमयित्वा । क्रीणाति । गच्छति । स्वानाम् । साम्राज्यमिति सां-राज्यम् । [6]यः । वै । तानूनप्त्रस्येति तानू-नप्त्रस्य । प्रतिष्ठामिति प्रति-

---

इत्यादिभिर्मन्त्रैरित्यर्थः । इष्टसिद्धिसमर्थनेन निगमयति—साम्रा-ज्यमेवेत्यादि । एवं कुर्वन् साम्राज्यं लोकं गमयित्वैव एनं सोमं क्रीणाति, स्वयं च स्वानां साम्राज्यं गच्छति ॥

[6]अथ तानूनप्त्रस्यावघ्राणं विधास्यन्नाह—यो वै तानूनप्त्रस्ये-त्यादि ॥ तनूनामपां नप्ता चतुर्थस्तनूनपात् शरीरस्थोऽग्निः, तस्मै यद्गृह्यते आज्यं तत्तानूनप्त्रम् । यद्यपि 'आपतये त्वा गृह्णामि'* इत्याद्यापत्यादिभ्यः प्राणादिभ्यो ह्येतद्गृह्यते । तथाऽपि प्राधा-न्यात्तानूनप्त्रा व्यपदिश्यते । तस्य यः प्रतिष्ठां वेद स प्रति तिष्ठत्येव ॥

---

*सं. १-२-१०[13–17].

ष्ठति ब्रह्मवादिनो वदन्ति न प्राश्न-
न्ति न जुह्वत्यथ क्व तानूनप्त्रं प्रति
तिष्ठतीति प्रजापतौ मनसीति ब्रू-
यात्त्रिरव जिघ्रेत्प्रजापतौ त्वा मन-

स्थाम् । वेद । प्रतीति । एव । तिष्ठति । [7]ब्रह्मवा-
दिन इति ब्रह्म-वादिनः । वदन्ति । न । प्राश्नन्ती-
ति प्र-अश्नन्ति । न । जुह्वति । [8]अथ । क्व । तानू-
नप्त्रमिति तानू-नप्त्रम् । प्रतीति । तिष्ठति । इति ।
प्रजापताविति प्रजा-पतौ । मनसि । इति । ब्रू-
यात् । [9]त्रिः । अवेति । जिघ्रेत् । प्रजापताविति

---

[7]अधुना ब्रह्मवादिभिः पर्यनुयोजयति—ब्रह्मवादिन इत्यादि ॥ ब्रह्म वेदः तदर्थं वदितुं शीलमेषां ते ब्रह्मवादिनः । 'ब्रह्मणि वदः' इति णिनिः । वदन्ति प्रश्नं कुर्वन्ति—नेदं तानूनप्त्रं प्राश्नन्ति, न चेदं जुह्वति प्राशनेन वा होमेन वा नास्य प्रतिष्ठेति ॥

[8]अथेदानीं तानूनप्त्रं क्व प्रति तिष्ठति, काऽस्य प्रतिपत्तिरिति इदानीं तेभ्य उत्तरं अन्येनैव दापयति—प्रजापताविति ॥ प्राजापत्यात्मनि प्रजानां वा पालके मनसि अस्य प्रतिष्ठेति ब्रूयात् ॥

[9]कः पुनस्तस्य प्रकार इत्यत्राह—त्रिरव जिघ्रेदिति ॥

मन्त्रमाह—प्रजापतावित्यादि ॥ गतम् ॥

सि जुहोमीत्येषा वै तानूनप्त्रस्य
प्रतिष्ठा य एवं वेद प्रत्येव तिष्ठ-
ति यः ॥ ६ ॥ वा अध्वर्योः प्रतिष्ठां
वेद प्रत्येव तिष्ठति यतो मन्येतान-
भिक्रम्य होष्यामीति तत्तिष्ठन्ना श्रा-
वयेदेषा वा अध्वर्योः प्रतिष्ठा य ए-

प्रजा–पतौ । त्वा । मनसि । जुहोमि । इति ।
[10]एषा । वै । तानूनप्त्रस्येति तानू–नप्त्रस्य । प्रतिष्ठे-
ति प्रति–स्था । यः । एवम् । वेद । प्रतीति । एव।
तिष्ठति । [11]यः ॥ ६ ॥ वै । अध्वर्योः । प्रतिष्ठामि-
ति प्रति–स्थाम् । वेद । प्रतीति । एव । तिष्ठति ।
यतः । मन्येत । अनभिक्रम्येत्यनभि–क्रम्य । हो-
ष्यामि । इति । तत् । तिष्ठन् । एति । श्रावयेत् ।
एषा । वै । अध्वर्योः । प्रतिष्ठेति प्रति–स्था । [12]यः।

---

[10]एषा वा इत्यादि प्राजापत्यात्मब्राह्मणम् ॥ गतमेव ॥

[11]यो वा अध्वर्योः प्रतिष्ठामित्यादि ॥ अतीत्यावस्थानमभिक्रमणम् । यतोनभिक्रम्य होष्यामीति तत्तत्र तिष्ठन्नाश्रावयेत् ततो होष्यन्नाक्रामेदिति । एवमनुष्ठानं अध्वर्योः प्रतिष्ठाहेतुत्वात्प्रतिष्ठा ॥

[12]य एवमित्यादि ॥ गतम् ॥

वं वेद प्रत्येव तिष्ठति यदभिक्रम्यं जुहुयात्प्रतिष्ठाया इयात्तस्मात्समानत्र तिष्ठता होतव्यं प्रतिष्ठित्यै यो वा अध्वर्योस्स्वं वेद स्ववानेव भवति स्रुग्वा अस्य स्वं वायव्यमस्य ॥ ७ ॥ स्वं चमसोस्य स्वं यद्वाय-

एवम् । वेद । प्रतीति । एव । तिष्ठति । [13]यत् । अभिक्रम्येत्यभि–क्रम्य । जुहुयात् । प्रतिष्ठाया इति प्रति–स्थायाः । इयात् । तस्मात् । समानत्र । तिष्ठता । होतव्यम् । प्रतिष्ठित्या इति प्रति–स्थित्यै । [14]यः । वै । अध्वर्योः । स्वम् । वेद । स्ववानिति स्व-वान् । एव । भवति । स्रुक् । वै । अस्य । स्वम् । वायव्यम् । अस्य ॥ ७ ॥ स्वम् । चमसः । अस्य । स्वम् ।

---

[13]विपर्यये दोषमाह—यदभिक्रम्येत्यादि ॥ यद्याश्रावणस्थानादभिक्रम्य जुहुयात् प्रतिष्ठाया इयात् च्यवेत । तस्मात्समानत्र समानदेशे तिष्ठता होतव्यं आश्रवणदेश एवेत्यर्थः । प्रतिष्ठित्यै भवति । तदेतदन्यत्र हविर्यज्ञेभ्योऽभिक्रामं जुहोति हविर्यज्ञेषु भवतीति ॥

[14]यो वा अध्वर्योस्स्वं वेदेत्यादि ॥ स्रुगादयः अध्वर्योस्स्वानि धनानि । तत्र सोमविषयत्वादनुवाकस्य वायव्यचमसयोरेव ग्रह-

व्यं वा चमसं वाऽनन्वारभ्याश्राव-
येत्स्वादियात्तस्मादन्वारभ्याश्राव्यꣳ
स्वादेव नैति यो वै सोममप्रतिष्ठा-
प्य स्तोत्रमुपाकरोत्यप्रतिष्ठितस्सो-

यत् । वायव्यम् । वा । चमसम् । वा । अनन्वा-
रभ्येत्यनन्–आरभ्य । आश्रावयेदित्या–श्रावयेत् ।
स्वात् । इयात् । तस्मात् । अन्वारभ्येत्यनु–आर-
भ्य । आश्राव्यमित्या–श्राव्यम् । स्वात् । एव ।

---

णम् । यद्वायव्यं वा चमसं वेति । तस्मादित्यादि । वाय-
व्यं वा चमसं वा हस्तेऽन्वारभ्य हस्ते गृहीत्वा आश्राव्यमेवं कुर्वन्
स्वादेव नैति ॥

[15]यो वै सोममप्रतिष्ठाप्येत्यादि ॥ सोममप्रतिष्ठाप्य अप्रतिष्ठां
गमयित्वा यः स्तोत्रमुपाकरोति तस्य सोमाद्योप्रतिष्ठिताः स्वका-
र्यकरणे असमर्थाः भवेयुः । उक्थानि शस्त्राणि ॥

[16]कदा पुनः प्रतितिष्ठतीत्याह—वायव्यं वा इत्यादि ॥ वायव्यं
पात्रविशेषः । यत्र ग्रहा गृह्यन्ते । तत्र सोमस्य प्रतिष्ठा तत्र
सोमः प्रतितिष्ठतीति । चमसो वायव्यस्य प्रतिष्ठा तत्र वायव्यं
प्रतितिष्ठति मुख्ये चमसे संपातमवनयतीति । अस्य सोमस्य
प्रतिष्ठाभूतस्यापि वायव्यस्य चमसः प्रतिष्ठेति प्राधान्येन निर्दि-
ष्टस्य वायव्यस्यापि अन्वादेशत्वादस्येत्यनुदात्तत्वम् । प्रत्येव सोम-
मित्यादि । तेषामेव प्रस्तुतत्वात् चमसोस्य सोमस्य प्रतिष्ठेति ।

ष्ठितोध्वर्युर्वायव्यं वै सोमस्य प्रति-
ष्ठा चमसोस्य प्रतिष्ठा सोमस्स्तो-
मस्य स्तोम उक्थानां ग्रहं वा गृ-
हीत्वा चमसं वोन्नीय स्तोत्रमुपाकु-

अप्रतिष्ठितानीत्यप्रति–स्थितानि । उक्थानि । अप्र-
तिष्ठित इत्यप्रति–स्थितः । यजमानः । अप्रति-
ष्ठित इत्यप्रति–स्थितः । अध्वर्युः । [16]वायव्यम् ।
वै । सोमस्य । प्रतिष्ठेति प्रति–स्था । चमसः ।
अस्य । प्रतिष्ठेति प्रति–स्था । सोमः । स्तोमस्य ।
स्तोमः । उक्थानाम् । [17]ग्रहम् । वा । गृहीत्वा ।
चमसम् । वा । उन्नीयेत्युत्–नीय । स्तोत्रम् ।

---

[16]कदा पुनः प्रतितिष्ठतीत्याह—वायव्यं वा इत्यादि ॥ वायव्यं पात्रविशेषः । यत्र ग्रहा गृह्यन्ते तत्र सोमस्य प्रतिष्ठा तत्र सोमः प्रतितिष्ठतीति । चमसो वायव्यस्य प्रतिष्ठा तत्र वायव्यं प्रतितिष्ठतीति मुख्ये चमसे संपातमवनयतीति । अस्य सोमस्य प्रतिष्ठाभूतस्यापि वायव्यस्य चमसः प्रतिष्ठेति प्राधान्येन निर्दि-ष्टस्य वायव्यस्यापि अन्वादेशत्वादस्येत्यनुदात्तत्वम् । प्रत्येव सोम-मित्यादि । तेषामेव प्रस्तुतत्वात् चमसोस्य सोमस्य प्रतिष्ठेति ॥

[17]कथं पुनः सोमः प्रतिष्ठां गमयितव्य इत्याह—ग्रहं वेत्यादि ॥ ग्रहचमसशब्दाभ्यां विशिष्टाधारवर्तिसोम उच्यते । तत्र ग्रहणं

यत्प्रत्येव सोमꣳ स्थापयति प्रति स्तोमं प्रत्युक्थानि प्रति यजमान-स्तिष्ठति प्रत्यध्वर्युः ॥ ८ ॥

उपाकुर्यादित्युप-आकुर्यात् । [18]प्रतीति । एव । सोमम् । स्थापयति । प्रतीति । स्तोमम् । प्रतीति । उक्थानि । प्रतीति । यजमानः । तिष्ठति । प्रतीति । अध्वर्युः ॥ ८ ॥

एव तिष्ठति यो वायव्यमस्य ग्रहं वैकान्न विꣳश-तिश्च ॥ २ ॥

---

ग्रहस्योन्नयनम् । उन्नयनमेव चमसस्य ग्रहणम् । तस्मादुच्यते ग्रहं वा गृहीत्वा चमसं वोन्नीयेति ॥

[18]एवं हि सोमः प्रतिष्ठां गमित एवेत्याह*—प्रत्येव सोम-मित्यादि ॥ ग्रहचमसशब्दाभ्यां स्तोत्रोपाकरणं कृतं भवति । ग्रहप्रतिष्ठात्वात् सोमस्य, तस्य चमसप्रतिष्ठात्वात् । ततश्च सोमादीन् प्रतिष्ठापयति, यजमानश्च प्रतितिष्ठति, अध्वर्युश्च प्रति तिष्ठतीत्येव ॥

इति तृतीये प्रथमे द्वितीयोनुवाकः.

---

* क—एवं हि सोमं प्रतिष्ठां गमयित्वैव इत्याह—

यज्ञं वा एतत्सं भरन्ति यत्सोमक्र-
यंण्यै पदं यंज्ञमुखꣳ हविर्धाने यर्-
हिं हविर्धाने प्राचीं प्रवर्तयेंयुस्तर्-
हि तेनाक्षमुपांञ्ज्याद्यज्ञमुख एव य-
ज्ञमनु सं तंनोति प्राञ्चंमग्निं प्र हर्-

[1]यज्ञम् । वै । एतत् । समितिं । भरन्ति । यत् । सोमक्रयंण्या इतिं सोम–क्रयंण्यै । पदम् । यज्ञमुखमितिं यज्ञ–मुखम् । हविर्धाने इतिं हविः–धानें । यर्हिं । हविर्धाने इतिं हविः–धानें । प्राची इतिं । प्रवर्तयेंयुरितिं प्र–वर्तयेंयुः । तर्हिं । तेनं । अक्षंम् । उपेतिं । अञ्ज्यात् । यज्ञमुख इतिं यज्ञ–मुखे । एव । यज्ञम् । अनुं । स-

---

[1]अथ हविर्धानयोरक्षोपाञ्जनं विधास्यन्नाह—यज्ञं वा इत्यादि ॥ यज्ञमेवैतत्सम्भरन्ति यत्सोमक्रयण्याः पदं संभरन्ति । यज्ञस्य प्रधानोपकरणत्वात् । यज्ञमुखं हविर्धाने यज्ञस्य मुखमिव उपक्रमणमेवैते हविर्धाने भवतः । हवींषि निधीयन्ते अनयोरिति हविर्धाने शकटे । यस्मादेवं तस्मात् यर्हि यस्मिन् काले हविर्धाने प्राची प्रवर्तयेयुः तर्हि तस्मिन्काले तेन पदतृतीयेन अक्षं अक्षस्य धुरं उपाञ्ज्यात् पत्नी । यज्ञमुख एव उपक्रम एव यज्ञं समस्तं अनुसन्तनोति अनुसन्ततं करोति ॥

न्त्युत्पत्नीमा नयन्त्यन्वनाꣳसि प्र वर्तयन्त्यथ वा अस्यैष धिष्णियो हीयते सोनु ध्यायति स ईश्वरो रुद्रो भूत्वा ॥ १ ॥ प्रजां पशून् यजमानस्य शमयितोर्यर्हि पशुमा-

मिति । तनोति । [2]प्राश्वम् । अग्निम् । प्रेति । हरन्ति । उदिति । पत्नीम् । एति । नयन्ति । अन्विति । अनाꣳसि । प्रेति । वर्तयन्ति । अथ । वै । अस्य । एषः । धिष्णियः । हीयते । सः । अन्विति । ध्यायति । सः । ईश्वरः । रुद्रः । भूत्वा ॥ १ ॥ प्रजामिति प्र–जाम् । पशून् । यजमानस्य । शमयितोः । [3]यर्हि । पशुम् । आप्रीतमित्या–प्रीतम् ।

---

[2]प्राश्वमग्निं प्र हरन्तीत्यादयो विधयः ॥ प्राश्वं प्रहरन्ति । पत्नीमुदानयन्ति । अनांसि अनुप्रवर्तयन्ति । अथ वै इदानीं अस्याग्नेः धिष्णियो हीयते प्रहीयते । ततश्च स हीनधिष्ण्योग्निरनुध्यायति अनुचिन्तयति धिष्ण्यविरहितोहम् । स तादृशो रुद्रः क्रूरो भूत्वा यजमानस्य प्रजां पशूंश्च शमयितोः शमयितुं नाशयितुमीश्वरश्शक्त एव स्यात् ॥

[3]तत्रायं समाधिरित्याह—यर्हीत्यादि ॥ यर्हि यस्मिन् काले पशुमाप्रीतं इष्टकामत्वादीषत्प्रियमिति केचित् यदा—उदश्वं नय-

प्रीतमुदंश्चं नयन्ति तर्हि तस्यं प-
शुश्रपण॑ हरेत्तेनैवैनं भागिनं करो-
ति यजमानो वा आहवनीयो यज-
मानं वा एतद्वि कर्षन्ते यदाहव-

उदंश्चम् । नयन्ति । तर्हि । तस्यं । पशुश्रपणमिति पशु-श्रपणम् । हरेत् । तेनं । एव । एनम् । भागिनम् । करोति । [4]यजमानः । वै । आहवनीय इत्यां-हवनीयः । यजमानम् । वै । एतत् । वीति । कर्षन्ते । यत् । आहवनीयादित्यां-हवनीयात् ।

---

न्ति तर्हि तदानीमेव पशुश्रपणं अग्निं तस्याहवनीयस्यैकदेशं हरेत् तेनैवैनं भागिनं करोति ततश्च भागलाभेन तृप्तः प्रजां पशूंश्च न शमयति ॥

[4]अथाहवनीयात्पशुश्रपणहरणे दोषमाह—यजमानो वा इत्यादि ॥ ततश्च यजमानो निरात्मकस्स्यादिति । समाधत्ते—स वैव स्यात् स एव आहवनीयैकदेशः पशुश्रपणस्स्यात् । ननु चोक्तम् यजमानो निरात्मकस्स्यादिति; ननु चेदमप्युक्तम् 'स ईश्वरो रुद्रो भूत्वा प्रजां पशून्यजमानस्य शमयितोः' इति । तस्मादग्नेर्भागवत्त्वाय स वैव स्यात् स एव भागतृप्तो यजमानं सात्मानं करिष्यतीति । पक्षान्तरमप्याह—निर्मन्थ्यं वा कुर्यात् पशुश्रपणं यजमानस्य सात्मत्वाय । ननु निर्भागोग्निः प्रजां पशून्यजमानस्य नाशयेत्, अत्र स्वयमाचार्येणैव समाधानमुक्तम्—आहवनी-

नीयात्पशुश्रपणꣳ हरन्ति स वैव स्यान्निर्मन्थ्यं वा कुर्याद्यजमानस्य सात्मत्वाय यदि पशोरवदानं नश्ये-दाज्यस्य प्रत्याख्यायमवं द्येत्सैव

पशुश्रपणमिति पशु—श्रपणम् । हरन्ति । सः । वा । एव । स्यात् । निर्मन्थ्यमिति निः—मन्थ्यम् । वा । कुर्यात् । यजमानस्य । सात्मत्वायेति सात्म—त्वाय । [5]यदि । पशोः । अवदानमित्यव—दानम् । नश्येत् । आज्यस्य । प्रत्याख्यायमिति प्रति—आख्यायम् । अवेति । द्येत् । सा । एव । ततः ।

---

यादुल्मुकमादाय अरणी उपसंगृह्य पूर्वं पशोः प्रतिपद्यते निर्म-न्थ्येन वा पशुं श्रपयन्ति वपया तत्सहोल्मुकमाहरन्तीति । एवमुल्मुकस्याग्रतः पशोर्नयनेन अग्निर्भागवान् भवति । तस्य पु-नराहरणेन यजमानश्च सात्मा संपद्यते इति । पुराणगार्हपत्यस्स इत्युच्यत इति केचित् । अस्मिन् पक्षे गार्हपत्यादुल्मुकमादाय दक्षिणया द्वारोपनिर्हृत्य दक्षिणेन सदः परीत्य दक्षिणेन मार्जा-लीयं धिष्ण्यं पर्याहृत्य दक्षिणेन यूपं चाहवनीयं च अतिहृत्य अन्तरेण चात्वालोत्करावुदङुपनिर्हृत्य तेन पशुं श्रपयेयुः ॥

[5]यदि पशोरित्यादि ॥ यावन्ति पशोरवदानानि नश्यन्ति तावत्कृत्व आज्यस्यावद्येत् । छान्दसो णमुल् । यद्वा—तत्प्रत्या-ख्यायं आज्यस्यावद्येत् प्रत्याम्नायतयेति यावत् । सैव ततोवदान-

ततः प्रायंश्चित्तिर्ये पशुं विमथ्नीरन्
यस्तान्कामयेतार्तिमार्च्छेयुरितिं कु-
विदङ्गेति नमोवृक्तिवत्यर्चाऽऽग्नींध्रे

प्रायंश्चित्तिः । [6]ये । पशुम् । विमथ्नीरन्निर्ति वि-
मथ्नीरन् । यः । तान् । कामयेत । आर्तिम् ।
एतिं । ऋच्छेयुः । इतिं । कुवित् । अङ्ग । इतिं ।
नमोंवृक्तिवत्येति नमोंवृक्ति-वत्या । ऋचा । आ-

---

विनाशदोषान्मोचनाय प्रायश्चित्तिः, दोषनिर्घातार्थं कर्म प्रायश्चि-त्तिः, । *प्रायः प्रायेण कर्मणोपगमः तदर्था चित्तिः ज्ञानं प्रायश्चित्तिः, तद्दोषनिर्घातार्थत्वात् । पारस्करादित्वात्सुट् । अ-सुन्नन्तो वा प्रायश्शब्दः, छान्दसमाद्युदात्तत्वम् ॥

[6]ये पशुमिति ॥ पश्वर्थं ये विमथ्नीरन् विमाथं कलहं कु-र्वन्ति यस्तान् कामयेत एते आर्तिमार्छेयुरिति स आग्नीध्रे जुहु-यात् नमोवृक्तिशब्दवत्या 'कुविदङ्ग यवमन्तः'† इत्येतया ऋचा । सोनेन होमेन एषां विमाथकारिणां नमोवृक्ति वृङ्क्ते नमोन्नं तस्य वर्जनं वृङ्क्ते वर्जयति करोति । रायस्पोषं पुष्णातीति वद्रष्टव्यम् । यद्वा— तदेव वर्जनीयवृक्तिः तदेषां वर्जयति । ऊर्यादित्वेन गतित्वात् 'तादौ च' इति नमश्शब्दस्य प्रकृतिस्वरत्वम्, अव्ययपूर्वपदप्रकृतिस्वरत्वं वा । ततस्ते ताजक् तदानीमेव आर्तिमार्छन्ति नश्यन्ति । इयमृक्

---

* त–'प्रायः पापं विजानीयाच्चित्तं तस्य विनिष्कृतिः' इत्यधिकः पाठः.
† तै. सं. १-८-२१.[5]

जुहुयान्नमोवृक्तिमेवैषां वृङ्क्ते ताजगा-
र्तिमार्छन्ति ॥ १० ॥

अग्नीध्र इत्यग्नि-इध्रे । जुहुयात् । नमोवृक्तिमिति
नमः-वृक्तिम् । एव । एषाम् । वृङ्क्ते । ताजक् ।
आर्तिम् । एति । ऋच्छन्ति ॥ १० ॥

भूत्वा ततष्षड्विंशतिश्च ॥ ३ ॥

---

'स्वाहीं त्वा'* इत्यत्र व्याख्याता* । यथा तु खलु यवमुद्गव्रीह्यादि-बहुधान्यवन्तः पुरुषाः यवादीन् सहोत्पद्यमानान् अनुपूर्वं परिपाक्या वियूय पृथक्कृत्य परस्परतः काण्डफलादिभ्यो वा तुषकणादिभ्यो वा पृथक्कृत्य दधाति तथा यूयमपि हे देवाः इहेह सर्वत्र एषां भोजनानि कृणुत । केषाम्? ये अस्माकमुपकारिणः बर्हिषः यज्ञस्य नमोवृक्तिं अन्नस्य पशुलक्षणस्य दोषं विनाशं न जग्मुः न गताः न कुर्वन्ति । ये पुनर्नमोवृक्तिं कुर्वन्ति हविर्विनाशयन्ति तेषां भोजनानि मा कार्ष्ट ते तु तदभावेनानेन होमेन नश्यन्त्विति ॥

इति तृतीये प्रथमे तृतीयोनुवाकः.

---

*तै. सं. १-८-२१.[5]

प्रजापतेर्जायमानाः प्रजा जाताश्च
या इमाः। तस्मै प्रति प्र वेदय चि-
कित्वाꣳ अनु मन्यताम्। इमं पशुं

[1]प्रजापतेरिति प्रजा-पतेः। जायमानाः। प्रजा
इति प्र-जाः। जाताः। च। याः। इमाः। तस्मै।
प्रति। प्रेति। वेदय। चिकित्वान्। अन्विति। म-
न्यताम्। [2]इमम्। पशुम्। पशुपत इति पशु-

---

[1]अथ पशोरुपाकरणमन्त्रौ—प्रजापतेर्जायमाना इति द्वौ ॥ तत्र प्रथमोनुष्टुप्, द्वितीयस्त्रिष्टुप्। तत्र 'प्राजापत्या वै पशव-स्तेषां रुद्रोधिपतिः'* इति सर्वाः प्रजाः प्राजापत्याः प्रजापतेरप-त्यानि। रुद्रस्तु तासामधिपतिः। तत एव ताभ्यां मन्त्राभ्यां पशुं प्रति प्रवेदयति आत्मनोनपराधाय। मन्त्रार्थस्तु—जायमा-नाः जाताश्च या इमास्तास्सर्वाः प्रजापतेः प्रजाः अपत्यानि। तस्मात्तस्मै प्रजापतये प्रजानामुत्पादयित्रे प्रतिप्रवेदय प्रतिबोधय। हे पशो स चिकित्वान् एतज्ज्ञातवान् अनुमन्यतां त्वदालम्भनमनुजानातु। यद्वा—चिकित्वान् सर्वार्थज्ञः। कित ज्ञाने, छान्दसस्य लिटः क्वसुरादेशः, 'दीर्घादटि समानपादे' इति रुत्वम्॥

[2]अथ द्वितीयः—अत्र प्रत्यक्षवदुच्यते—हे पशुपते पशूनां स्वामिन् ते तव स्वभूतमिमं पशुं अद्येदानीं सुकृतस्यास्य कर्मणो मध्ये स्थाने बध्नामि। सूपमानात्क्तः इत्युत्तरपदान्तोदात्तत्वम्। हे

---

*तै. सं. ३-१-५[1].

पशुपते ते अद्य बध्नाम्यग्ने सुकृतस्य मध्ये । अनु मन्यस्व सुयजा यजाम जुष्टं देवानामिदमस्तु हव्यम् । प्रजानन्तः प्रति गृह्णन्ति पूर्वे प्राणमङ्गेभ्यः पर्याचरन्तम् ।

पते । ते । अद्य । बध्नामि । अग्ने । सुकृतस्येति सु-कृतस्य । मध्ये । अन्विति । मन्यस्व । सुयजेति सु-यजा । यजाम । जुष्टम् । देवानाम् । इदम् । अस्तु । हव्यम् । [3]प्रजानन्त इति प्र-जानन्तः । प्रतीति । गृह्णन्ति । पूर्वे । प्राणमिति प्र-अनम् । अङ्गेभ्यः । परीति । आचरन्तमित्या-चर-

---

अग्ने अग्निरूपेण स्थित भगवन् तदनुमन्यस्व अनुजानीहि । सुयजा सुष्ठु यष्ट्रा शोभनयागहेतुना । यजेर्विच् । अनेन पशुना देवान् यजाम । जुष्टं प्रियं देवानामिदं हव्यं हविरस्तु । 'नित्यं मन्त्रे' इति जुष्टशब्दः आद्युदात्तः । हवमर्हतीति दण्डादित्वात् यः । त्वया ह्ययमनुमतः सुयट् स्यात् । तथा च सति [इदं हव्यं देवानां प्रियं भवेदिति भावः] ॥

[3]जुहोति—प्रजानन्त इति पञ्चभिः ॥ तत्र प्रथमा त्रिष्टुप् । प्रजानन्तः देवाः पर्याचरन्तं परितः सर्वतो निष्क्रम्य आचरन्तं आभिमुख्येन गच्छन्तं तव प्राणं आत्मानं प्रतिगृह्णन्तु । ततः स्वर्गं

सुवर्गं याहि पथिभिर्देवयानैरोषं-
धीषु प्रति तिष्ठा शरीरैः । येषामीशे
॥ ११ ॥ पशुपतिः पशूनां चतुष्प-
दामुत च द्विपदाम् । निष्क्रीतोयं

न्तम् । सुवर्गमिति सुवः—गम् । याहि । पथिभि-
रिति पथि—भिः । देवयानैरिति देव—यानैः । ओ-
षधीषु । प्रतीति । तिष्ठ । शरीरैः । [4]येषाम् । ईशे ।
॥ ११ ॥ पशुपतिरिति पशु—पतिः । पशूनाम् ।
चतुष्पदामिति चतुः— पदाम् । उत । च । द्विपदा-
मिति द्वि—पदाम् । निष्क्रीत इति निः—क्रीतः ।

---

लोकं याहि गच्छ पथिभिर्देवयानैः देवा यैर्यान्ति तैः पथिभिः ओषधीषु शरीरैः शरीरावयवैः यज्ञार्थमोषध्यात्मना प्रतितिष्ठ प्रतिष्ठितो वर्तस्व । 'द्व्यचोतस्तिङः' इति दीर्घत्वम् ॥

[4]अथ द्वितीया—येषामिति त्रिष्टुप् ॥ येषां पशूनामीशे ईष्टे पशुपतिः । 'लोपस्त आत्मनेपदेषु' इति तलोपः । चतुष्पदां गवादीनां उत च अपि च द्विपदां मनुष्यादीनां च येषामीष्टे । 'संख्यासुपूर्वस्य' इति पादशब्दस्य लोपः, 'पादः पत्' इति पद्भावः, 'द्वित्रिभ्यां पद्दन्' इति द्विपदामित्यस्योत्तरपदान्तोदात्तत्वम् । तेभ्यो निष्क्रीतः निष्कृष्य परिगृहीतः अयं पशुः यज्ञियं यज्ञार्हं भागं एतु गच्छतु यज्ञभागतां प्रतिपद्यताम् । यद्वा—पशुपतेस्स्वभूतेभ्यः पशुभ्यो निष्क्रीतोयं निष्कृष्य क्रीतः

यज्ञियं भागमेतु रायस्पोषा यजमानस्य सन्तु । ये बध्यमानमनु बध्यमाना अभ्यैक्षन्त मनसा चक्षुषा च । अग्निस्ताꣳ अग्रे प्र मुमोक्तु देवः प्रजापतिः प्रजया सं वि-

अयम् । यज्ञियम् । भागम् । एतु । रायः । पोषाः । यजमानस्य । सन्तु । [5]ये । बध्यमानम् । अन्विति । बध्यमानाः । अभ्यैक्षन्तेत्यभि–ऐक्षन्त । मनसा । चक्षुषा । च । अग्निः । तान् । अग्रे । प्रेति । मुमोक्तु । देवः । प्रजापतिरिति प्रजा–पतिः । प्र-

---

यज्ञभुजां स्वभूतो भवतु । 'यज्ञर्त्विग्भ्याम्' इति घः । किं च— रायो धनस्य पशुलक्षणस्य पोषाः पुष्टयः यजमानस्य सन्तु, माऽपक्रमिषुः अस्मात्पशवः । 'ऊडिदम्' इति रायष्षष्ठ्या उदात्तत्वम्, 'षष्ठ्याः पति पुत्र' इति सत्वम् ॥

[5]अथ तृतीया—ये बद्ध्यमानमनु बद्ध्यमाना इति त्रिष्टुप् ॥ ये बध्यमानमिमं पशुं अनुबध्यमानाः हृदयेनानुरज्यमानाः अभ्यैक्षन्त आभिमुख्येन पश्यन्ति मनसा चक्षुषा च न जहति स्नेहानुषङ्गात् कारुण्याद्वा । छान्दसो लङ् । तान् सर्वान् अग्निर्देवः अग्रे प्रथमं प्रमुमोक्तु प्रमुञ्चतु ततो मानसाद्दुःखात् । मुचेः छान्दसश्शपश्श्लुः । प्रजापतिः प्रजानां पतिश्च ततस्तान् मुञ्चतु प्रजया ऐकमत्यं गत इत्यर्थः । 'समो गमृच्छि' इत्यात्मनेपदम् ॥

दानः । य आरण्याः पशवो विश्व-
रूपा विरूपास्सन्तो बहुधैकरूपाः ।
वायुस्ताँ अग्रे प्र मुमोक्तु देवः प्र-
जापतिः प्रजया संविदानः । प्रमुञ्च-

जयेति प्र–जया । संविदान इति सं–विदानः । [6]ये । आरण्याः । पशवः । विश्वरूपा इति विश्व–रूपाः । विरूपा इति वि–रूपाः । सन्तः । बहुधेति बहु–धा । एकरूपा इत्येक–रूपाः । वायुः । तान् । अ-ग्रे । प्रेति । मुमोक्तु । देवः । प्रजापतिरिति प्रजा–पतिः । प्रजयेति प्र–जया । संविदान इति सं–विदानः । [7]प्रमुञ्चमाना इति प्र–मुञ्चमानाः ॥१२॥

---

[6]अथ चतुर्थी—य आरण्या इति त्रिष्टुप् ॥ ये आरण्याः अरण्ये भवाः पशवः विश्वरूपाः सर्वरूपान्विताः विरूपाः विविधरूपाः । एवं बहुधा सन्तोपि एकरूपाः एकस्वभावाः नियतैकस्वभावाः अत एवेमं पशुं बध्यमानं अनुबध्यमाना मनसा चक्षुषा चाभ्यैक्षन्त । तान् सर्वान्वायुर्देवः प्रमुमोक्तु वायुरारण्यानां पशूनामधिपतिरिति भावः । शेषं समानम् । एतेन होमेन सर्वे पशवः तृप्ता भवन्त्विति ॥

[7]अथ पञ्चमी—प्रमुञ्चमाना इति त्रिष्टुप् ॥ प्रमुञ्चमानाः इमं पशुं त्यक्त्वा गच्छन्तः यूयं भुवनस्य भूतजातस्य रेतः कारणं

मानाः ॥ १२ ॥ भुवंनस्य रेतो गातुं धत्त यजंमानाय देवाः । उपाकृंतꣳ शशमानं यदस्थांज्जीवं देवानामप्येंतु पार्थः । नानां प्राणो यजंमान-

भुवंनस्य । रेतंः । गातुम् । धत्त । यजंमानाय । देवाः । उपाकृंतमित्युंप—आकृंतम् । शशमानम् । यत् । अस्थांत् । जीवम् । देवानांम् । अपीतिं । एतु । पार्थः । [8]नानां । प्राण इतिं प्र—अनः । य-

---

यागद्वारेणोत्पत्तिहेतुं हे देवाः प्राणाः एतस्य हन्यमानस्य पशोः यूयं यजमानाय गातुं गतिं धत्त दत्त पुण्यान् लोकान् गन्तुं मार्गं कुरुत । यद्वा—यजमानाय गातुं गमनं यजमानेन संगतिं धत्त कुरुत वधादवध्यमानं मा कार्ष्ट । किं च—उपाकृतमिमं पशुं शशमानं संगच्छत् सर्वानवयवान् व्याप्नुवत् । शशप्लुतगतौ उदात्तेत्, ताच्छीलिकश्चानश् । अत एव लसार्वधातुकानुदात्तत्वाभावः । यदत्र पशौ अस्थात् तिष्ठति तत्सर्वं पाथः अन्नं मांसलक्षणं देवानां जीवं प्राणं अप्येतु अनु प्रविशतु । एतदुक्तं भवति—पशोरस्य हन्यमानस्य प्राणाः यजमानस्येष्टावाप्तिहेतवः सन्तु, मांसं तु देवतानां स्थितये भवत्विति । तिष्ठतेश्छान्दसो लुङ्, 'गातिस्थ' इति सिचो लुक् ॥

[8]पशुं नीयमानमभिमन्त्रयते—नानेति त्रिष्टुभा ॥ नाना पृथग्भूतः पशुना पशुप्राणेन यजमानस्य प्राणः तेन तदन्वारम्भदो-

स्य पशुना यज्ञो देवेभिस्सह देव-
यानः । जीवं देवानामप्येतु पाथ-
स्सत्यास्सन्तु यजमानस्य कामाः ।
यत्पशुर्मायुमकृतोरो वा पद्भिराह-

जमानस्य । पशुना । यज्ञः । देवेभिः । सह । देव-
यान इति देव—यानः । जीवम् । देवानाम् । अ-
पीति । एतु । पाथः । सत्याः । सन्तु । यजमान-
स्य । कामाः । [9]यत् । पशुः । मायुम् । अकृत ।
उरः । वा । पद्भिरिति पत्—भिः । आहत इत्या—

षाभावः । 'मृत्यवे वा एष नीयते'* इत्यादि ब्राह्मणम् । यज्ञश्च देवेभिः देवैः पशुप्राणैस्सह देवयानः देवान् गन्ता देवानां जीवमप्येतु । पाथः पशुशरीरलक्षणमन्नं च देवानां जीवमप्येतु । ततश्च सत्या अवितथा यजमानस्य कामास्सन्तु ॥

[9]संज्ञप्ते संज्ञप्तहोमं जुहोति—यत्पशुरित्यनुष्टुभा ॥ अकृतेति प्रथमपादान्तः । मायुः दुःखहेतुकश्शब्दः । पद्भिश्च उरआहननं दुःखेन शब्दादिचिकीर्षा सर्वस्य पशोर्जायते, अशक्त्या तु शब्दादिकं तत्र न करोति । अत्र शब्दादिकरणेन तन्निमित्तं चिकीर्षा लक्ष्यते, तेन नित्यो विधिः सत्यसति वा शब्दकरणादौ भवति । अयमर्थः—यद्यस्माद्दुःखात् पशुर्मायुं शब्दं अकृत करोति । छान्दसो लुङ् । यस्माद्वा दुःखादुरः आत्मीयं पद्भिराहते आहन्ति अभिपीडयति एतदुभयं चिकीर्षति, तस्मात्ता-

* तै. सं. ३-१-५[4]

ते । अ॒ग्निर्मा॒ तस्मा॒देन॑सो॒ विश्वा॑-
न्मु॒ञ्च॒त्व॑ꣳह॑सः । शमि॑तार उ॒पेत॑न
य॒ज्ञम् ॥ १३ ॥ दे॒वेभि॑रि॒न्वि॒तम् ।
पाशा॑त्प॒शुं प्र मु॑ञ्चत ब॒न्धाद्य॒ज्ञप॑तिं

ह॒ते । अ॒ग्निः । मा॒ । तस्मा॑त् । एन॑सः । विश्वा॑त् ।
मु॒ञ्च॒तु॒ । अꣳह॑सः । [10]शमि॑तारः । उ॒पे॒त॒नेत्यु॑प-
एत॑न । य॒ज्ञम् ॥ १३ ॥ दे॒वेभि॑ः । इ॒न्वि॒तम् । पा-
शा॑त् । प॒शुम् । प्रेति॑ । मु॒ञ्च॒त॒ । ब॒न्धात् । य॒ज्ञप॑-

---

दृशदुःखोपादानप्रभवात् एनसः पापात् विश्वात् विश्वस्मात् । छान्दसः स्मादादेशाभावः । अंहसः पापतमात् । पुनश्श्रुत्या अतिशयो गम्यते । ईदृशात्पापादग्निर्मा मुञ्चतु ॥

[10]वपाश्रपणीभ्यां पशुमुपेतोऽध्वर्युर्यजमानश्च—शमितार इत्यनुष्टुभा । 'उपेतन' इति प्रथमपादान्तः ॥ हे शमितारः शमयितारः संस्कर्तारः । ण्यन्तात्तृचि 'शमिता यज्ञे' इति णिलोपो निपात्यते, आमन्त्रिताद्युदात्तत्वम् । उपेतन उपगच्छत यज्ञं प्रवर्तयतेति यावत् । एतेर्लोटि 'तप्तनप्तनथनाश्च' इति तस्य तनबादेशः, पित्त्वेन कित्त्वाभावाद्गुणः, एङि पररूपत्वम्, 'एत्येधत्यूठ्सु' इति वृद्धिर्व्यत्ययेन न प्रवर्तते, 'चादिलोपे विभाषा' इति निघाताभावः । आमन्त्रितस्याविद्यमानत्वात् आख्यातं न निहन्यते इति केचित् । उपसर्गस्य तिङन्तेऽनुप्रवेशात् धातोरुदात्तत्वे 'तिङि चोदात्तवति' इति गतेरनुदात्तत्वं, 'उदात्तवता तिङा' इति

परि । अदितिः पाशं प्र मुमोक्त्वेतं नमः पशुभ्यः पशुपतये करोमि । अरातीयन्तमधरं कृणोमि यं द्विष्मस्तस्मिन्प्रति मुञ्चामि पाशम् ।

तिमिति यज्ञ–पतिम् । परि । [11]अदितिः । पाशम् । प्रेति । मुमोक्तु । एतम् । नमः । पशुभ्य इति पशु–भ्यः । पशुपतय इति पशु–पतये । करोमि । [12]अरातीयन्तम् । अधरम् । कृणोमि । यम् । द्वि-

समासः । यज्ञो विशेष्यते—देवेभिः देवैः इन्वितं व्याप्तम् । इवि व्याप्तौ, इदित्त्वान्नुम् । किं च—इमं पशुं पाशात् प्रमुञ्चत, यज्ञपतिं यजमानं च बन्धात् सर्वस्माद्दणबन्धात् परिमुञ्चत सर्वतो मुञ्चत ॥

[11-12]पाशान्मुच्यमानं तमनुमन्त्रयते—अदितिरिति द्वाभ्यां जगतीत्रिष्टुब्भ्यां द्विपदाभ्याम् ॥ अदितिः अदीना पृथिवी देवमाता वा एतं पाशं प्रमुमोक्तु । पूर्ववच्छपश्श्लुः । पशुभ्यः पशुपतये च नमः करोमि नमस्करोमि अपराधनिवृत्त्यर्थम् । किंच—अरातीयन्तं अस्माकमरातित्वं कर्तुमिच्छन्तं, अरातिमिवाचरन्तं वा । व्यत्ययेन परस्मैपदम् । अधरं मत्तो न्यूनं करोमि अस्माभिरविदितं गूढशत्रुं अनेन बद्ध्वा निपातयामीति । अथ यं च वयं द्विष्मः यः प्रकाशोस्माभिर्विदितः अस्माकं शत्रुः तस्मिन्नेतं पाशं प्रतिमुञ्चामीति सोनेन बद्धो म्रियतामिति ॥

त्वामु ते दधिरे हव्यवाहꣳ शृतं-
कर्तारमुत यज्ञियं च । अग्ने सदक्ष-
स्सतनूर् हि भूत्वाऽथ हव्या जात-
वेदो जुषस्व । जातवेदो वपया ग-

च्छः । तस्मिन्न् । प्रतीति । मुञ्चामि । पाशम् । [13]त्वाम् । उ । ते । दधिरे । हव्यवाहमिति हव्य–वाहम् । शृतंकर्तारमिति शृतं–कर्तारम् । उत । यज्ञियम् । च । अग्ने । सदक्ष इति स–दक्षः । सतनुरिति स–तनुः । हि । भूत्वा । अथ । हव्या । जातवेद इति जात–वेदः । जुषस्व । [14]जातवेद इति जात–

[13]वपामभिजुहोति—त्वामु त इति त्रिष्टुभा ॥ उ इत्यवधारणे । ते देवाः, देवेभिरिन्वितामित्यत्र प्रकृतत्वात् । त्वामेव हव्यवाहं हविषां वोढारं दधिरे धारयामासुः कृतवन्त इत्यर्थः । वहतेर्ण्विः । शृतंकर्तारं शृतं पक्वं हविः कुर्वन्तम् । ‘नित्यं पक्वहविषोः’ इति शृभावः, पूर्वपदस्य मुमागमश्छान्दसः । उत अपि च यज्ञियं यज्ञसंपादनार्हं । ‘यज्ञर्त्विग्भ्याम्’ इति घः । हि यस्मादेवं तस्मात् अथेदानीमेव हे अग्ने सदक्षः सोत्साहः । दक्ष शैघ्र्ये । सतनुः सशरीरः दृढशरीरश्च भूत्वा हे जातवेदः जातप्रज्ञ जातानां वा वेदितः त्वमेवेदं कर्तुमर्हसि । तस्माद्धव्या हव्यानि जुषस्व प्रियस्व तानि वोढुम् । ‘शेश्छन्दसि’ इति शिलोपः । जातानि वेत्तीति ‘गतिकारकयोरपि’ इत्यसुन् ॥

[14]वपां जुहोति—जातवेद इति त्रिष्टुभा ॥ हे जातवेदः

च्छ देवान्त्वꣳ हि होता प्रथमो बभूथ । घृतेन त्वं तनुवो वर्धयस्व स्वाहाकृतꣳ हविरदन्तु देवाः । स्वाहा देवेभ्यो देवेभ्यस्स्वा-

वेदः । वपया । गच्छ । देवान् । त्वम् । हि । होता । प्रथमः । बभूथ । घृतेन । त्वम् । तनुवः । वर्धयस्व । स्वाहाकृतमिति स्वाहा-कृतम् । हविः । अदन्तु । देवाः । [15]स्वाहा । देवेभ्यः । [16]देवेभ्यः ।

---

वपया देवान् गच्छ वपासारं गृहीत्वा देवसकाशं गच्छ । कस्मादेवमुच्यते? इति चेत्—त्वं हि होता प्रथमः अस्मान्मनुष्यहोतुः पूर्वो बभूथ तस्मादेवं ब्रूमः । तस्मात्तादृशस्त्वं घृतेन तनुवः तनूः देवानां वर्धयस्व । ते च देवाः वर्धिततनवः स्वाहाकृतं स्वाहाकारेण हुतमिदं हविरदन्तु । यद्वा—स त्वं घृतेन तनुवः आत्मीयाः वर्धयस्व । किमर्थम्? स्वाहाकृतं हविर्देवा अदन्तु तदर्थं त्वयि हि वर्धमानतनौ देवा हविरत्तुं प्रभवन्तीति । 'तन्वादीनां छन्दसि बहुलम्' इति तनोरुवङादेशः । वृरण्यन्तस्य अचित्तवत्कर्तृकत्वात ण्यन्तात् 'अणावकर्मकात्' इति परस्मैपदाभावः । स्वाहाशब्दस्योर्यादित्वेन गतित्वात् 'गतिरनन्तरः' इति प्रकृतिस्वरत्वम्, निपाता आद्युदात्ताः ॥

[15]पूर्वं परिवप्यं जुहोति—स्वाहा देवेभ्य इति यजुषा ॥ स्वाहा हुतमिदमस्तु देवेभ्यः पुरस्तात्स्वाहाकृतिभ्य इति ॥

[16]उत्तरं जुहोति—देवेभ्यस्स्वाहेति यजुषैव ॥ देवेभ्यः उ-

हा ॥ १४ ॥

प्राजापत्या वै पशवस्तेषाꣳ रुद्रो-
धिपतिर्यदेताभ्यामुपाकरोति ता-

स्वाहा ॥ १४ ॥

ईशो प्रमुञ्चमाना यज्ञं त्वꣳ षोडश च ॥४॥

[1]प्राजापत्या इति प्राजा—पत्याः । वै । पशवः । तेषाम् । रुद्रः । अधिपतिरित्यधि—पतिः । यत् । एताभ्याम् । उपाकरोतीत्युप—आकरोति । ता-

परिष्टात्स्वाहाकृतिभ्यः स्वाहुतमस्त्विति । 'पुरस्तात्स्वाहाकृतयो वा अन्ये देवाः'* इत्यादि ब्राह्मणम् । तत्राभितो वपाया होमः स परितो वपां भवः परिवप्यः । द्वावप्येतौ एकार्थावेव मन्त्रौ । तत्र वपा भागिभिः अव्यवहितान् देवान् प्रतिपादयितुं प्रथमस्वाहाकारादिरभूत्, द्वितीयस्वाहाकारान्ता स्वाहाकारेण व्यवधानं मा भूदिति ॥

इति तृतीये प्रथमे चतुर्थोनुवाकः.

---

[1]अथ 'प्रजापतेर्जायमानाः'† इत्यादीनां मन्त्राणां ब्राह्मणम्— प्राजापत्या इत्यादि ॥ प्राजापत्याः प्रजापतेरपत्यभूताः सर्वेऽपि पशवः । तेषां सर्वेषामपि रुद्रोधिपतिः स्वामी । यद्यस्मादेता-भ्यां 'प्रजापतेर्जायमानाः',† 'इमं पशुम्'† इत्यनुवाकस्य प्रथमा-

*तै. सं. ३-१-५[8].  †तै. सं. ३-१-४[1-2].

भ्यांमेवैनं प्रतिप्रोच्या लभत आत्म-
नोनाव्रस्काय द्वाभ्यांमुपाकरोति द्वि-
पाद्यजमानः प्रतिष्ठित्या उपाकृ-
त्य पञ्च जुहोति पाङ्क्ताः पशवः पु-

भ्याम् । एव । एनम् । प्रतिप्रोच्येति प्रति-प्रोच्य । एति । लभते । आत्मनः । अनाव्रस्कायेत्यना-व्रस्काय । द्वाभ्याम् । उपाकरोतीत्युप-आकरोति । द्विपादिति द्वि-पात् । यजमानः । प्रतिष्ठित्या इति प्रति-स्थित्यै । [2]उपाकृत्येत्युप-आकृत्य । पञ्च । जुहोति । पाङ्क्ताः । पशवः । पशून् । एव । अवे-

भ्यां प्रजापतेः रुद्रस्य च प्रतिपादकाभ्यां पशुमुपाकरोति तस्मात्ताभ्यां देवाभ्यां पशूनां पितृस्वामिभ्यामेवैनं पशुं प्रतिप्रोच्य प्रत्यावेद्य आलभते । तदात्मनोनाव्रस्काय अनपराधाय भवति । अत्र व्रश्चतिं सकारोपधं पठन्ति । तस्माद्व्रश्चि कुत्वं, निमित्ताभावात् श्चुत्वं निवर्तते । अथ सङ्ख्यां विशिष्टफलहेतुत्वेन स्तौति—द्वाभ्यामिति । द्वित्वान्वयाद्विपदो यजमानस्य प्रतिष्ठित्यै भवति । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् । पादः प्रतिष्ठेति पर्यायौ । 'संख्यासुपूर्वस्य' इति पादस्य लोपः, 'द्वित्रिभ्यां पद्दन्' इत्युत्तरपदान्तोदात्तत्वम् ॥

[2]उपाकृत्येत्यादि ॥ पशूपाकरणानन्तरं प्रजानन्त इत्यादि पञ्च हव्यानि जुहोति । पङ्क्तिः पञ्चपदा तत्प्रभवाः पशवः । ततः पञ्चत्वान्वयेन तेऽवरुद्धा भवन्ति । पङ्क्तिशब्दादुत्सादित्वादञ् ॥

शूनेवाव रुन्धे मृत्यवे वा एष नी-
यते यत्पशुस्तं यदन्वारभेत प्रमायु-
को यजमानस्स्यान्नाना प्राणो यज-
मानस्य पशुनेत्याह व्यावृत्त्यै॥१५॥
यत्पशुर्मायुमकृतेति जुहोति शा-
न्त्यै शमितार उपेतनेत्याह यथा-

ति । रुन्धे । [3]मृत्यवे । वै । एषः । नीयते । यत् । पशुः । तम् । यत् । अन्वारभेतेत्यनु-आरभेत । प्रमायुक इति प्र-मायुकः । यजमानः । स्यात् । नाना । प्राण इति प्र-अनः । यजमानस्य । पशुना । इति । आह । व्यावृत्त्या इति वि-आवृत्त्यै ॥ १५ ॥ [4]यत् । पशुः । मायुम् । अकृत । इति । जुहोति । शान्त्यै । [5]शमितारः । उपेतने-

[3]मृत्यव इत्यादिना मारणार्थं नीयमानस्य पशोः अन्वारम्भः यजमानस्य पशुसमानधर्मतामावहेत्, अमङ्गल्यश्च भवति। ततश्च यजमानः प्रमायुको मरणशीलस्स्यात्। छान्दस उकञ्। तस्मादभिमन्त्रणं मन्त्रेण। नाना पृथग्भूतः प्राणो यजमानस्य पशुप्राणादिति यदाह तद्व्यावृत्त्यै यजमानस्य भवति। व्यावृत्तिः पृथग्धर्मता। पूर्ववद्वतेः प्रकृतिस्वरत्वम् ॥

[4]यत्पशुर्मायुमिति संज्ञप्ते जुहोति ॥ तदेनसः शान्त्यै भवति॥

[5]शमितार उपेतन इति वपाश्रपणीभ्यां पशुमुपेतः यजमानो-

यजुरेवैतद्वपायां वा आह्रियमाणा-
यामग्नेर्मेधोप क्रामति त्वामु ते द-
धिरे हव्यवाहमिति वपामभि जु-
होत्यग्नेरेव मेधमव रुन्धेऽथो शृत-

त्वाय । यथायजुरिति यथा-
यजुः । एव । एतत् । [6]वपायाम् । वै । आह्रिय-
माणायामित्या-ह्रियमाणायाम् । अग्नेः । मेधः ।
अपेति । क्रामति । त्वाम् । उ । ते । दधिरे । ह-
व्यवाहमिति हव्य-वाहम् । इति । वपाम् । अभी-
ति । जुहोति । अग्नेः । एव । मेधम् । अवेति ।
रुन्धे । अथो इति । शृतत्वायेति शृत-त्वाय ।

ध्वर्युश्च ॥ तत्र यथा यजुर्वदति बन्धाद्यज्ञपतिं परिमुञ्चतेति तथैवैतत्फलं भवति । यजमानस्य यजुर्वेदप्रभवत्वात् ऋगेव यजुरुच्यते ॥

[6]वपायामित्यादि ॥ वपाया आहरणकाले अग्निसकाशात् मेधः यज्ञः अपक्रामति तस्मात् 'त्वामु ते '* इति वपाहोमः तस्मिन् काले क्रियमाणस्य मेधस्यानपक्रमणाय भवति तेनाग्निरपक्रामन्तं मेधमवरुन्धे अनपक्रमणं करोति 'दधिरे '* इति मन्त्रपदात् । अथो अपि च शृतत्वाय पक्वत्वाय वपाया अभिहोमो भवति । 'शृतंकर्तारम्'* इति दर्शनात् ॥

*तै सं ३-१-४[13].

त्वाय पुरस्तात्स्वाहाकृतयो वा अ-
न्ये देवा उपरिष्टात्स्वाहाकृतयोन्ये
स्वाहा देवेभ्यो देवेभ्यस्स्वाहेत्यभि-
तो वपां जुहोति तानेवोभयान्प्री-
णाति ॥ १६ ॥

[7]पुरस्तात्स्वाहाकृतय इति पुरस्तात्–स्वाहाकृत-
यः । वै । अन्ये । देवाः । उपरिष्टात्स्वाहाकृतय
इत्युपरिष्टात्–स्वाहाकृतयः । अन्ये । स्वाहा ।
देवेभ्यः । देवेभ्यः । स्वाहा । इति । अभितः ।
वपाम् । जुहोति । तान् । एव । उभयान् ।
प्रीणाति ॥ १६ ॥

व्यावृत्त्या अभितो वपां पञ्च च ॥ ५ ॥

---

[7]अथ परिवप्यहोममन्त्रयोस्स्वाहाकारस्य स्थानव्यत्यासकारणं प्रदर्शयितुमाह—पुरस्तात्स्वाहाकृतयो वा इत्यादि ॥ 'जातवेदो वपया गच्छ देवान्'* इति ये वपाभाजो देवाः तैरात्मनोऽव्यवधानार्थं अन्ये ये देवाः वपाहोमात्पूर्वं भाविनः पुरस्तात्स्वाहाकृतयोभवन् पुरस्तात्स्वाहाकृतेन मन्त्रेण होमः । एवं कुर्वन् तानुभयान् देवान् प्रीणाति ॥

इति तृतीये प्रथमे पञ्चमोनुवाकः.

---

* तै. सं. ३-१-४[4].

यो वा अयथादेवतं यज्ञमुपचरत्या देवताभ्यो वृश्च्यते पापीयान्भवति यो यथादेवतं न देवताभ्य आ वृश्च्यते वसीयान्भवत्याग्नेय्यर्चाऽऽग्नी-

[1–5]यः । वै । अयथादेवतमित्ययथा–देवतम् । यज्ञम् । उपचरतीत्युप–चरति । एति । देवताभ्यः । वृश्च्यते । पापीयान् । भवति । यः । यथादेवतमिति यथा–देवतम् । न । देवताभ्यः । एति । वृश्च्यते । वसीयान् । भवति । आग्नेय्या । ऋचा । आग्नीध्रमित्याग्नि–इध्रम् । अभीति । मृशेत् । वैष्ण-

---

[1–5]यो वा इत्यादि ॥ या यस्य देवता तद्यथादेवतं, ततोन्यदयथादेवतम् । तृतीयाया आमादेशः । यथायथमनवगते देवतासम्बन्धे यज्ञसाधनैर्यो यज्ञमुपचरति अनुतिष्ठति स देवताभ्यः अज्ञाताभ्य आवृश्च्यते परिहीयते ततः पापीयान् भवति पापतरो भवति । यो यथादेवतमित्यादि । गतम् । वसीयान् वसुमत्तरः । आग्नेय्यर्चेत्यादि । 'अग्ने नय'* इत्याग्नेयी ऋक् । 'इदं विष्णुः'† इति वैष्णवी । 'अग्न आयूंषि'‡ इति ऋगाग्नेयी । 'आ वायो भूष'§ इति वायव्या । 'आघा ये अग्निमिन्धते'¶ इत्यैन्द्री । एवं कुर्वन् यथायथमवगताभिर्देवताभिः यज्ञमुपचरति ततो देवताभ्यो न वृश्च्यते

---

* सं १–१–१४.[9] † सं १–२–१३[4]. ‡ सं १–३–१४[23].
§ सं १–४–४[1]. ¶ ब्रा २–४–५.

ध्रमभि मृंशेद्वैष्णव्या हविर्धानैमाग्ने-
य्या स्रुचौ वायव्यया वायव्यान्यै-
न्द्रिया सदौ यथादेवतमेव यज्ञमुपं
चरति न देवताभ्य आ वृंश्चते व-
सीयान्भवति युनज्मि ते पृथिवीं ज्यो-
तिषा सह युनज्मि वायुमन्तरिंक्षेण
॥१७॥ ते सह युनज्मि वाच॑ँ स-

व्या । हविर्धानमितिं हविः–धानम् । आग्नेय्या । स्रुचः । वायव्यया । वायव्यानि । ऐन्द्रिया । सदः । यथादेवतमितिं यथा–देवतम् । एव । यज्ञम् । उ-पेतिं । चरति । न । देवताभ्यः । एतिं । वृश्चते । वसीयान् । भवति । [6]युनज्मि । ते । पृथिवीम् । ज्योतिषा । सह । [7]युनज्मि । वायुम् । अन्तरिंक्षे-ण ॥ १७ ॥ ते । सह । [8]युनज्मि । वाचम् । सह ।

---

वसीयान् भवति । आग्नेय्यादिषूदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वे 'उदात्तयणः' इति तृतीयाया उदात्तत्वम् ॥

[6–8]महापरिधीन् परिदधाति—युनज्मि त इति तिसृभिरेकपदाभिः जगतीभिः । तत्र मध्यमं—युनज्मीति ॥ हे अग्ने ते तव पृथिवीं पृथिवीस्थानीयं मध्यमं परिधिं ज्योतिषा दीप्त्या सह तव समीपे युनज्मि । यद्वा—हे मध्यमपरिधे अनेन यागेन पृथिवीं ज्योतिषा अग्निना सह युनज्मि दक्षिणं वायुमन्तरिक्षेण सह तव युनज्मि ।

ह सूर्येण ते युनज्मि तिस्रो विपृच-
स्सूर्यस्य ते । अग्निर्देवता गायत्री
छन्द उपाꣳशोः पात्रमसि सोमो
देवता त्रिष्टुप्छन्दोऽन्तर्यामस्य पात्रं-

सूर्येण । ते । [9]युनज्मि । तिस्रः । विपृच इति
वि-पृचः । सूर्यस्य । ते । [10]अग्निः । देवता । गा-
यत्री । छन्दः । उपाꣳशोरित्युप-अꣳशोः । पा-
त्रम् । असि । [11]सोमः । देवता । त्रिष्टुप् । छन्दः ।
अन्तर्यामस्येत्यन्तः-यामस्य । पात्रम् । असि ।

समानमन्यत् । उत्तरं सूर्येण सह वाचं तव युनज्मि । शिष्टं समानम् ॥

[9]स्रुचोऽभिमृशति—युनज्मि तिस्र इति जगत्यैकपदया ॥ युनज्मि तिस्रः स्रुचः जुहूपभृद्ध्रुवाः विपृचः विपृक्ताः पृथग्भूताः सूर्यस्य सोमस्य* सूर्यस्य सम्बन्धिनो वा तव संबन्धिनीः युनज्मि । त्वदर्थं वा ॥

[10]पात्राणि सादितान्यभिमृशति—अग्निर्देवतेत्यादिभिः ॥ दशैते मन्त्रा निगदव्याख्याताः । अग्निस्तव देवता, गायत्री छन्दः उपांशोः ग्रहस्य पात्रमसि त्वमिति । एवं सर्वत्र । 'उपाद्द्व्यजजिनम्' इत्युपांशुशब्दस्योत्तरपदान्तोदात्तत्वम् ॥

[11]अन्तर्यामग्रहस्य पात्रमसि । 'अन्तरपरिग्रहे' इति गतित्वात्ताथादिनोत्तरपदान्तोदात्तत्वम् ॥

*क—पावकस्य.

त्रम॒सीन्द्रो॑ दे॒वता॑ क॒कुच्छन्द॑ उ॒क्था॒-
ना॑ पात्र॑मसि पृ॒थि॒वी दे॒वता॑ वि॒रा-
ट्छन्दो॑ ध्रु॒वस्य॒ पात्र॑मसि ॥ ११ ॥
इ॒ष्ट॒र्गो वा अ॒ध्व॒र्युर्यज॑मानस्येष्ट॒र्गः

अ॒सि॒ । [18]इन्द्रः॑ । दे॒वता॑ । क॒कुत् । छन्दः॑ । उ॒क्था-
नाम्॑ । पात्र॑म् । अ॒सि॒ । [19]पृ॒थि॒वी । दे॒वता॑ । वि॒राडिति॑
वि-राट् । छन्दः॑ । ध्रु॒वस्य॑ । पात्र॑म् । अ॒सि॒ ॥ ११ ॥
अ॒न्तरि॑क्षेण बृ॒ह॒ती त्रय॑स्त्रि॒ꣳशाच्च ॥ ६ ॥

[1]इ॒ष्ट॒र्गः । वै । अ॒ध्व॒र्युः । यज॑मानस्य । इ॒ष्ट॒र्गः ।

---

[18]ककुप् उष्णिग्विशेषः । 'मध्ये चेद्द्वादशाक्षरः ककुप्'* । उक्थानां सम्बन्धिनः उक्थस्य ग्रहस्य पात्रं स्थाली वा ॥

[19]विराट् दशाक्षरा । ध्रुवस्य ग्रहस्य पात्रं स्थाल्यसि ॥

इति तृतीये प्रथमे षष्ठोनुवाकः.

---

[1]इष्टर्ग इत्यादि ॥ यागेन निमित्तेनार्तः प्रयोजयिता इष्टर्गः अध्वर्युः यजमानस्य । पृषोदरादिः । यजेरिष्टः, ऋच्छतेरर्गः । प्रमा-

---

*पि. सू. ३-१९. 'ककुम्मध्ये चेदन्त्यः' इति पाठः.

खलु वै पूर्वोर्ष्टुः क्षीयत आसन्या-
न्मा मन्त्रात्पाहि कस्याश्चिदभिश-
स्त्या इति पुरा प्रातरनुवाकाज्जुहुया-
दात्मन एव तदध्वर्युः पुरस्ताच्छर्म

खलु । वै । पूर्वः । अर्ष्टुः । क्षीयते । आसन्यात् ।
मा । मन्त्रात् । पाहि । कस्याः । चित् । अभिश-
स्त्या इत्यभि–शस्त्याः । इति । पुरा । प्रातर-
नुवाकादिति प्रातः–अनुवाकात् । जुहुयात् । आ-
त्मने । एव । तत् । अध्वर्युः । पुरस्तात् । शर्म ।

---

दालस्यादिना अध्वर्योरपचारेण तन्निमित्तेन वा परापचारादिना यजमानस्यार्तिमार्छति इष्टर्गः इत्येतदुक्तं * भवतीत्याचार्याः । दर्वीस्थानीय इत्येके । भवतु इष्टर्गस्य का क्षतिरिति चेदाह—इष्टर्गौ हि अर्ष्टुः आर्तिं गच्छतः पूर्वः क्षीयते प्रथममेव आर्तिं गच्छति; तन्निबन्धनत्वादार्तेः । ऋच्छतेस्तुः, षकारोपजनः छान्दसः । तस्मादध्वर्युणा आत्मनश्शर्मणे यत्कर्तव्यम् । तद्विदधाति—आसन्यादिति । महारात्र उत्थाय पुरा पुरस्तात्प्रातरनुवाकात् आग्नीध्रीये अनेन मन्त्रेण जुहुयात् । ततोध्वर्युरात्मन एवार्थं पुरस्तात् शर्म सुखं आर्त्यभावं नह्यते बध्नाति करोतीत्यर्थः, तद्यजमानस्याप्यनार्त्यै भवतीति । मन्त्रार्थस्तु—आसन्यात् आस्ये भवान्मन्त्रात् अभिचारमन्त्रात् । यद्वा—शापादिस्वरूपात् । आनुपूर्व्या व्या-

---

*क.—उष्णगृह इत्येवेदमुक्तम्.

नह्यतेऽनार्त्यै संवेशाय त्वोपवेशाय
त्वा गायत्रियास्त्रिष्टुभो जगत्या अभि-
भूत्यै स्वाहा प्राणापानौ मृत्योर्मा पा-

नह्यते। अनार्त्यै। [2-4]संवेशायेति सं-वेशाय। त्वा।
उपवेशायेत्युप-वेशाय। त्वा। गायत्रियाः। त्रि-
ष्टुभः। जगत्याः। अभिभूत्या इत्यभि-भूत्यै।
स्वाहा। [5]प्राणापानाविति प्राण-अपानौ। मृत्योः।
मा। पातम्। [6]प्राणापानाविति प्राण-अपानौ।

---

हरणेन वा आसन्यो मन्त्रः इत्याचार्याः। कस्याश्चित् कुतश्चित् अभिशस्त्या अभिशंसनात् पापात् मा पाहि। 'तादौ च' इति गतेः प्रकृतिस्वरत्वम्। आस्यशब्दस्य छान्दस आसन्भावः। अथ वै भवति यो वै छन्दोभिरभिभवति संसुन्वतोरभिभवतीति परस्परस्पर्धया कृतः संवादो विद्विषाणयोरेव एककाले यष्ट्रोः; न पितापुत्रादीनाम्। अतः परमान्तादनुवाकस्य तद्विषया मन्त्रा ब्राह्मणानि च॥

[2-4]तत्र संसुन्वतोर्यथा य इतरमभिबुभूषति स महारात्र उत्थायाग्नीध्रे तिस्रोभिभूतीर्जुहोति—संवेशाय त्वेत्यादिभिः॥ संवेशः शयनं उपवेशः आसनम्। तदर्थं गायत्र्या अभिभूत्यै। यया गायत्र्या विश्वमभिभवति तस्यै तदर्थम्। तद्वदहमपि प्रतिपक्षमभिभूयासम्। त्वां स्वाहुतं करोमीति। एवं त्रिष्टुब्जगत्योरपि। उभयत्रापि 'संवेशाय त्वा' इत्यादिकमनुषज्यते। संवे-

तं प्राणापानौ मा मां हासिष्टं दे-
वतासु वा एते प्राणापानयोः॥२०॥
व्यायच्छन्ते येषाꣳ सोमस्समृच्छते

मा । मा । हासिष्टम् । [7]देवतासु । वै । एते । प्राणापानयोरिति प्राण–अपानयोः ॥ २० ॥ व्यायच्छन्त इति वि–आयच्छन्ते । येषाम् । सोमः ।

---

शाय त्वोपवेशाय त्वा त्रिष्टुभोभिभूत्यै स्वाहा संवेशाय त्वोपवेशाय त्वा जगत्या अभिभूत्यै स्वाहा इति ॥

[5–6]अथ द्वे प्राणाहुती जुहोति—प्राणापानावित्यादि ॥ हे प्राणापानौ मा मृत्योः मरणात् पातं रक्षतम् । हे प्राणापानौ मा मा हासिष्टं त्यक्त्वा मां मा गच्छतम् । 'यमरमनमाताम्' इतिसागिटौ ॥

[7]अनयोर्मन्त्रयोर्ब्राह्मणम्—देवतास्वित्यादि ॥ एते खलु देवतासु प्राणापानयोः प्राणापाननिमित्तं व्यायच्छन्ते विप्रतिपद्यन्ते ममैतौ स्यातामिति । अकर्मसंयोगेऽपि हि सप्तमी दृश्यते यथा—'तस्यै पयसि व्यायच्छन्त'* इति । येषां सोमः समृच्छते संगच्छते स्पर्धया सोमान्तरेण सह सूयते । यद्वा—समृच्छते विनश्यति सोमान्तरेण संसर्गात् । 'समो गमृच्छि' इत्यात्मनेपदम् । यमेस्तु 'आङो यमहनः' इति तस्मादनेन मन्त्रेण प्राणापानयोरात्मनो लाभं प्रार्थयतः इति भावः ॥

---

*तै. ब्रा. २-१-६.

संवेशाय त्वोपवेशाय त्वेत्याह छ-
न्दाꣳसि वै संवेश उपवेशश्छन्दो-
भिरेवास्य छन्दाꣳसि वृङ्क्ते प्रेतिव-
न्त्याज्यानि भवन्त्यभिजित्यै मरु-

समृच्छत इति सं-ऋच्छते । [8]संवेशायेति सं-वे-
शाय । त्वा । उपवेशायेत्युप-वेशाय । त्वा । इ-
ति । आह । छन्दाꣳसि । वै । संवेश इति सं-
वेशः । उपवेश इत्युप-वेशः । छन्दोभिरिति छन्दः
-भिः । एव । अस्य । छन्दाꣳसि । वृङ्क्ते । [9]प्रेति-
वन्तीति प्रेति-वन्ति । आज्यानि । भवन्ति । अ-
भिजित्या इत्यभि-जित्यै । मरुत्वतीः । प्रतिपद

[8]अथ संवेशायेत्यादीनामभिभूतिमन्त्राणां ब्राह्मणम्—संवेशाय त्वेत्यादि ॥ तद्धेतुत्वात्ताच्छब्द्यम् । छन्दांसि वै संवेश उपवेश इति । संवेशोपवेशहेतवः छन्दांसीत्यर्थः । तस्मादीदृशैश्छन्दोभिः प्रथममेवाभिभूतिहोमेन आत्मसात्कृतैः कृतकृत्यः केन चिदनभिभवनीयः सुखी सम्पन्नोयं अस्य प्रतियष्टुस्सम्बन्धीनि छन्दांसि वृङ्क्ते वर्जयति तत्सकाशादपनयति ततः सोभिभूतो भवतीति । एवमेकयाजिनः । सत्रिणां तु पञ्चाभिभूतीर्विधास्यति—संवेशाय त्वोपवेशाय त्वा गायत्रियास्त्रिष्टुभो जगत्या अनुष्टुभः पङ्क्त्या अभिभूत्यै स्वाहा इति ॥

[9]संस्रुन्वतोरध्वर्यूणामुक्तम् । अथ छन्दोगानां विषय एवेदमुच्यते—

त्वतीः प्रतिपदो विजित्या उभे बृह-
द्रथन्तरे भवत इयं वाव रथन्तर-
मसौ बृहदाभ्यामेवैनमन्तरैत्यद्य वा-

इति प्रति-पदः । विजित्या इति वि-जित्यै । उ-
भे इति । बृहद्रथन्तरे इति बृहत्-रथन्तरे । भवतः ।
[10]इयम् । वाव । रथन्तरमिति रथं-तरम् । असौ ।
बृहत् । आभ्याम् । एव । एनम् । अन्तः । एति ।
अद्य । वाव । रथन्तरमिति रथं-तरम् । श्वः । बृ-

---

प्रेतिवन्तीति ॥ प्रेतिवन्ति चैतिवन्ति चेत्याचार्याः, ब्राह्मणान्तरे दर्श-
नात् 'एतिवन्ति'* इति । आज्यानि स्तोत्राणि प्रेतिवन्ति प्रगमनवन्ति,
एतिवन्ति आगमनवन्ति च भवन्ति 'प्र वो वाजाः,'† 'अग्न आ याहि'†
इति यथा । प्रकृष्टगत्यन्वयादभिजित्यै आभिमुख्येन जयाय भवति । यद्वा
प्रथममेव योभिजयस्तीत्सङ्घ्यै भवति । मरुत्वतीरिति । आज्यानां प्रतिप-
दः प्रथमा ऋचः मरुत्वतीः मरुत्वत्यः मरुच्छब्दवत्यो भवन्ति
यथा 'इन्द्रायेन्द्रो मरुत्वते'‡ इत्याद्याः । 'तसौ मत्वर्थे' इति
भत्वम् । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । 'मरुतो वै
देवानामपराजितमायतनम्'* इति प्रतिपत्सु मरुदन्वयः विजित्यै
विशेषेण जयाय भवति । पूर्ववद्गतेः प्रकृतिस्वरत्वम् । उभे
इति । उभे अपि बृहद्रथन्तरे सामनी भवतः ॥

[10]अथ ते प्रशंसति—इयमित्यादि ॥ इयं पृथिवी रथन्तरं,
असौ द्यौः बृहत्, तस्मादीदृशे उभे अपि सामनी गायेत् ।

---

*तै. ब्रा. १-४-६. †तै. ब्रा. ३-५-२. ‡ऋ. ७-१-४०.

व रथन्तरꣳ श्वो बृहदद्याश्वादेवैनम-
न्तरेति भूतम् ॥ २१ ॥ वाव रथ-
न्तरं भविष्यद्बृहद्भूताच्चैवैनं भवि-
ष्यतश्चान्तरेति परिमितं वाव रथ-
न्तरमपरिमितं बृहत्परिमिताच्चैवैन-
मपरिमिताच्चान्तरेति विश्वामित्र-

हत् । अद्याश्वादित्यद्य-श्वात् । एव । एनम् । अ-
न्तः । एति । भूतम् ॥ २१ ॥ वाव । रथन्तर-
मिति रथं-तरम् । भविष्यत् । बृहत् । भूतात् ।
च । एव । एनम् । भविष्यतः । च । अन्तः ।
एति । परिमितमिति परि-मितम् । वाव । रथ-
न्तरमिति रथं-तरम् । अपरिमितमित्यपरि-मितम् ।
बृहत् । परिमितादिति परि-मितात् । च । एव ।
एनम् । अपरिमितादित्यपरि-मितात् । च । अ-
न्तः । एति । [11]विश्वामित्रजमदग्नी इति विश्वामि-

---

आभ्यां द्यावापृथिवीभ्यां एनं शत्रुमन्तरेति अन्तरितं करोति आभ्यां प्रच्यावयति । यागनिर्वृत्तिद्वारेण द्यावापृथिव्यादीनां प्रवृत्तिहेतुत्वात् तादात्म्येन स्तुतिः । अद्याश्वादस्मादह्नः उत्तरस्मादह्नश्चेत्यर्थः । अद्य च श्वश्च अद्याश्वम् । 'अच्' इति योगविभागादच्समासान्तः, अव्ययानां भमात्रे टिलोपः, 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घत्वम् । परिमितात् देशादेः । इति छन्दोगानाम् ॥

[11]अथ होतॄणाम्—विश्वामित्रजमदग्नी इति ॥ वीर्यनिमित्तं स्प-

जमदग्नी वसिष्ठेनास्पर्धेतार्ं स एत-
ज्जमदग्निर्विहव्यमपश्यत्तेन वै स व-
सिष्ठस्येन्द्रियं वीर्यमवृङ्क्त यद्विहव्यर्ं
शस्यत इन्द्रियमेव तद्वीर्यं यजमा-
नो भ्रातृव्यस्य वृङ्क्ते यस्य भूयार्ं-

त्र—जमदग्नी । वसिष्ठेन । अस्पर्धेताम् । सः । एतत् ।
जमदग्निः । विहव्यमिति वि—हव्यम् । अपश्यत् ।
तेन । वै । सः । वसिष्ठस्य । इन्द्रियम् । वीर्यम् ।
अवृङ्क्त । यत् । विहव्यमिति वि—हव्यम् । श-
स्यते । इन्द्रियम् । एव । तत् । वीर्यम् । यजमा-
नः । भ्रातृव्यस्य । वृङ्क्ते । [12]यस्य । भूयार्ंसः ।

धौ कृतवन्तौ । तत्र जमदग्निवसिष्ठयोः स्पर्धया संसुन्वतोः ज-
मदग्निः एतद्विहव्यं अपश्यत् अस्त्रविशेषो विहव्यम् । 'अगस्त्य-
स्य कयाशुभीयं शस्यम्' इत्याचार्याः; ब्राह्मणान्तरे* दर्शनात् । तत्र
'सजनीयं'* सजनशब्दवन्मन्त्रो भवति । विहवे साधु विहव्यम्
इति । निष्केवल्ये 'इन्द्रस्य नु वीर्याणि'† इत्यस्य स्थाने 'यो जात
एव'‡ इति भवति । 'कयाशुभीयं'* कयाशुभाशब्दवत्, मरुत्वतीये
'कया शुभा सवयसस्सनीळाः'§ इति । इति होतॄणाम् ॥

[12]यस्येत्यादि ॥ यज्ञक्रतवः सोमयागाः भूयांसो बहुतराः

* सं. ७-५-५. † तै ब्रा २-५-४.
‡ सं. १-७-१३,[5] § ऋ. २-३-२४.

सो यज्ञक्रतव इत्याहुस्स देवता वृ-
ङ्क्ते इति यद्यग्निष्टोमस्सोमः परस्ता-
त्स्यादुक्थ्यं कुर्वीत यद्युक्थ्यस्स्यादं-
तिरात्रं कुर्वीत यज्ञक्रतुभिरेवास्यं

यज्ञक्रतव इति यज्ञ-क्रतवः । इति । आहुः । सः । देवताः । वृङ्क्ते । इति । [13]यदि । अग्निष्टोम इत्यंग्नि-स्तोमः । सोमः । परस्तात् । स्यात् । उक्थ्यम् । कुर्वीत । यदि । उक्थ्यः । स्यात् । अति-रात्रमित्यति-रात्रम् । कुर्वीत । यज्ञक्रतुभिरि-

---

महत्तराः । एतदुक्तं भवति—यस्य आत्मियः क्रतुः परकीयात्क्रतोर्भूयान्भवति स भूयःक्रतुः अल्पीयःक्रतोः देवता वृङ्क्ते इत्याहुः यज्ञविदः ॥

[13]तस्माद्यदि अग्निष्टोमः सोमः परस्तात्स्यात् परत्र प्रतियष्टरि स्यात् यद्यसावग्निष्टोमं कुर्यात् स्वयमुक्थ्यं ततो भूयांसं कुर्वीत। अथ यद्युक्थ्यस्सोमः परस्तात्स्यात् स्वयं ततो भूयांसं अतिरात्रं कुर्वीत । एवं यज्ञक्रतुभिरपि कृतैरेवास्य प्रतियष्टुः देवता वृङ्क्ते ततस्स देवताभिर्हीनो भवति। स्वयन्तु देवतावत्तया वसीयान् भवति वसुमत्तरो भवति । 'विन्मतोर्लुक्', 'टेः' इति टिलोपः ॥

देवता वृक्ते वसीयान्भवति ॥ २२ ॥
निग्राभ्यास्स्थ देवश्रुत आयुर्मे तर्प-
यत प्राणं मे तर्पयतापानं मे तर्प-
यत व्यानं मे तर्पयत चक्षुर्मे तर्प-

ति यज्ञक्रतु-भिः । एव । अस्य । देवताः । वृक्ते ।
वसीयान् । भवति ॥ २२ ॥

प्राणापानयोर्भूतं वृक्तेऽष्टाविंशतिश्च ॥ ७ ॥

[1]निग्राभ्या इति नि-ग्राभ्याः । स्थ । देवश्रुत
इति देव-श्रुतः । आयुः । मे । तर्पयत । प्राण-
मिति प्र-अनम् । मे । तर्पयत । अपानमित्यप-
अनम् । मे । तर्पयत । व्यानमिति वि-अनम् ।
मे । तर्पयत । चक्षुः । मे । तर्पयत । श्रोत्रम् ।

---

इति तृतीये प्रथमे सप्तमोनुवाकः.

---

[1]निग्राभ्यासु यजमानं वाचयति—निग्राभ्यास्स्थेति ॥ निगृह्य-
ते नियमेन गृह्यते सोम आभिरिति निग्राह्याः । 'कृत्यल्युटो
बहुलम्' इति करणे कृत्यः, 'हृग्रहोर्भः' इति भत्वम् । हे
आपः निग्राभ्याः स्थ । देवश्रुतः देवैश्श्रूयते इति कर्मणि

यत श्रोत्रं मे तर्पयत मनो मे तर्प-
यत वाचं मे तर्पयतात्मानं मे तर्प-
यताङ्गानि मे तर्पयत प्रजां मे तर्प-
यत पशून्मे तर्पयत गृहान्मे तर्पयत
गणान्मे तर्पयत सर्वगणं मा तर्पयत
तर्पयत मा ॥ २३ ॥ गणा मे मा

मे । तर्पयत । मनः । मे । तर्पयत । वाचम् । मे । तर्पयत । आत्मानम् । मे । तर्पयत । अङ्गानि । मे । तर्पयत । प्रजामिति प्र—जाम् । मे । तर्पयत । पशून् । मे । तर्पयत । गृहान् । मे । तर्पयत । गणान् । मे । तर्पयत । सर्वगणमिति सर्व—गणम् । मा । तर्पयत । तर्पयत । मा ॥ २३ ॥ गणाः । मे । मा ।

---

क्विप् । देवानामपि सदसि प्रख्याता इत्यर्थः । ता यूयं मे मम आयुस्तर्पयत वर्धयत । सर्वं निगदसिद्धम् । ण्यन्तात्पचाद्यच्, 'पुंसि संज्ञायाम्' इति वा घः । ते प्राणादयः । णेश्च लुक् । व्यानमिति । छान्दसं दीर्घत्वम् । आत्मानं शरीरम् । गणास्सम्बन्धिनो मित्रादयः । सर्वगणं सर्वैर्गणैस्संवृतम् । किं बहुना—मां सर्वदा तर्पयत । तिङः परत्वान्न निहन्यते । किं च—मे गणाः मा वितृषन् वितृष्णा मा भूवन् सस्नेहा एव नित्यं भूयासुः । पुषादित्वादङ् ॥

वि तृष्वन्नोषधयो वै सोमस्य विशो
विशः खलु वै राज्ञः प्रदातोरीश्वरा
ऐन्द्रस्सोमोऽवीवृधं वो मनसा सु-

वीति । तृष्वन् । [2]ओषधयः । वै । सोमस्य । विशः ।
विशः । खलु । वै । राज्ञः । प्रदातोरिति प्र-
दातोः । ईश्वराः । ऐन्द्रः । सोमः । अवीवृधम् ।
वः । मनसा । सुजाता इति सु-जाताः । ऋत-

[2]अभिप्रोष्यन् ओषधीभ्यो राजानं निर्याचते—अवीवृधं व इति त्रिष्टुभा । तस्येदं प्रथममेव ब्राह्मणम्—ओषधयो वा इत्यादि ॥ सोमस्य राज्ञः ओषधयो विशः प्रकृतयः । राज्ञश्च प्रदातोः राजानं प्रदातुं विशः खलु ईश्वरास्समर्थाः । तस्य तदधीनयोगक्षेमत्वात् । 'ईश्वरे तोसुन्कसुनौ' इति तोसुन् । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणस्सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी । यथा—'समुद्रस्य न पिबन्ति'* इति । 'न लोकाव्यय' इति कर्मणि षष्ठ्या न प्रतिषेधः । 'तोसुन्कसुनोरप्रतिषेधः' इति वचनात् । किं च—सोमोयमैन्द्रः इन्द्रदेवत्यः । तस्मात् 'अवीवृधम्' इत्यादिकामृचं यदाह सोमं याचमानं तेनौषधीभ्य एनं निर्याच्य निष्क्रुष्य याचित्वा अभिषुणोति । कीदृशीभ्यः? स्वायै विशः आत्मीयाभ्यः प्रकृतिभ्यः । व्यत्ययेनैकवचनं चतुर्थी च । किं च—स्वायै देवतायै आत्मीयायाश्च देवतायाः इन्द्रात् एनं निर्याच्याभिषुणोतीति । मन्त्रार्थस्तु—अवीवृधं वर्धयामि वः युष्मान् मनसा हे ओषधयः । छान्दसो लुङ्, 'उर्ऋत्'

*तै. ब्रा. २-२-९.

जाता ऋतंप्रजाता भग इद्वस्स्याम।
इन्द्रेण देवीर्वीरुधस्संविदाना अनु
मन्यन्ताꣳ सवनाय सोममित्याहौ-
षधीभ्य एवैनꣳ स्वायै विशस्स्वायै

प्रजाता इत्यृत—प्रजाताः । भगे । इत् । वः । स्याम । इन्द्रेण । देवीः । वीरुधः । संविदाना इति सं—विदानाः । अन्विति । मन्यन्ताम् । सवनाय । सोमम् । इति । आह । ओषधीभ्य इत्योषधि—भ्यः। एव । एनम् । स्वायै । विशः । स्वायै । देवतायै ।

---

इत्युपधाया ऋकारः । हे सुजाताः शोभनजन्मानः सर्वलोकहितार्थं जातत्वात् । हे ऋतप्रजाताः ऋतार्थं यज्ञार्थं प्रकृष्टं जन्म यासां तादृश्यः । आनुषङ्गिको हि लोकोपकारो भवतीनामिति भावः । पदादित्वात् षाष्ठिकमामन्त्रिताद्युदात्तत्वम् । वः युष्माकं भग इत् भजने एव सदा स्याम । यद्वा—युष्मत्सम्बन्धिनि यज्ञने भगे कर्मणि फललक्षणे ऐश्वर्ये स्याम सर्वे वयमृत्विग्यजमानाः प्रवर्तेमहि । तदर्थं किं कुर्म इति चेत् उच्यते— देव्यः देवनवत्यो भगवत्यः । पूर्ववत्पूर्वसवर्णदीर्घत्वम् । वीरुधः विविधं रोहन्त्यः । यद्वा—भगवत्यश्च वीरुधो लतादयश्च सर्वा इन्द्रेण संविदानाः प्रत्येकमिन्द्रेणैकमत्यं गताः । ‘समो गमृच्छि’ इत्यात्मनेपदम् । सवनाय यज्ञाय सोममनुमन्यन्तां यथा वयं

देवतायै निर्याच्याभिषुणोति यो वै
सोमस्याभिषूयमाणस्य ॥ २४ ॥
प्रथमोंऽशुस्स्कन्दति स ईश्वर इन्द्रि-
यं वीर्यं प्रजां पशून् यजमानस्य
निर्हन्तोस्तमभि मन्त्रयेता माऽस्का-

निर्याच्येति निः—याच्य । अभीति । सुनोति । [3]यः । वै । सोमस्य । अभिषूयमाणस्येत्यभि—सूय-मानस्य ॥ २४ ॥ प्रथमः । अंशुः । स्कन्दति । सः । ईश्वरः । इन्द्रियम् । वीर्यम् । प्रजामिति प्र—जाम् । पशून् । यजमानस्य । निर्हन्तोरिति निः—हन्तोः । तम् । अभीति । मन्त्रयेत । एति । मा । अस्कान् । सह । प्रजयेति प्र—जया । सह । रायः ।

---

भवतीभिः स्वयूथ्याभिः इन्द्रेण च स्वामिना सहिताभिः अनुज्ञाताः कर्मणि स्याम तथाऽनुमन्यन्तां सोममिति ॥

[3]यो वा इत्यादि ॥ अभिषूयमाणस्य अभिषवे क्रियमाणे सोमस्य यः प्रथमोंशुः स्कन्दति निपतति स यजमानस्य इन्द्रियं चक्षुरादिकं वीर्यं बलं प्रजां पुत्रादिकां पशूंश्च गवादींश्च निर्हन्तोः निष्कृष्य हन्तुमीश्वरस्समर्थस्स्यात् । पूर्ववत्तोसुन् । तस्मात्तत्परिहारार्थं तत्प्रथमं स्कन्नं अंशुमभिमन्त्रयते—आ माऽस्कानिति । मां अस्कान् आगतोसि सह प्रजया सह च रायो धनस्य पशुलक्षणस्य पोषेण पुष्ट्या । इत्थमभ्युदयायैव मदा-

न्त्सह प्रजया सह रायस्पोषेणेन्द्रियं
मे वीर्यं मा निर्वधीरित्याशिषमेवै-
तामा शास्त इन्द्रियस्य वीर्यस्य
प्रजायै पशूनामनिर्घाताय द्रप्सश्च-

पोषेण । इन्द्रियम् । मे । वीर्यम् । मा । निरिति ।
वधीः । इति । आशिषमित्या-शिषम् । एव । ए-
ताम् । एति । शास्ते । इन्द्रियस्य । वीर्यस्य । प्र-
जाया इति प्र-जायै । पशूनाम् । अनिर्घातायेत्य-
निः-घाताय । [4]द्रप्सः । चस्कन्द । पृथिवीम् । अ-

---

भिमुख्येन अस्कान् हे अंशो । 'ऊडिदम्' इति रायष्षष्ठ्या उदात्तत्वम्, 'षष्ठ्याः पतिपुत्र' इत्यादिना विसर्जनीयस्य सकारः । स त्वं मयीन्द्रियं वीर्यं च मा निर्वधीः । यद्वा— 'अस्कान्' इति लोडर्थे छान्दसो लुङ् । सह प्रजया सह रायस्पोषेण मामास्कन्द आगच्छेति । 'वदव्रज' इति वृद्धिः, 'बहुलं छन्दसि' इतीडभावः संयोगान्तलोपः । अनेन मन्त्रेण, 'आ माऽस्कान्' 'मा निर्वधीः' इत्येतामाशिषमाशास्ते इन्द्रियादीनामनिर्घाताय तद्भवति ॥

[4]द्रप्साननुमन्त्रयते—द्रप्सश्चस्कन्देति त्रिष्टुभा ॥ द्राणेन प्सानीयो भक्षणीयस्सर्वैरत्यल्पत्वाद्द्रप्सः । ईदृशो रसः पृथिवीमनु चस्कन्द, द्यामन्तरिक्षं वाऽनु चस्कन्द स्कन्नः रसभावेन प्रविष्टः। अधुना तस्य स्कन्नस्य इत्थं परिणामं करोमीति दर्शयितुमाह— तद्द्रप्सामिमं पृथिव्याख्ययोनिस्थानीयं अनु अनन्तरं यः पूर्वः पूर्व-

स्कन्द पृथिवीमनु द्यामिमं च योनिमनु यश्च पूर्वः । तृतीयं योनिमनु सञ्चरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः ॥ २५ ॥

न्विति । द्याम् । इमम् । च । योनिम् । अन्विति । यः । च । पूर्वः । तृतीयम् । योनिम् । अन्विति । सञ्चरन्तमिति सं–चरन्तम् । द्रप्सम् । जुहोमि । अन्विति । सप्त । होत्राः ॥ २५ ॥

तर्पयत माऽभिषूयमाणस्य यश्च दश च ॥८॥

स्यामृच्यव्यवहितः द्यामिति च पुनरन्तरिक्षाख्या योनिः तं च तृतीयं चादित्यात्मकं योनिं एवं त्रीनपि लोकाननु सञ्चरन्तं अनुक्रमेणाहुतिभावेन सञ्चरन्तम् । 'अग्नौ प्रास्ताहुतिस्सम्यगादित्यमुपतिष्ठते' इति प्रथममादित्ये सञ्चरन्तं, 'आदित्याज्जायते वृष्टिः' इत्यनन्तरमन्तरिक्षे सञ्चरन्तं, 'वृष्टेरन्नम्' इति पृथिव्यां सञ्चरन्तं, 'ततः प्रजाः' इत्यनेन क्रमेण अनुसंचरन्तं द्रप्सं जुहोमि हुतमिव प्रतिष्ठापयामि नासौ विनष्ट इत्यग्नौ हुतमिवैतत्करोमीति । ननु पृथिव्यामन्तरिक्षे वा वृथा निपतितः इति मन्तव्य इति क्वावस्थाप्यते—सप्त होत्राः अनुवषट्कर्तारो होत्रादयस्सप्त होत्राः तासु स्थापयामि यथाहुत इवायमनष्टो भवति । यद्वा—सप्त होत्राः सप्तदिशः स्कन्नव्यतिरिक्ताः तासु सर्वास्विमं जुहोमि हुतमिव लोकानां स्थितये स्थापयामि । लक्षणेऽर्थे अनोः कर्मप्रवचनीयत्वम् ॥

इति तृतीये प्रथमे अष्टमोनुवाकः.

यो वै देवान्देवयशसेनार्पयति मनुष्यान्मनुष्ययशसेनं देवयशस्येव देवेषु भवति मनुष्ययशसी मनुष्येषु यान्प्राचीनमाग्रयणाद्ग्रहान्गृह्णीयात्तानुपांशु गृह्णीयाद्यानूर्ध्वांस्तानुपब्दिमतो देवानेव तद्देवयशसेनार्प-

[1]यः । वै । देवान् । देवयशसेनेति देव-यशसेन । अर्पयति । मनुष्यान् । मनुष्ययशसेनेति मनुष्य-यशसेन । देवयशसीति देव-यशसी । एव । देवेषु । भवति । मनुष्ययशसीति मनुष्य-यशसी । मनुष्येषु । यान् । प्राचीनम् । आग्रयणात् । ग्रहान् । गृह्णीयात् । तान् । उपांश्वित्युप-अंशु । गृह्णीयात् । यान् । ऊर्ध्वान् । तान् । उपब्दिमत इत्युपब्दि-मतः । देवान् । एव । तत् । देवयशसेनेति देव-यशसेन । अर्पयति । मनुष्यान् । मनुष्यय-

[1]यो वै देवानित्यादि ॥ देवानां यशो देवयशसं स्वकीर्तिः बलं वा देवानां योग्यं यशः । 'अनसन्तान्नपुंसकात्' इत्यच्समासान्तः । अर्पयति प्रापयति । अर्तेर्णिचि 'अर्तिह्री' इत्यादिना पुक् । एवं मनुष्ययशसेनार्पयति । देवयशसीति । देवानां योग्येन यशसा देवानां मध्ये अतिशयेन तद्वान् भवति,

यति मनुष्यान्मनुष्ययशसेन देव-
यशस्येव देवेषु भवति मनुष्ययश-
सी मनुष्येष्वग्निः प्रातस्सवने पा-

शसेनेति मनुष्य–यशसेन । देवयशसीति देव–य-
शसी । एव । देवेषु । भवति । मनुष्ययशसीति
मनुष्य–यशसी । मनुष्येषु । [2]अग्निः । प्रातस्सवन
इति प्रातः–सवने । पातु । अस्मान् । वैश्वानरः ।

---

मनुष्ययशसी च मनुष्येषु भवति । 'चादिलोपे विभाषा' इति प्रथमो भवतिशब्दो न निहन्यते, विभाषेति वचनात् द्वितीयो निहन्यते । कथं पुनः क्रियमाणेन तेन तेऽर्पिता भवन्तीत्याह— यानित्यादि । आग्रयणाद्ग्रहात्प्राचीनं यान् ग्रहान् गृह्णीयात् । 'विभाषाश्चेरदिक्स्त्रियाम्' इति खः । तानुपांशु अव्यक्तमन्त्रं गृह्णीयात्, यानूर्ध्वान् तत उपरितनान् ग्रहान् तानुपब्दिमतः किंचिदुच्चशब्दवतो गृह्णीयात्; नात्युच्चशब्दान् । बदिर् निशमने, 'इन् सर्वधातुभ्यः' इत्युपपूर्वात् बदेश्छान्दस उपधालोपः । समीपस्थैर्यो निशम्यते न दूरस्थैः स उपब्दिश्शब्दविशेषः । तद्वतः उपब्दिमतः । 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् । 'उपाद्द्व्यजजिनम्' इत्युपांशुशब्दे उत्तरपदान्तोदात्तत्वम् । देवानित्यादि । तत् तेन तथाकरणेनेत्यर्थः । गतमन्यत् ॥

[2]यत्र बहिष्पवमानं साम आरब्धुमाग्नीध्रस्य पुरस्तात् प्रसृप्स्यन्तो भवन्ति तत्रान्वारब्धेषु तेषु आहवनीये स्रुवेणाहुतिं जुहोति—

त्वस्मान् वैश्वानरो महिना विश्व-
शंम्भूः । स नः पावको द्रविणं द-
धातु ॥ २६ ॥ आयुष्मन्तस्सहभ-
क्षास्स्याम । विश्वे देवा मरुत इ-
न्द्रो अस्मानस्मिन्द्वितीये सवने न

महिना । विश्वशंम्भूरिति विश्व—शम्भूः । सः । नः ।
पावकः । द्रविणम् । दधातु ॥२६॥ आयुष्मन्तः ।
सहभक्षा इति सह—भक्षाः । स्याम । [3]विश्वे । दे-
वाः । मरुतः । इन्द्रः । अस्मान् । अस्मिन् । द्वि-
तीये । सवने । न । जह्युः । आयुष्मन्तः । प्रियम् ।

---

अग्निः प्रातस्सवने इति त्रिष्टुभा ॥ अस्मिन् प्रातस्सवने अग्निः अस्मान् पातु रक्षतु वैश्वानरः विश्वेषां नराणां स्वामित्वेन सम्बन्धी । महिना महत्त्वेन विश्वशंभूः विश्वेषां सुखस्य भावयिता । महेरिनिप्रत्ययान्तात् 'सुपां सुलुक्' इति तृतीयाया आकारः । स नः अस्मभ्यं द्रविणं धनं दधातु ददातु पावकः अस्माकं शोधयिता । किञ्च—वयमायुष्मन्तः दीर्घायुषः सहभक्षाः भक्षयितृभिस्सह सर्वैः साहिताश्च सर्वदा स्याम ॥

[3]माध्यन्दिने पवमाने तथैवान्वारब्धेषु आहवनीये स्रुवाहुतिं जुहोति—विश्वे देवा इति त्रिष्टुभा ॥ विश्वे देवाः मरुतश्च इन्द्रश्चास्मानस्मिन् द्वितीये सवने न जह्युः माध्यन्दिने मा हासिषुः ।

जंह्युः । आयुंष्मन्तः प्रियमेषां व-
दन्तो वयं देवानाꣳ सुमतौ स्यांम ।
इदं तृतीयꣳ सवनं कवीनामृतेन
ये चमसमैरंयन्त । ते सौधन्वनास्सु-
वरानशानास्स्विष्टिं नो अभि वसी-

एषाम् । वदन्तः । वयम् । देवानाम् । सुमताविति
सु—मतौ । स्याम । [4]इदम् । तृतीयम् । सवनम् ।
कवीनाम् । ऋतेन । ये । चमसम् । ऐरंयन्त । ते ।
सौधन्वनाः । सुवः । आनशानाः । स्विष्टिमिति सु—

---

ततश्च वयमपि आयुष्मन्तस्सन्तः एषां देवानां प्रियं स्तोत्रश-
स्त्रादिकं वदन्तः देवानां सुमतौ कल्याणायां सानुग्रहायां बुद्धौ
स्याम । सुष्ठु मननं सुमतिः । कृदुत्तरपदप्रकृतिस्वरत्वम्, 'मन्त्रे
वृष' इति क्तिन उदात्तत्वम् ॥

[4]आर्भवे पवमाने तथैव समन्वारब्धेषु आहवनिये स्रुवाहुतिं
जुहोति—इदं तृतयिमिति त्रिष्टुभा ॥ इदं तृतीयं सवनं कवी-
नां मेधाविनामृत्विजां सम्बन्धि 'वसीयो नयन्तु' इति वक्ष्यमाणे-
न सम्बध्यते । नः अस्मान् अस्मदाभिमुख्येन इदं सवनं व-
सीयः वसुमत्तरं कृत्वा अस्मान् नयन्तु प्रापयन्तु । ते के?
ये ऋतेन सत्येन चमसं चमसान् । जातावेकवचनम् । ऐरयन्त
प्रेरितवन्तः कृतवन्त इत्यर्थः । ते सौधन्वनाः सुधन्वनः इन्द्र-
स्य सम्बन्धिनो देवाः ऋभुनामानः सुवः स्वर्गं आनशानाः व्या-

यो नयन्तु। आयतनवतीर्वा अन्या आहुतयो हूयन्तेऽनायतना अन्या या आघारवतीस्ता आयतनवतीर्याः ॥ २७ ॥ सौम्यास्ता अनाय-

इष्टिम्। नः। अभीतिं। वसीयः। नयन्तु। [5]आयतनवतीरित्यायतन–वतीः। वै। अन्याः। आहुतय इत्या–हुतयः। हूयन्ते। अनायतना इत्यना–यतनाः। अन्याः। याः। आघारवतीरित्याघार–वतीः। ताः। आयतनवतीरित्यायतन–वतीः। याः॥२७॥ सौम्याः। ताः। अनायतना इत्यना–यतनाः।

---

मुवन्तः इदं सवनं वसीयः कुर्वन्तु स्विष्टिं शोभनं च यागमस्माकं कुर्वन्तु। शोभना इष्टिः स्विष्टिः इति प्रादिसमासः, अव्ययपूर्वपदप्रकृतिस्वरत्वम्। गतिसमासे 'तादौ च' इति गतेः प्रकृतिस्वरत्वम्। 'उदात्तस्वरितयोर्यणः' इति संहितायां ततः परः इकारस्स्वर्यते। अश्नोतेर्लिटः कानजादेशः, 'अश्नोतेश्च' इति नुट्। वसीयश्शब्दो व्याख्यातः* ॥

[5]आयतनवतीरित्यादि ॥ आयतनवतीः आयतनवत्यः विभक्तावकाशं स्थानमायतनं तद्वत्यः अन्याः काश्चिदाहुतयः हूयन्ते, काश्चिदनायतना एव हूयन्ते। 'एकान्याभ्यां समर्थाभ्याम्' इति प्रथमा तिङ्विभक्तिर्न निहन्यते। काः पुनस्ता उभय्य इत्याह—

---

* सं ३–१–६.[1–5]

तना ऐन्द्रवायवमादायाघारमाघार-
येदध्वरो यज्ञोऽयमस्तु देवा ओष-
धीभ्यः पशवे नो जनाय विश्वस्मै
भूतायाध्वरोसि स पिन्वस्व घृतवं-
द्देव सोमेति सौम्या एव तदाहुती-
रायतनवतीःकरोत्यायतनवान्भवति

ऐन्द्रवायवमित्यैन्द्र-वायवम् । आदायेत्या-दाय ।
आघारमित्या-घारम् । एति । घारयेत् । अध्वरः ।
यज्ञः । अयम् । अस्तु । देवाः । ओषधीभ्य इत्यो-
षधि-भ्यः । पशवे । नः । जनाय । विश्वस्मै ।
भूताय । अध्वरः । असि । सः । पिन्वस्व । घृत-
वदिति घृत-वत् । देव । सोम । इति । सौम्याः ।
एव । तत् । आहुतीरित्या-हुतीः । आयतनवती-
रित्यायतन-वतीः । करोति । आयतनवानित्या-
यतन-वान् । भवति । यः । एवम् । वेद । अथो

---

या इत्यादि । आघारवतीः आघारोक्षणया होमः, तद्वत्यो या आहुतयः आज्यपुरोडाशादीनां ता आयतनवत्यः । यास्सौम्याः सोमाहुतयः ता अनायतनाः, अघाराभावात् । 'सोमाट्ट्यण्' । तत्र ऐन्द्रवायवमादाय जुहोति—अध्वरो यज्ञ इति त्रिष्टुभा । आघारे दक्षिणं परिधिसन्धिमन्ववहृत्य प्राञ्चमुदञ्चमाघारयेत् । तेन

य एवं वेदाथो द्यावापृथिवी एव
घृतेन व्युंनत्ति ते व्युंत्ते उपजीवनीये
भवत उपजीवनीयो भवति ॥२८॥
य एवं वेदैष ते रुद्र भागो यं निर-

इति । द्यावापृथिवी इति द्यावा–पृथिवी । एव ।
घृतेन । वीति । उनत्ति । ते इति । व्युत्ते इति वि–
उत्ते । उपजीवनीये इत्युप–जीवनीये । भवतः ।
उपजीवनीय इत्युप–जीवनीयः । भवति ॥ २८ ॥
यः । एवम् । वेद । [6]एषः । ते । रुद्र । भागः ।

सौम्या अप्याहुतीरायतनवतीः करोति । य एवं वेदिता आयतनवान् गृहवान् भवति । मन्त्रार्थस्तु—अयं यज्ञः अध्वरः हिंसकरहितः अस्तु हे देवाः । किमर्थम्? ओषधीभ्यः, पशवे पशुभ्यः, । जातावेकवचनम् । नः अस्माकं जनाय पुत्रादये । किं बहुना—विश्वस्मै भूताय सर्वस्मै भूतजाताय । किं च—अध्वरस्त्वमसि । हे देव सोम त्वं घृतवत् घृतार्हं घृतयुक्तं वा अस्मान् पिन्वस्य प्रीणय । पिवि प्रीणने, इदित्त्वान्नुम् । अथो अपि च अनेनाचारेण द्यावापृथिवी एव घृतेन उदकेन व्युनत्ति विविधं क्लेदयति । ते व्युत्ते क्लेदिते उपजीवनीये सर्वेषां भवतः । उन्दी क्लेदने, 'श्वीदितो निष्ठायाम्' इतीड्प्रतिषेधः, 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम्, 'उदात्तस्वरितयोर्यणः' इति ततः परस्य संहितायां स्वरितत्वम् । एवं वेदिता उपजीवनीयो भवति बन्धूनामिति ॥

[6]प्रतिप्रस्थाता उत्तरार्धे आहवनीयस्य मन्थिनस्संस्रावं जुहोति—

याचथास्तं जुषस्व विदेर्गौपत्यꣳ रायस्पोषꣳ सुवीर्यꣳ संवत्सरीणाꣳ स्वस्तिम् । मनुः पुत्रेभ्यो दायं व्यं-

यम् । निरयाचथा इति निः-अयाचथाः । तम् । जुषस्व । विदेः । गौपत्यम् । रायः । पोषम् । सु-वीर्यमिति सु-वीर्यम् । संवत्सरीणामिति सं-व-त्सरीणाम् । स्वस्तिम् । [7]मनुः । पुत्रेभ्यः । दायम् ।

---

एष ते रुद्र भाग इति ॥ हे रुद्र एष संस्रावभागः । यं त्वं निरयाचथाः निष्कृष्य देवेभ्यः स्वतन्त्रमयाचथाः 'यज्ञे माऽऽ-भजाथ ते पशून्नाभि मंस्ये'* इति । सोयं त्वदीयो भागः, तं जुषस्व सेवस्व विदेः वेदय लम्भय । विदेरन्तर्भावितण्यन्ताल्लिङि छान्दसो नुमभावः । ण्यन्तादेव वा लिङि 'बहुलं संज्ञाछन्दसोः' इति णिलुक् । यद्वा—विदेः विद्याः । वेत्तेर्विकरणव्यत्ययेन शः । गौपत्यादिकमस्मान् लम्भय । गौपत्यादिलक्षणं वा आ-त्मीयं माहात्म्यं अनेन होमेन वेदितुमर्हसीति । गौपत्यं गवां स्वामित्वम् । पतिलक्षणो ण्यत् । रायो धनस्य पश्वादेः पोषं पुष्टिं कीदृशं? सुवीर्यं शोभनपुत्रादि बलम् । पूर्ववत्सत्वम्, स्वरश्च । संवत्सरीणां संवत्सरभाविनीं स्वस्तिं अविनाशम् । 'संपरिपूर्वात्ख च' इति खः ॥

[7]अथैतस्य मन्थिसंस्रावहोमस्य ब्राह्मणम्—मनुः पुत्रेभ्य इत्या-

---

* सं. ३-१-९.[9]

भजत्स नाभानेदिष्ठं ब्रह्मचर्यं वसन्तं
निरंभजत्स आऽगंच्छत्सोंऽब्रवीत्कथा
मा निरंभागिति न त्वा निरंभाक्ष-

वीति । अभजत् । सः । नाभानेदिष्ठम् । ब्रह्मच-
र्यमिति ब्रह्म–चर्यम् । वसन्तम् । निरिति । अभ-
जत् । सः । एति । अगच्छत् । सः । अब्रवीत् ।
कथा । मा । निरिति । अभाक् । इति । न ।

दि ॥ मनुः प्रजापतिः आत्मीयेभ्यः पुत्रेभ्यो दायं व्यभजत ।
क्रयादिभिर्विनाऽपि पित्रादिसकाशात्पुत्रादिभिः प्राप्यं धनं दायः ।
स पुत्रेभ्यः तद्व्यभजत् मनुः । नाभानेदिष्ठं नाम पुत्रं ब्रह्मचर्यं
वसन्तं ब्रह्म वेदः तदर्थानां व्रतानां चरणं ब्रह्मचर्यम् । 'गद
मदचर' इति यत् । तदुपसंप्राप्य वसन्तम् । यद्वा—ब्रह्म-
चर्यं निषेवमाणं निरभजत् निर्भागमकरोत् । भानां नेदिष्ठः
प्रत्यासन्नतमः भानेदिष्ठः न भानेदिष्ठः अभानेदिष्ठः, तद्विपरीतः नाभा-
नेदिष्ठः तेजस्वितमः । व्युत्पत्तिमात्रमिदम् । संज्ञैषा तत्रभवतः ।
अत एव नावगृह्यते । 'अयं नाभा वदति'* इत्यत्र तु एकदेशस्य
ग्रहणं यथा भीमसेनो भीम इति । तत्र व्यत्ययेन पूर्वोत्तरप-
दयोर्युगपत्प्रकृतिस्वरत्वम् । वनस्पत्यादिर्वा द्रष्टव्यः । सः नाभा-
नेदिष्ठः समाप्तब्रह्मचर्य आगच्छत्, आगत्य च सोऽब्रवीत् पित-
रम् । कथा केन हेतुना मां निरभाक् निर्भागमकार्षीः इति ।
'था हेतौ च छन्दसि' इति थाप्रत्ययः । भजेर्लुङि 'वद-
व्रज' इति वृद्धौ 'बहुलं छन्दसि' इतीडभावे इतश्च लोपः,

*ऋ. सं. ८-२-१-४.

मित्यंब्रवीदङ्गिरस इमे सत्त्रमासते
ते ॥ २१ ॥ सुवर्गं लोकं न प्र जा-
नन्ति तेभ्यं इदं ब्राह्मणं ब्रूहि ते
सुवर्गं लोकं यन्तो य एषां पशव-
स्ताꣳस्ते दास्यन्तीति तदेभ्योऽब्र-

त्वा । निरिति । अभाक्षम् । इति । अब्रवीत् ।
[8]अङ्गिरसः । इमे । सत्रम् । आसते । ते ॥ २१ ॥
सुवर्गमिति सुवः—गम् । लोकम् । न । प्रेति ।
जानन्ति । तेभ्यः । इदम् । ब्राह्मणम् । ब्रूहि । ते ।
सुवर्गमिति सुवः—गम् । लोकम् । यन्तः । ये ।
एषाम् । पशवः । तान् । ते । दास्यन्ति । इति ।
तत् । एभ्यः । अब्रवीत् । ते । सुवर्गमिति
सुवः—गम् । लोकम् । यन्तः । ये । एषाम् ।

---

हल्ङ्यादिसंयोगान्तलोपे अभागिति रूपम् । अथ न त्वा निर-भाक्षं निर्भागमकार्षमिति पिताऽब्रवीत् ॥

[8]कस्तर्हि मम भाग इति चेत्तदपि ब्रूमः—अङ्गिरस इमे सत्त्रमासते सत्रमुपसंप्राप्यासते सत्रयागं कुर्वन्ति, ते सुवर्गं लोकं न प्रजानन्ति तज्ज्ञानसाधनानामज्ञानात् । तेभ्य इदं ब्राह्मणं ब्रूहि ततस्ते ब्राह्मणोक्तार्थानुष्ठानेन सुवर्गं लोकं यन्तः ये एषां तदात्वे पशव आसन् सहस्रसङ्ख्याः तांस्ते सत्रान्ते दास्यन्ति स

वीत्ते सुवर्गं लोकं यन्तो य एषां प-
शव आसन्तानस्मा अददुस्तं पशु-
भिश्चरन्तं यज्ञवास्तौ रुद्र आऽगच्छ-
त्सोऽब्रवीन्मम वा इमे पशव इत्य-
दुर्वै ॥ ३० ॥ मह्यमिमानित्यब्रवीन्न
वै तस्य त ईशत इत्यब्रवीद्यद्यज्ञवा-

पशवः । आसन् । तान् । अस्मै । अद-
दुः । [9]तम् । पशुभिरिति पशु-भिः । चरन्तम् ।
यज्ञवास्ताविति यज्ञ-वास्तौ । रुद्रः । एति । अग-
च्छत् । सः । अब्रवीत् । मम । वै । इमे । पशवः ।
इति । अदुः । वै ॥ ३० ॥ मह्यम् । इमान् । इति ।
अब्रवीत् । न । वै । तस्य । ते । ईशते । इति ।
अब्रवीत् । यत् । यज्ञवास्ताविति यज्ञ-वास्तौ ।

---

ते भाग इति पिता पुत्रमब्रवीत् । स च पुत्रः तेभ्यः ब्रा-
ह्मणमब्रवीत् । ते सुवर्गमित्यादि । गतम् । किं पुनस्तद्ब्राह्मणं।
उच्यते—अवाप्यानि सन्तीति द्रप्सा अनुमन्त्रणीया अच्छावा-
क्यास्स्तोत्रियाश्शस्त्रियास्सत्यवदनश्रद्धाहोमादिनादिति[?] ॥

[9]तमित्यादि ॥ यज्ञवास्तौ यज्ञगृहे पशुभिस्सह चरन्तं रुद्र
आगच्छत्, आगत्य चाब्रवीत्—मम स्वभूता इमे एते पशव
इति । अथादुर्वै मह्यमिमान् पशूनङ्गिरसः इति देवमब्रवीत् ।

स्तौ हीयते मम वै तदिति तस्मा-
द्यज्ञवास्तु नाभ्यवेत्यꣳ सोऽब्रवीद्यज्ञे
माऽऽ भजाथ ते पशून्नाभि मꣳस्य
इति तस्मा एतं मन्थिनस्संꣳस्राव-
मजुहोत्ततो वै तस्य रुद्रः पशून्ना-

हीयते । मम । वै । तत् । इति । तस्मात् । यज्ञ-
वास्त्विति यज्ञ—वास्तु । न । अभ्यवेत्यमित्यभि—
अवेत्यम् । सः । अब्रवीत् । यज्ञे । मा । एति ।
भज । अथ । ते । पशून् । न । अभीति । मꣳ-
स्ये । इति । तस्मै । एतम् । मन्थिनः। सꣳस्राव-
मिति सं—स्रावम् । अजुहोत् । ततः । वै । तस्य।

मानवः अद्रुरिति वा । पदादित्वान्न निहन्यते । अथ समाप्ते यागे तेषां पशूनां स्वामित्वं अङ्गिरसां नास्ति । ततोस्वामिदत्तैः कोर्थस्तवेति दर्शयितुं देव आह—न वा इति । यज्ञवास्तौ यद्धीयते कृतकार्यत्वात् यज्ञसाधनभावं हित्वा तिष्ठति तस्य ते नेशते स्वामिनो न भवन्ति । न केवलं पशूनामेव, अन्यस्यापि यस्य कस्यचित् यागोपयुक्तस्य नेश्वरा इति प्रतिपादयितुं यदि-त्युक्तम् । कस्य तर्हि स्वं तदिति जिज्ञासायामाह—ममेति । कृत-कार्यं तत्पूर्वभाविनो ममैव स्वमिति सिद्धमेवैतत् इति । यागार्थं प्रथमं पशवः पशुमध्यान्निष्क्रीयन्ते । यागोत्तरं तु पश्वन्तरसमा-नधर्मतां भजन्ते । उक्तं च—'अनु मन्यस्व सुयजा यजाम '* इति ।

*सं. ३-१-४.2

भ्यंमन्यत यत्रैतमेवं विद्वान्मन्थि-
नंस्सꣳस्रावं जुहोति न तत्रं रुद्रः
पशूनभि मंन्यते ॥ ३१ ॥

रुद्रः । पशून् । न । अभीति । अमन्यत । [10]यत्रं ।
एतम् । एवम् । विद्वान् । मन्थिनंः । सꣳस्रावमि-
ति सं-स्रावम् । जुहोति । न । तत्रं । रुद्रः । प-
शून् । अभीति । मन्यते ॥ ३१ ॥

दधात्वायतंनवतीर्या उपजीवनीयो भवति
तेऽदुवैं यत्रैतमेकादश च ॥ ९ ॥

---

त्वदनुमत्या हि पशोर्यागसाधनभावोपि भवतीति । तस्मादित्यादि । यस्मादेवं तस्मात्स्वामिनोनुज्ञामन्तरेण यज्ञवास्तु नाभ्यवेत्यं न प्रवेष्टव्यं अहोरात्राविल्येवं यावदग्नयश्शीतास्स्युरित्येके । यावदेनमभिवर्षेदि-त्यपरे । यज्ञाङ्गभागो निषिद्ध्यते इत्येके । व्यतिरिक्तविषयमि-त्यन्ये । आहुश्च—'न यज्ञमतिव्रजेत्' इति । अथ सोब्रवीत् देवः यज्ञे मा भज येन केनचिद्धविषा मामाराधयन्नाश्रय । अथ यदि तथा क्रियते ततस्ते पशून् त्वया लब्धान् पशून् नाभिमंस्ये न विनाशयिष्यामि मदीयानामेतल्लाभं सोढाऽस्मीति तस्मा इति । अजुहोत् अहावयत् ॥

[10]यत्रैतमित्यादि ॥ गतम् ॥

इति तृतीये प्रथमे नवमोनुवाकः.

---

जुष्टो वाचो भूयासं जुष्टो वाचस्प-
तये देवि वाक् । यद्वाचो मधुमत्त-
स्मिन्मा धास्स्वाहा सरस्वत्यै । ऋ-
चा स्तोमꣳ समर्धय गायत्रेण रथ-

[1]जुष्टः । वाचः । भूयासम् । जुष्टः । वाचः । पतये । देवि । वाक् । यत् । वाचः । मधुमदिति मधु-मत् । तस्मिन्न् । मा । धाः । स्वाहा । सरस्वत्यै । [2]ऋचा । स्तोमम् । समिति । अर्धय । गायत्रेण । रथन्तरमिति रथं-तरम् । बृहत् । गा-

---

[1]अथ प्रवृताहुती जुहोति—जुष्टो वाचः, ऋचा स्तोममिति द्वाभ्याम् । प्रथमाऽनुष्टुप् विषमपादा, द्वितीया गायत्री ॥ जुष्टः इष्टः वाचः भूयासम् । वाचस्पतये मनसे प्राणाय जुष्टः भूयासमित्येव । षष्ठ्यर्थे चतुर्थी । 'सावेकाचः' इति वाचः षष्ठ्या उदात्तत्वम् । 'षष्ठ्याः पतिपुत्र' इति सत्वम् । 'नित्यं मन्त्रे' इति जुष्टशब्द आद्युदात्तः । हे देवि वाक् यद्वाचः पदं वास्तवं मधुमत् मधुरं तस्मिन् मा धाः धेहि स्थापय । सरस्वत्यै तुभ्यं स्वाहुतमिदमस्तु । दधातेर्लोटि 'बहुलं छन्दसि' इति शपो लुक् ॥

[2]अथ द्वितीया—ऋचा योनिभूतया स्तोमं स्तोत्रं समर्धय समृद्धिं कुरु । गायत्रेण साम्ना रथन्तरं समर्धय । बृहच्च साम गायत्रवर्तनि गायत्रपदभक्तिकं समर्धय तदनुगतं कुर्विति समर्धय

न्तरम् । बृहद्गायत्रवर्तनि । यस्ते
द्रप्सस्स्कन्दति यस्ते अꣳशुर्बाहुच्यु-
तो धिषणयोरुपस्थात् । अध्वर्योर्वा
परि यस्ते पवित्रात्स्वाहाकृतमिन्द्रा-

यत्रवर्तनीति गायत्र–वर्तनि । [3]यः । ते । द्रप्सः । स्कन्दति । यः । ते । अꣳशुः । बाहुच्युत इति बाहु–च्युतः । धिषणयोः । उपस्थादित्युप–स्थात् । अध्वर्योः । वा । परीति । यः । ते । पवित्रात् । स्वाहाकृतमिति स्वाहा–कृतत् । इन्द्राय । तम् ।

---

हे वाक् । प्रवृतेषु ऋत्विक्षु सम्यग्यज्ञप्रवृत्तौ यथोक्तसमृद्धिकं सर्वं भवतीति ॥

[3]द्रप्सानतुमन्त्रयते—यस्ते इति तिसृभिस्त्रिष्टुभिः । तत्र प्रथमा—यस्ते इति ॥ 'अंशुः' इति प्रथमपादान्तः । हे सोम यस्तेऽभिषूयमाणस्य द्रप्सो रसस्स्कन्दति । यो वा तवांशुः सूक्ष्मलतावयवः बाहुच्युतः बाह्वोर्हस्तयोश्च्युतः निपतितः संलग्नः । थाथादिस्वरं बाधित्वा व्यत्ययेन सप्तमीपूर्वपदप्रकृतिस्वरत्वम् । धिषणयोरुपस्थात्—अधिषवणफलके धिषणे । दृश्यते हि 'धिषणे वीडू' इति* । तयोरुपस्थादुत्सङ्गात् हस्तयोश्च्युतः । अध्वर्योरिति । यद्वा यो वा तव रसः पवित्रात् दशापवित्रात् विततात्पतितः सर्वतस्स्कन्दति तं सर्वं स्वाहाकृतं स्वाहाकारेण प्रक्षिप्तं स्वाहाकृ-

---

*सं. १-४-१[10].

य तं जुहोमि । यो द्रप्सो अꣳशुः
पतितः पृथिव्यां परिवापात् ॥३२॥
पुरोडाशात्करम्भात् । धानासोमा-
न्मन्थिनं इन्द्र शुक्रात्स्वाहाकृतमि-

जुहोमि । [4]यः । द्रप्सः । अꣳशुः । पतितः । पृ-
थिव्याम् । परिवापादिति परि–वापात् ॥ ३२ ॥
पुरोडाशात् । करम्भात् । धानासोमादिति धाना-
–सोमात् । मन्थिनः । इन्द्र । शुक्रात् । स्वाहाकृ-
तमिति स्वाहा–कृतम् । इन्द्राय । तम् । जुहोमि ।

---

तवद्वृधानिपतितं कृत्वा इन्द्राय जुहोमि स्वाहुतमेव करोमि । स्वाहाशब्दस्योर्यादित्वेन गतित्वात् 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरत्वम् ॥

[4]अथ द्वितीया—यो द्रप्स इति ॥ सोमात् यो द्रप्सो वा अंशुर्वा पृथिव्यां पतितः परिवापादिभ्यश्च । हे इन्द्र तं स्वाहाकृतं इन्द्रायेश्वराय तुभ्यं जुहोमि हुतमेव करोमि । परिवापाः व्रीहिप्रभवा लाजाः । पुरोडाशः पिष्टमयः । करम्भः सक्त्वाज्यसंयोगविशेषः । धानाश्च सोमश्च धानासोमम् । 'जातिरप्राणिनाम्' इत्येकवद्भावः । धानाः तण्डुलप्रभवाः लाजप्रकाराः । सोमो लतात्मा । यद्वा—सवनीयैः साहचर्यात् पारिशेष्याच्च सोमविषया मैत्रावरुणी पयस्या सोमशब्देनोच्यते । यथा धानाः

न्द्राय तं जुहोमि । यस्ते द्रप्सो मधु-
मा२ँ इन्द्रियावान्त्स्वाहाकृतः पुनर-
प्येति देवान् । दिवः पृथिव्याः पर्य-
न्तरिक्षात्स्वाहाकृतमिन्द्राय तं जुहो-
मि । अध्वर्युर्वा ऋत्विजां प्रथमो

यः । ते । द्रप्सः । मधुमानिति मधु–मान् । इन्द्रियावानितीन्द्रिय–वान् । स्वाहाकृत इति स्वा-हा–कृतः । पुनः । अप्येतीत्यपि–एति । देवान् । दिवः । पृथिव्याः । परीति । अन्तरिक्षात् । स्वा-हाकृतमिति स्वाहा–कृतम् । इन्द्राय । तम् । जु-होमि । [6]अध्वर्युः । वै । ऋत्विजाम् । प्रथमः ।

---

करम्भः परिवापः पुरोडाशः पयस्या पङ्क्तिराप्यत इति । मन्थी शुक्रश्च ग्रहौ ॥

[5]अथ तृतीया—यस्ते इति ॥ हे सोम यस्ते द्रप्सो मधुमान् मधुररसवान् इन्द्रियावान् वीर्यवांश्च भूत्वा स्वाहाकृतः पुनर्देवान-प्येति गच्छति । दिवो वा पृथिव्या वा अन्तरिक्षाद्वा यत्र यत्र स्कन्नः ततस्सर्वस्मादागत्य पुनरपि देवान्प्राप्नोति मम स्वाहा-कारेण तमहमिन्द्राय स्वाहाकृतं कृत्वा जुहोमि साऽपि तथा क-रोत्विति । 'मन्त्रे सोमाश्व' इतीन्द्रियशब्दस्य दीर्घत्वम् । 'ऊडिदम्' इति दिवो विभक्तिरुदात्ता । 'उदात्तयणः' इति पृथिव्याः ॥

[6]अथ 'वागग्रेगाः' इत्यस्य वक्ष्यमाणस्य मन्त्रस्य ब्राह्मणं

युज्यते तेन स्तोमो योक्तव्य इत्याहुर्वागग्रेगा अग्र एत्वृजुगा देवेभ्यो यशो मयि दधती प्राणान्पशुषु प्रजां मयि ॥३३॥ च यजमाने चेत्याह वाचमेव तद्यज्ञमुखे युनक्ति वास्तु

युज्यते । तेन । स्तोमः । योक्तव्यः । इति । आहुः । वाक् । अग्रेगा इत्यग्रे—गाः । अग्रे । एतु । ऋजुगा इत्यृजु—गाः । देवेभ्यः । यशः । मयि । दधती । प्राणानिति प्र—अनान् । पशुषु । प्रजामिति प्र—जाम् । मयि ॥३३॥ च । यजमाने । च । इति । आह । वाचम् । एव । तत् । यज्ञमुख इति यज्ञ—मुखे । युनक्ति । वास्तु । वै । एतत् । यज्ञस्य ।

—अध्वर्युर्वा इत्यादि ॥ ऋत्विजां मध्ये अध्वर्युः प्रथमः बहिष्पमानाय संसर्पणे युज्यते । अथ तस्य प्राथम्यात्तेनैव प्रथमं स्तोमो योक्तव्य इत्याहुः । तस्मात्सर्पणकाले 'वागग्रेगाः' इत्यादिकं यजुर्यदाह तेन प्रथममध्वर्युः वाचं यज्ञमुखे बहिष्पवमानारम्भे युनक्ति यद्वाचं बहिष्पवमानं यज्ञमुखेऽध्वर्युर्युनक्ति एवं स्तोमो युक्तो योजितो भवति । मन्त्रार्थस्तु—वागग्रेगाः सर्वस्याग्रे गच्छन्ती अग्रे प्रथमं बहिष्पवमानमेतु । 'जनसन' इति विट् 'विड्वनोरनुनासिकस्स्यात्' इत्यात्वम् । ईदृशी सती गच्छत्वित्याह —ऋजुगाः ऋजुमार्गेण गच्छन्ती देवेभ्यः देवार्थमवक्रगमना देवानेवं गच्छन्तीत्यर्थः । पूर्ववद्विट् । मयि यशो दधती स्थाप-

वा एतद्यज्ञस्यं क्रियते यद्ग्रहान्गृहीत्वा
बंहिष्पवमानꣳ सर्पन्ति पराञ्चो हि
यन्ति पराचीभिस्स्तुवते वैष्णव्यर्चा
पुनरेत्योपं तिष्ठते यज्ञो वै विष्णुर्यज्ञ-
मेवाकर्विष्णो त्वं नो अन्तमश्शर्म

क्रियते । यत् । ग्रहान् । गृहीत्वा । बहिष्पवमान-मिति बहिः—पवमानम् । सर्पन्ति । [7]पराञ्चः । हि । यन्ति । पराचीभिः । स्तुवते । वैष्णव्या । ऋचा । पुनः । एत्येत्या—इत्यं । उपेति । तिष्ठते । यज्ञः । वै । विष्णुः । यज्ञम् । एव । अकः । विष्णो इति । त्वम् । नः । अन्तमः । शर्म । यच्छ । सहन्त्य ।

---

यान्ती सुष्ठु प्रचारणात्प्राणान् पशुषु दधती सम्यग्यागनिष्पत्तेः प्रजां मयि च यजमाने दधती अग्रे गच्छत्विति । वास्तु वा एतद्यज्ञस्येत्यादि । वास्तुग्रहणं एतद्यज्ञस्य क्रियते यद्ग्रहान् गृहीत्वा बहिष्पवमानं सर्पन्ति तस्मात्प्रथममेव ग्रहा गृहीतव्याः । ततो बहिष्पवमानं संसर्पेयुरिति । एवं हि यज्ञो वास्तुमान् भवति ॥

[7]पराञ्चो हीत्यादि ॥ हि यस्मादर्थे । यस्मात्पराञ्चोपुनरावृत्ता बहिष्पवमानाय यन्ति सर्पन्ति तस्मादानुरूप्याय पराचीभिः अनावृत्ताभिः त्रिवृत्त्वान्नवभिः ऋग्भिस्स्तुवते । अकर्त्रभिप्रायत्वाद्व्यत्यये-नात्मनेपदम्, परापूर्वादञ्चतेः क्विपि 'अनिगन्तादञ्चतौ' इति गतेः प्रकृतिस्वरत्वम् । वैष्णव्येत्यादि । पुनरेत्यागत्य वैष्णव्यर्चा वक्ष्य-माणया अनुष्टुभा राजानमुपतिष्ठते—तस्मादनेनोपस्थानेन यज्ञमे-

यच्छ सहन्त्य । प्र ते धारा मधुश्चुत उत्सं दुह्रते अक्षितमित्याह यदेवास्य शयानस्योपशुष्यति तदेवास्यैतेना प्याययति ॥ ३४ ॥

प्रेति । ते । धाराः । मधुश्चुत इति मधु-श्चुतः । उत्सम् । दुह्रते । अक्षितम् । इति । आह । यत् । एव । अस्य । शयानस्य । उपशुष्यतीत्युप-शुष्यति । तत् । एव । अस्य । एतेन । एति । प्या-ययति ॥ ३४ ॥

परिवापात्प्रजां मयि दुह्रते चतुर्दश च ॥१०॥

---

वाकः करोति । करोतेः छान्दसे लुङि 'मन्त्रे घस' इति च्लेर्लुक् । किं च—यदेव यत्किंचित् अपि शयानस्योपशुष्यति तत्सर्वमप्यस्यानेनोपस्थानेन आप्याययति आपूरयति अक्षितं दुह्रते इति दर्शनात् । मन्त्रार्थस्तु—हे विष्णो यज्ञात्मन् सोम त्वं नः अस्माकं अन्तिमः अन्तिकतमः प्रत्यासन्नतमः । 'तमेतादेश्च' इति कलोपः । सः त्वमस्मभ्यं शर्म सुखं यच्छ देहि । हे सहन्त्य परेषामभिभवितः महाप्रभाव । सहतेरौणादिको झच् । सहन्ताः सोढारः, ततस्स्वार्थिको यः । सहन्त्य ते तव धाराः रसप्रवाहाः, मधुश्चुतः मधुरं रसं क्षरन्त्यः उत्सं कूपभूतं अक्षितं अनुपक्षीणं सोमरसं प्रदुह्रते प्रकर्षेण दुहताम् । तेन यच्छुष्यति तदाप्यायितं भवति । दुहेश्छान्दसे लेटि 'बहुलं छन्दसि' इति रुडागमः ॥

तृतीये प्रथमे दशमोनुवाकः.

अग्निना रयिमश्नवत्पोषमेव दिवेदि-
वे । यशसं वीरवत्तमम् । गोमाꣳ
अग्नेऽविमाꣳ अश्वी यज्ञो नृवत्सखा
सदमिदप्रमृष्यः । इडावाꣳ एषो अ-

[1]अग्निना । रयिम् । अश्नवत् । पोषम् । एव । दिवेदिव इति दिवे-दिवे । यशसम् । वीरवत्तम-मिति वीरवत्-तमम् । [2]गोमानिति गो-मान् । अग्ने । अविमानित्यवि-मान् । अश्वी । यज्ञः । नृवत्सखेति नृवत्-सखा । सदम् । इत् । अप्रमृ-

[1]अथौपानुवाक्यामध्ये याज्यानुवाक्याः । अस्ति चित्रा नाम यागः । 'चित्रया यजेत पशुकामः'* इति । तत्राग्नेयादीनि सप्तहवींषि भवन्ति । तेषां 'प्रैवाग्नेयेन वापयति'* इत्यस्याग्नेयस्य पुरोनुवाक्या—अग्निना रयिमश्नवदिति गायत्री ॥ अग्निना हि रयिं धनं पशुलक्षणं अश्नवत् अश्नुते । पोषं चैव तस्य धनस्य अश्नुते अग्निना दिवेदिवे दिनेदिने । अश्नोतेर्लेटि व्यत्ययेन परस्मैपदम्, इतश्च लोपः, 'लेटोऽडाटौ' इत्यडागमः । रयिर्विशेष्यते—यशसं यशस्विनम् । मत्वर्थीयो लुप्यते, तेनानब्विषयत्वादाद्युदात्तत्वं निवर्तते, अर्शआदित्वादचि व्यत्ययेन प्रत्ययात्पूर्वस्योदात्तत्वम् । वीरवत्तमं अतिशयेन वीरैः पुरुषैस्तद्वन्तम् । यस्मादीदृशं रयिं अग्निना सर्वो जनः अश्नुते तस्मादहमप्यग्निना ईदृशं रयिं अश्नुवीयेति ॥

[2]तत्रैव याज्या—गोमानिति त्रिष्टुप् ॥ व्याख्यातेयम् 'अगन्म

*सं. २-४-६[1]—२.

सुर प्रजावान्दीर्घो रयिः पृथुबुध्नस्स-
भावान् । आ प्यायस्व सं ते । इ-
ह त्वष्टारमग्रियं विश्वरूपमुप ह्वये ।

ष्य इत्यंप्र—मृष्यः । इडावानितीडा—वान् । एषः ।
असुर । प्रजावानिति प्रजा—वान् । दीर्घः । रयिः ।
पृथुबुध्न इति पृथु—बुध्नः । सभावानिति सभा—वान् ।
[3]एति । प्यायस्व । [4]समिति । ते । [5]इह । त्वष्टा-

सुवः '* इत्यत्र । गोमत्वादिगुणविशिष्टस्सर्वदेवाप्रमृष्यो यज्ञो ममास्तु इति ॥

[3]अथ 'रेतस्सौम्येन दधाति '† इत्यस्य पुरोनुवाक्या याज्या च—आ प्यायस्व सं ते इति गायत्रीत्रिष्टुभौ ॥ एते च 'मा नो हिंसीज्जनिता '† इत्यत्र व्याख्यास्येते यत्राम्नायेते । इह तु प्रतीकग्रहणमेतयोः । हे सोम आप्यायस्व वर्धस्व । ते तव विश्वतः वृष्णियं वीर्यं समेतु । तत्र आप्यायितस्त्वं वाजस्यान्नस्य क्षीरादेः संगथे संगमने अस्माकं भवेति ॥

[4]अथ द्वितीया—हे सोम तवाभिमातीनां पाप्मनां हन्तुः पयांसि पातव्यानि क्षीरादीनि संयन्तु संगच्छन्तां, वाजा अन्नानि च संयन्तु, वृष्णियानि वीर्याणि च संयन्तु । ततश्चाप्यायमानः अमरणत्वायास्माकं उत्तमानि श्रेयांसि अन्नानि धिष्व धारय देवार्थमस्मदर्थं वा ॥

[5]अथ 'रेत एव हितं त्वष्टा रूपाणि वि करोति '‡ इत्यस्य

*सं. १-६-६[15]. †सं. ४-२-७. ‡सं. २-४-६[2].

अस्माकमस्तु केवलः । तन्नस्तुरी-
पमधं पोषयित्नु देव त्वष्टर्वि रराण-
स्स्यस्व । यतो वीरः ॥३५॥ कर्म
ण्यस्सुदक्षो युक्तग्रावा जायते देव-

रम् । अग्रियम् । विश्वरूपमिति विश्व-रूपम् ।
उपेति । ह्वये । अस्माकम् । अस्तु । केवलः ।
[6]तत् । नः । तुरीपम् । अधं । पोषयित्नु । देव ।
त्वष्टः । वीति । रराणः । स्यस्व । यतः । वीरः ॥
३५॥ कर्मण्यः । सुदक्ष इति सु-दक्षः । युक्तग्रावे-
ति युक्त-ग्रावा । जायते । देवकाम इति देव-

---

पुरोनुवाक्या—इह त्वष्टारमिति गायत्री । इहास्मिन् कर्मणि त्वष्टारं अग्रियं मुख्यम् । 'घच्छौ च' इति घच् । विश्व-रूपं विश्वेषां रूपाणां विकरणसमर्थम् । 'बहुव्रीहौ विश्वम्' इति पूर्वपदान्तोदात्तत्वम् । उपह्वये आह्वयामि । 'निसमुपविभ्यो ह्वः' इत्यात्मनेपदम् । अस्माकमेवास्तु केवलः सम्भन्धीत्येवमर्थमुपह्वये ॥

[6]तत्रैव याज्या—तन्न इति त्रिष्टुप् ॥ 'सुदक्षः' इति तृतीय-पादान्तः । तत् धनं तुरीपं तूर्णमाप्नोतीति तुरीपं । पृषोदरादिः । पोषयित्नु पोषयितृ । हे देव त्वष्टः रराणः दानशीलस्त्वम् । व्यत्ययेन रातेरात्मनेपदम्, शपश्श्लुः । नः अस्मभ्यं अधेदानीं विष्यस्व विसृज विमुच्य देहीत्यर्थः । व्यत्ययेनात्मनेपदम् । तदि-

कामः। शिवस्त्वंष्टरिहा गंहि विभुः
पोषं उत त्मनां। यज्ञेयंज्ञे न उदंव।

कामः। [7]शिवः। त्वष्टः। इह। एतिं। गहि। वि-
भुरितिं वि-भुः। पोषें। उत। त्मनां। यज्ञेयंज्ञ

---

त्युक्तं, किं तदित्याह—यतः यस्माद्धनाल्लब्धात् वीरः विक्रान्तः कर्मण्यः कर्मणि साधुः कुशलः सुदक्षः सुष्ठु शीघ्रः उत्साही। दक्ष शीघ्रकरणे, 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम्। युक्तग्रावा युक्ता ग्रावाणो यस्य तादृशः। ग्रावभिः तत्साध्यं कर्मोपलक्ष्यते कर्मशील इत्यर्थः। अत एव देवकामः। देवान् कामयते इति 'शीलिकामि' इत्यादिना णः पूर्वपदप्रकृतिस्वरत्वं च। देवैः काम्यते इति वा देवकामः। दासीभारादिर्द्रष्टव्यः। ईदृशः पुरुषः यस्माद्धनाज्जायते तत्पशुलक्षणं धनं देहीति॥

[7]अथापरं याज्यानुवाक्यायुगळं विकल्पार्थं अत्रैव वा अन्यत्र वा त्वाष्ट्रे विनियोज्यम्। तत्र पुरोनुवाक्या—शिव इति गायत्री॥ हे त्वष्टः शिवः सुखकरः त्वमिहास्मिन् कर्मणि आगहि आगच्छ। शपो लुक्। विभुः व्याप्तिमान् पोषे पुष्ट्यर्थमस्माकम्। निमित्तात्सप्तमी। उत त्मना आत्मना केवलेनाप्यात्मना अन्यानिरपेक्ष एव पोषं कर्तुं समर्थः। 'मन्त्रेष्वाङ्यादेः' इति लोपः। किञ्च—यज्ञेयज्ञे सर्वस्मिन् यज्ञे नः अस्मान् उदव उत्कृष्टं पाहि प्रतियज्ञमुत्कृष्टं पाहीत्यर्थः। 'अनुदात्तं च' इति द्वितीयो यज्ञशब्दोनुदात्तः॥

पिशङ्गरूपस्सुभरो वयोधाश्श्रुष्टी
वीरो जायते देवकामः । प्रजां त्व-
ष्टा विष्यतु नाभिमस्मे अथा देवा-

इति यज्ञे–यज्ञे । नः । उदिति । अव । [8]पिशङ्गरूप इति पिशङ्ग–रूपः । सुभर इति सु–भरः । वयोधा इति वयः–धाः । श्रुष्टी । वीरः । जायते । देवकाम इति देव–कामः । प्रजामिति प्र–जाम् । त्वष्टा । वीति । स्यतु । नाभिम् । अस्मे इति । अथ । देवानाम् । अपीति । एतु । पाथः । [9]प्रेति ।

[8]अथ याज्या—पिशङ्गरूपः इति त्रिष्टुप् ॥ पिशङ्गरूपः चित्ररूपः । त्रिवर्गस्य सेविता सुभरः शोभनभरणः स्वजनस्य सम्यग्भर्तेत्यर्थः । 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । यद्वा—देवैस्सुखेन भरणीयः । खल्प्रत्ययात्पूर्वस्योदात्तत्वम् । वयोधाः वयसोन्नस्य दाता धाता वा । श्रुष्टी क्षिप्रकारीत्येके । सत्यवादीत्यन्ये । श्रोतृषु स्त्यायते श्रुष्टी । पृषोदरादिः । वीरो देवकामश्च इत्येवंगुणः जायते त्वष्टुः प्रसादात् । तस्मादीदृशीं प्रजां त्वष्टा अस्मे अस्मभ्यं विष्यतु विमुच्य ददातु नाभिं नहनीं कुलस्य । 'नहोभश्च' इति । 'सुपां सुलुक्' इति अस्मच्छब्दात्परस्या विभक्तेस्स्मे आदेशः । अथानन्तरं देवानामपि पाथोन्नं सामर्थ्याद्देवानामपि एतु अस्मान् प्राप्नोतु । यद्वा—कर्मणि षष्ठी । पाथोन्नं हवीरूपं देवानप्येतु-प्रविशतु । यागाश्च यथोक्तमनुष्ठीयन्तामित्यर्थः ॥

[9]अथ 'द्वौ सारस्वतौ मिथुनं सारस्वत्या करोति' इति ब्राह्म-

नामप्येंतु पार्थः । प्रणो देव्या नो दिवः । पीपिवाꣳसꣳ सरस्वतस्स्तनं यो विश्वदर्शतः । धुक्षीमहिं प्र-

नः । देवी । [10]एतिं । नः । दिवः । [11]पीपिवाꣳसम् । सरस्वतः । स्तनम् । यः । विश्वदर्शत इति विश्व–दर्शतः । धुक्षीमहि । प्रजामिति प्र–जाम् ।

णम् । एकस्सरस्वत्यै, इतरस्सरस्वते । तत्र सरस्वत्याः पुरोनुवाक्या याज्या च 'प्रणो देवी सरस्वती', 'आ नो दिवो बृहतः' इति च गायत्रीत्रिष्टुभौ ॥ व्याख्याते चैते 'अग्नाविष्णू महि तद्वाम्'* इत्यत्र, इह तु प्रतीकग्रहणं तयोः । सरस्वती देवी वाजेभिरन्नैः तद्वती धीनां धियां कर्मणां बुद्धीनां वा अवित्री पालयित्री अस्मान् प्रकर्षेणावत्विति ॥

[10]अथ याज्या—नोस्माकं यज्ञं सरस्वती यजता यजनीया दिवोन्तरिक्षादागच्छतु, बृहतो वा पर्वतादागच्छतु । सर्वं हवं जुषाणा सेवमाना घृताची उदकस्याञ्चती उशती हवींषि कामयमाना नोस्माकं शग्मां शक्तां वाचं शृणोत्विति ॥

[11]अथ सरस्वतः पुरोनुवाक्या—पीपिवांसमिति गायत्री ॥ पीपिवांसं वर्धितवन्तम् । 'लिड्यङोश्च' इति पीभावः । धातोर्ह्रस्वत्वम् । छान्दसस्य वा लिटः क्वसुरादेशः । वर्धयन्तमित्यर्थः । कम्? स्तनं स्तनस्थानीयं यागं यथा स्तनो बालान् वर्धयति एवं सर्वलोकं वर्धयन्तम् । कस्य स्तनम्? सरस्वतः सरस्वान्वाग्देवताविशेषः तस्य

*सं १–८–२२.³⁻⁴

जामिषम् ॥ ३६ ॥ [12]ये ते सरस्व ऊर्मयो मधुमन्तो घृतश्चुतः । तेषां ते सुम्नमीमहे । यस्य व्रतं पशवो

इषम् ॥ ३६ ॥ [12]ये । ते । सरस्वः । ऊर्मयः । मधुमन्त इति मधु-मन्तः । घृतश्चुत इति घृत-श्चुतः । तेषाम् । ते । सुम्नम् । ईमहे । [13]यस्य । व्रतम् । पशवः । यन्ति । सर्वे । यस्य । व्रतम् ।

---

स्तनम् । कीदृशस्सः? यो विश्वदर्शतः । विश्वं दर्शनीयं यस्य । दृशेरौणादिकोतच्प्रत्ययः । तादृशो योसौ सरस्वान् तस्य स्तनस्थानीयं विश्वं वर्धयितुं पर्याप्तं यागम् । वयमपि प्रजां पुत्रादिकां तस्याश्च जीवनार्थं इषमन्नं च धुक्षीमहि । 'लिङ्सिचावात्मनेपदेषु' इति कित्वम् ॥

[12]अत्रैव पुरोनुवाक्या विकल्प्यते । अन्यत्र वा विनियुज्यते— ये ते इति गायत्री ॥ हे सरस्वः सरस्वन् उदकवन् । 'मतुवसोः' इति रुत्वम् । ते तव ये ऊर्मयः उदकसंघाताः मधुमन्तः मधुररसाः । घृतश्चुतः उदकं क्षारयन्त्यः । यद्वा ऊर्मयः अरणशीलाः गावः मधुमन्तः घृतश्चुतः । तेषां सम्बन्धि यत् सुखं सुम्नं यत्तद्दतां भवति तत्ते ईमहे । कर्मणि षष्ठी । त्वां याचयामहे तदस्मभ्यं देहि । ई गतौ, तत्र याच्ञायां वर्तते, 'बहुलं छन्दसि' इति शपो लुक् ॥

[13]अथ तत्रैव याज्या—यस्येति त्रिष्टुप् ॥ यस्य सरस्वतः

यन्ति सर्वे यस्य व्रतमुपतिष्ठन्त
आपः। यस्य व्रते पुष्टिपतिर्निविष्ट-
स्तꣳ सरस्वन्तमवसे हुवेम । दि-
व्यꣳ सुपर्णं वयसं बृहन्तमपां गर्भ-

उपतिष्ठन्त इत्युप-तिष्ठन्ते । आपः । यस्य ।
व्रते । पुष्टिपतिरिति पुष्टि-पतिः । निविष्ट इति
नि-विष्टः । तम् । सरस्वन्तम् । अवसे । हुवेम ।
[14]दिव्यम् । सुपर्णमिति सु-पर्णम् । वयसम् ।
बृहन्तम् । अपाम् । गर्भम् । वृषभम् । ओषधी-

व्रतं कर्म सर्वे पशवो यन्ति अनुगच्छन्ति; तन्निमित्तत्वाद्वृष्टेः । यस्य च व्रतं कर्म आप उपतिष्ठन्ते; तन्निमित्तत्वाद्वृष्टेः । सङ्गतिकरण आत्मनेपदम् । यस्य च व्रते पुष्टिपतिः तत्तत्पोषणपतिः निविष्टः; तदधीनत्वात् वृष्टेः पुष्टेश्च । 'परादिश्छन्दसि बहुळम्' इति पतिशब्दस्याद्युदात्तत्वम् । 'गतिरनन्तरः' इति निविष्टशब्दे गतेः प्रकृतिस्वरत्वम् । तं सरस्वन्तं अवसे रक्षणाय तृप्त्यर्थं वा हुवेम आह्वयेम । 'लिङ्याशिष्यङ्', 'बहुलं छन्दसि' इति संप्रसारणम् ॥

[14]अथात्रैव याज्या विकल्प्यते—दिव्यमिति त्रिष्टुप् ॥ दिव्यं दिवमर्हतीति । 'छन्दसि च' इति यः । सुपर्णं शोभनपतनम् । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । वयसं अन्नवन्तं तन्निमित्तत्वात् । अर्शआदित्वादच् । बृहन्तं महान्तं अपां गर्भं

वृषभमोषधीनाम् । अभीपतो वृष्ट्या
तर्पयन्तं तꣳ सरस्वन्तमवसे हुवेम।
सिनीवालि पृथुष्टुके या देवानाम-

नाम् । अभीपतः । वृष्ट्या । तर्पयन्तम् । तम् । सरस्वन्तम् । अवसे । हुवेम । [15]सिनीवालि । पृथुष्टुक इति पृथु-स्तुके । या । देवानाम् । अ-

मध्यगतं वृषभं वर्षितारं कामानां सेक्तारं वृद्धिकरं वा । ओषधीनामुपलक्षणमिदम् । सर्वेषामपि वृषभं, ओषधीनां गर्भमित्यन्ये। अभीपतः अभितः सर्वतः वृष्ट्या विश्वं तर्पयन्तम् । अभिगताः आपः अस्मिन्निति । 'ऋक्पूरब्धूः' इति समासान्तः, 'द्व्यन्तरुपसर्गेभ्योप ईत्' इतीत्, 'आद्यादिभ्यस्तसिः' । अन्य आह—अभिपतनशीलान् सर्वप्राणिनो वृष्ट्या तर्पयन्तम् । पततेः क्विपि छान्दसमुपसर्गस्य दीर्घत्वम्, विभक्त्युदात्तत्वं च । 'मन्त्रे वृष' इति क्तिन उदात्तत्वाद्वृष्टिशब्दोन्तोदात्तः, ततः 'उदात्तयणः' इति तृतीयाया उदात्तत्वम् । तमित्यादि । गतम् ॥

[15]अथ 'सिनीवाल्यै चरुर्भवति'* इत्यस्य चरोः पुरोनुवाक्या सिनीवालीत्यनुष्टुप् ॥ दृष्टचन्द्रामावास्या सिनीवाली स्त्रीत्वेन रूप्यते । हे सिनीवालि पृथुष्टुके पृथुजघने पृथुसंहते वा । स्त्यायतेस्स्तुकः, पूर्वस्याविद्यमानत्वादिदं न निहन्यते । या त्वं देवानां स्वसा स्वयं सारिण्यसि । वृष्ट्यादीनां भगिन्येव वा; समानकार्यत्वात् । सा त्वं जुषस्व सेवस्व हव्यं आहुतम् ।

* तै. सं. २-४-६.

सि॒ स्वसा॑ । जु॒षस्व॑ ह॒व्यम् ॥३७॥
आहु॑तं प्र॒जां दे॑वि दिदिड्ढि नः । या
सु॑पा॒णिस्स्व॑ङ्गु॒रिस्सु॒षूमा॑ बहु॒सूव॑री ।
तस्यै॑ वि॒श्पत्नि॑यै ह॒विस्सि॑नीवा॒ल्यै

सि॑ । स्वसा॑ । जु॒षस्व॑ । ह॒व्यम् ॥ ३७ ॥ आहु॑त॒मित्या–हु॒त॒म् । प्र॒जामिति॑ प्र–जाम् । दे॒वि॒ । दि॒दि॒ड्ढि॒ । न॒ः । [16]या । सु॒पा॒णिरिति॑ सु–पा॒णिः । स्व॒ङ्गु॒रिरिति॑ सु–अ॒ङ्गु॒रिः । सु॒षूमेति॑ सु–सूमा॑ । ब॒हु॒सू॒व॒रीति॑ ब॒हु–सूव॑री । तस्यै॑ । वि॒श्पत्नि॑यै ।

---

पूर्ववद्गतेः प्रकृतिस्वरत्वम् । किं च—हे सिनीवालि नः अस्मभ्यं प्रजां पुत्रादिकां दिदिड्ढि उपचिनु देहीत्यर्थः । दिहेर्लेटि शपश्लुः ॥

[16]अथ तत्रैव याज्या—या सुपाणिरित्यनुष्टुप् ॥ या सुपाणिः शोभनहस्ता स्वङ्गुरिः शोभनाङ्गुलिः । कपिलकादित्वाल्लत्वविकल्पः, उभयत्रापि 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । सुषूमा सुष्ठु प्रसवित्री । सूतेः 'अन्येभ्योपि दृश्यते' इति मनिन्, गुणाभावश्छान्दसः, 'मनः' इति ङीप्प्रतिषेधः, कृदुत्तरपदप्रकृतिस्वरत्वम् । यद्वा—सूतेरौणादिको मनिन्प्रत्ययः । सुष्ठु सूमा सूतिः यस्य सुषूमा । बहुव्रीहौ 'सोर्मनसी' इत्युत्तरपदान्तोदात्तत्वम्, सुषामादित्वात् षत्वम् । बहुसवरी बह्वीनां प्रजानां सावित्री । तेनैव क्वनिप्, 'वनो र च' इति ङीब्रेफौ, कृदुत्तरपदप्रकृति-

**जुहोतन । इन्द्रं वो विश्वतस्परीन्द्रं नरः । असितवर्णा हरयस्सुपर्णा**

**हविः । सिनीवाल्यै । जुहोतन । [17]इन्द्रम् । वः । विश्वतः । परीति । [18]इन्द्रम् । नरः । [19]असितवर्णा इत्यसित–वर्णाः । हरयः । सुपर्णा इति सु–पर्णाः ।**

स्वरत्वम् । तस्यै सिनीवाल्यै विश्पत्न्यै विशां पालयित्र्यै । 'विश्पूर्वस्य' इति पत्युर्नकारः, 'अयस्मयादीनि छन्दसि' इति भत्वेन विशो जस्त्वाभावः, 'परादिश्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । हविर्जुहोतन जुहुत हे ऋत्विग्यजमानाः । 'तप्तनप्तनथनाश्च' इति तनबादेशः, पित्त्वेन ङित्त्वाभावाद्गुणः ॥

[17]'ऐन्द्र उत्तमो भवति'* इत्यस्यैन्द्रस्य पुरोनुवाक्या याज्या च—इन्द्रं वो विश्वतस्परीन्द्रं नर इति गायत्रीत्रिष्टुभौ । व्याख्याते चैते† । इह तु प्रतीकग्रहणमनयोः । हे ऋत्विग्यजमानाः वो युष्मदर्थं विश्वेभ्यो जनेभ्यः उपरि इन्द्रं हवामहे आह्वयामः । अस्माकमेव केवलः स्वामी भवत्विति ॥

[18]द्वितीया—यदा पार्याः परलोकसाधनभूताः धियः कर्माणि युनजते युञ्जन्ति तदा मनुष्याः इन्द्रमेवाह्वयन्ति । हविषामर्धेन धार्यमाणं अर्धार्हं 'यत्सर्वेषामर्धमिन्द्रः प्रति'‡ इति । तस्मात् हे इन्द्र शूरः वीरः शवसो बलस्य मनुष्येभ्यः संभक्तौ चकानः दीप्यमानः । ईदृशस्त्वं गोमति व्रजे गोसमूहे अस्मानाभज भागिनः कुर्विति ॥

[19]अथ कारीर्या पिण्डीर्हुत्वा धूममन्वीक्षते—असितवर्णा इति

*सं. २-४-६. †सं. १-६-१२. ‡सं. ५-४-८.

मिहो वसाना दिवमुत्पतन्ति । त आ-
ववृत्रन्त्सदनानि कृत्वाऽऽदित्पृथिवी
घृतैर्व्युद्यते । हिरण्यकेशो रजसो

मिहः । वसानाः । दिवम् । उदिति । पतन्ति ।
ते । एति । अववृत्रन् । सदनानि । कृत्वा । आत् ।
इत् । पृथिवी । घृतैः । वीति । उद्यते । [20]हिरण्य-
केश इति हिरण्य–केशः । रजसः । विसार इति

---

त्रिष्टुभा ॥ असितवर्णाः कृष्णवर्णाः; उदकपूर्णत्वात् । हरयः रसहरणशीलाः रश्मयः सुपर्णाः शोभनपतनाः । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । मिहः आपः । मिह्यन्ते सिच्यन्ते इति कर्मणि क्विप् । वसानाः आच्छादयन्त्यः । अनुदात्तत्वा-च्छसार्वधातुकानुदात्तत्वम् । दिवमादित्यमण्डलं उत्पतन्ति उत्क्रम्यो परिगच्छन्ति । उत्तरायणे आपस्तत्र गर्भभूताः वर्तन्ते । ते च रश्मयः तत्र सदनानि कृत्वा अष्टौ मासानतिवाह्य पक्कमुदकं गृहीत्वा दक्षिणायने आववृत्रन् आवर्तन्ते मध्यमस्थानं प्रतियन्तः असितवर्णा उदपतन् । वृतेर्लेटि व्यत्ययेन परस्मैपदम्, शपश्श्लुः, 'बहुलं छन्दसि' इति रुट् । यद्वा—छान्दसो लुङ् । 'द्यु-द्भ्यो लुङि' इति परस्मैपदं, व्यत्ययेन च्लेश्चङ्, 'बहुलं छन्दस्यमाङ्योगेपि' इत्यडभावः । अथ यदा ते आवृत्ता भवन्ति आदित् अनन्तरमेव पृथिवी घृतैः उदकैः व्युद्यते विशेषेण क्लिद्यते । उन्दी क्लेदने ॥

[20]वर्षाभूस्तम्बमग्नौ प्रहरति—हिरण्यकेश इति त्रिष्टुभा ॥ आ-

विसारेऽहिर्धुनिर्वात इव ध्रजीमान् ।
शुचिं भ्राजा उषसः ॥ ३८ ॥ न वे-
दा यशस्वतीरपस्युवो न सत्याः ।
आ ते सुपर्णा अमिनन्त एवैः कृ-

वि–सारे । अहिः । धुनिः । वातः । इव । ध्रजी-
मान् । शुचिभ्राजा इति शुचि–भ्राजाः । उषसः ॥
३८ ॥ नवेदाः । यशस्वतीः । अपस्युवः । न ।
सत्याः । [21]एति । ते । सुपर्णा इति सु–पर्णाः ।

---

दित्यात्मना अग्निस्स्तूयते—हिरण्यकेशः रसहरणशीलरश्मिः हिरण्य वर्णरश्मिर्वा आदित्यः रजसः उदकस्य विसारे निस्सारणे निस्सारणार्थं अहिः आगत्य हन्ता मेघानाम् । आङ्पूर्वाद्धन्तेः डिप्रत्ययः, उपसर्गस्य ह्रस्वत्वम् । धुनिः कम्पयिता मेघानाम् । धुनोतेरौणादिको निप्रत्ययः । वात इव ध्रजीमान् गतिमान् । ध्रजेः 'इन्सर्वधातुभ्यः' इतीन् । शीघ्रमुदकं निस्सारयतीत्यर्थः । शुचिभ्राजाः निर्मलदीप्तिः उषसः अह्नः नवेदाः न विन्दतीति नवेदाः । पचाद्यच्, 'नभ्राण्नपान्नवेदाः' इति नञो नलोपाभावः । हिरण्यकेश एव रजसो निस्सारणं वेत्ति उषस्तु न विन्दति । यशस्वतीः यशस्वत्यः साध्येनान्नेन तद्वत्यः अपस्युवो न उदकमिच्छन्त्य इव भवन्ति सत्याः अमोघारम्भाः । अप इच्छन्तीति क्यच्, द्वितीयाबहुवचनस्य लुक्, 'क्याच्छन्दसि' इत्युप्रत्ययः, तन्वादित्वादुवङ् । तस्माद्धिरण्यकेशः सर्वं जानाति, अस्माकमुदकं निस्सारयति ॥

[21]स्तम्बस्य धूममन्वीक्षते—आ ते सुपर्णा इति त्रिष्टुभा ॥ हे

ष्णो नोनाव वृषभो यदीदम् । शि-
वाभिर्न स्मयमानाभिरागात्पतन्ति
मिहस्स्तनयन्त्यभ्रा । वाश्रेव वि-

अमिनन्त । एवैः । कृष्णः । नोनाव । वृषभः ।
यदि । इदम् । शिवाभिः । न । स्मयमानाभिः ।
एति । अगात् । पतन्ति । मिहः । स्तनयन्ति ।
अभ्रा । [22]वाश्रा । इव । विद्युदिति वि-द्युत् । मि-

---

आदित्यात्मन् अग्ने ते तव सुपर्णाः शोभनपतनाः रश्मयः अमिनन्त आमिन्वते आनयन्ति वृष्टिम् । डुमिञ् प्रक्षेपणे, व्यत्ययेन श्ना, अन्तादेशश्च, संहितायां परेण वृद्ध्यभावश्च । एवैः अयनैः इत उदकमादाय मण्डलं यान्ति, ततो मध्यमस्थानं यान्ति । एवमयनैर्वृष्टिमानयन्ति । अथ यदीदं रश्मयः कुर्वन्ति तदा कृष्णो मेघः वृषभः वर्षिता मध्यमस्थानमागत्य नोनाव प्रशस्तं शब्दं भृशं करोति । नौतेर्यङ्लुगन्ताच्छान्दसो लिट् । तदानीं शिवाभिर्न सानुग्रहाभिरिव स्मयमानाभिः हसन्तीभिरिव फेनवत्तया अद्भिस्सह आगात् आगच्छति वर्षन् मेघः । एतेः छान्दसो लुङ् । स्मयतेर्ङित्त्वात्सार्वधातुकानुदात्तत्वम् । तदनन्तरं मिहः आपः पतन्ति सर्वतः पृथिव्याम्, स्तनयन्तिच समन्तात् अभ्रा अभ्राणि । 'शेश्छन्दसि' इति लोपः ॥

[22]वक्ष्यमाणस्य मारुतस्य पुरोनुवाक्या याज्या च—वाश्रेव, पर्वतश्चिदिति गायत्रीत्रिष्टुभौ ॥ केचित्तु—'आ ते सुपर्णाः' इत्या-

द्युन्मिमाति वत्सं न माता सिषक्ति।
यदेषां वृष्टिरसर्जि । पर्वतश्चिन्महि
वृद्धो बिभाय दिवश्चित्सानु रेजत
स्वने वः । यत्क्रीडथ मरुतः॥३१॥

माति । वत्सम् । न । माता । सिषक्ति । यत् । एषाम् । वृष्टिः । असर्जि । [23]पर्वतः । चित् । महि । वृद्धः । बिभाय । दिवः । चित् । सानु । रेजत । स्वने । वः। यत् । क्रीडथ । मरुतः ॥ ३१ ॥ ऋष्टि-

---

दय ऋचस्तिस्रोपि धूमान्वीक्षणमन्त्रा इत्याहुः । वाश्रेव वाश्यमानेव मरुतः प्रति । यथा प्रस्नवनी माता वत्सं प्रति वाश्यमाना भवति; तथा विद्युत् मरुतः प्रति वाश्यमाना मिमाति मिमीते । माङ् माने, जौहोत्यादिकः, अत्र तु सेचनकर्मा, व्यत्ययेन परस्मैपदम् । सिषक्ति सेवते च माता वत्समिव । षञ्जेः शपः श्लुः 'बहुलं छन्दसि' इत्यभ्यासस्येत्वम् । यत् यदा वृष्टिः असर्जि सृज्यते । छान्दसो लुङ् । एषां मरुतां सम्बन्धिनी वृष्टिः तदारम्भे इत्थं विद्युन्मरुतो मिमाति सिषक्ति चेति । तस्मादस्माकमेवं भवत्वित्याशास्यते ॥

[23]पर्वतश्चिदित्यादि ॥ अप्यर्थे चिच्छब्दः । महि महत् वृद्धः पर्वतो बिभाय बिभेति वः स्वने गर्जिते । किं च—दिवोप्युपरिगतस्य पर्वतस्य सानु रेजत रेजते कम्पते स्वने युष्माकम् । रेजृ कम्पने, टेरेत्वाभावश्छान्दसः । छान्दसे वा लङि 'बहुलं छन्द-

ऋ॒ष्टिम॑न्त॒ आप॑ इव स॒ध्रिय॑ञ्चो ध-
वध्वे । अ॒भि क्रन्द स्त॒नय॑ ग॒र्भमा
धा॑ उद॒न्वता॑ परि॑ दीया॒ रथे॑न ।

मन्त॒ इत्यृ॑ष्टि—मन्तः॑ । आप॑ः । इ॒व । स॒ध्रिय॑ञ्चः ।
ध॒व॒ध्वे॒ । [24]अ॒भीति॑ । क्र॒न्द॒ । स्त॒नय॑ । गर्भ॑म् ।
एति॑ । धा॒ः । उ॒द॒न्वतेत्यु॑दन्—वता॑ । परीति॑ । दी॒-
य॒ । रथे॑न । दृति॑म् । सु । अ॒ति॑ । कु॒र्ष॒ । विषि॑त॒-

स्यमाङ्योगेऽपि' इत्यडभावः । कदेत्याह—यदा हे मरुतः ऋष्टि-
मन्तः वज्रायुधवन्तः यूयं क्रीडथ । तदानीं युष्माकं गर्जितं
श्रुत्वा पर्वतोपि बिभेति सान्वपि कम्पते इति । 'ह्रस्वनुड्भ्यां
मतुप्' इति मतुपः उदात्तत्वम् । किं च—तस्मिन् काले यूयं
आप इव व्यापका इव सध्रियञ्चः सहाञ्चन्त्यः 'सहस्य सध्रिः'
इति सध्र्यादेशः । अध्रिसध्र्योरन्तोदात्तनिपातनं कृत्स्वरनिवृत्त्यर्थम् ।
धवध्वे धावत छान्दसं ह्रस्वत्वम् । धुनोतिर्वा गतिकर्मा, व्यत्य-
येन शप् । तस्मादस्माकं वृष्ट्यर्थं गर्जन्तः क्रीडन्तश्च धाव-
ध्वमिति ॥

[24]अथाश्वं वाससा अभिवेष्टयति—अभिक्रन्देति त्रिष्टुभा ॥ अभि-
क्रन्द अभितस्सर्वतः शब्दं कुरु स्तनय उच्चैर्गर्ज । तिङः पर-
त्वान्न निहन्यते । ततश्च गर्भं मेघस्योदकं आधाः गर्भमाधेहि ।
लेटि शपो लुक् । किंच—उदन्वता उदकवता रथेन रंहणेन परि
दीय सर्वतो गच्छ, दीयतिः छान्दसो गतिकर्मा । उदकस्योद-

दृतिꣳ सु कर्ष विषितं न्यञ्चꣳ स॒मा भवन्तूद्वता निपादाः । त्वं त्या चिदच्युताग्ने पशुर्न यवसे । धामा

मिति वि–सितम् । न्यञ्चम् । समाः । भवन्तु । उद्वतेत्युत्–वता । निपादा इति नि–पादाः । [25]त्वम् । त्या । चित् । अच्युत । अग्ने । पशुः । न । यवसे । धाम । ह । यत् । ते । अजर । वना ।

न्भावश्छान्दसः, 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् । ततस्तं मेघं चर्ममयो जलाधारविशेषो दृतिः तद्वत्सुकर्ष सुखेन कर्ष विषितं विमुक्तद्वारम् । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । न्यञ्चं अवाङ्मुखीकृतम् । 'न्यधी च' इति गतेः प्रकृतिस्वरत्वम् । ततश्चैवं त्वया कृते समा भवन्तु तुल्या भवन्तु । उद्वता उन्नतेन स्थलेन निपादाः निम्नाः उदकेन सर्वं समीकृतमस्तु । पदेर्घञ्, थाथादिनोत्तरपदान्तोदात्तत्वम् । एवमश्वात्मनाऽग्निस्स्तूयते 'उपसर्गाच्छन्दसि' इति उच्छब्दाद्वतिः ॥

[25]अथ 'अग्नये धामच्छेदे पुरोडाशमष्टाकपालं निर्वपेन्मारुतं सप्तकपालं सौर्यमेककपालम्'* इत्येतेषां त्रयाणां हविषां याज्यानुवाक्याः । तत्राग्नेयस्य पुरोनुवाक्या—त्वं त्या चिदच्युतेत्यनुष्टुप् ॥ 'अच्युत' इति प्रथमपादान्तः । अग्ने इति पादादित्वान्न निहन्यते । हे अग्ने त्वमेव त्याचित् तान्यपि वना वनानि उदकानि

*तै. सं. २-४-१०.

ह यत्ते अजर वना वृश्चन्ति शिक्वसः।
अग्ने भूरीणि तव जातवेदो देव
स्वधावोऽमृतस्य धाम। याश्च ॥४०॥

वृश्चन्ति। शिक्वसः। [26]अग्ने। भूरीणि। तव। जात-वेद इति जात-वेदः। देव। स्वधाव इति स्वधा-वः। अमृतस्य। धाम। याः। च ॥ ४० ॥ मा-

---

अच्युत अच्युतानि अविनाशीनि। उभयत्रापि 'शेश्छन्दसि' इति लोपः। तानि यानि वनानि तव शिक्वसः अर्चींषि वृश्चन्ति भक्षयन्ति तानि त्वमेव भूत्वा अच्युतानि तिष्ठन्ति। अत्र दृष्टान्तमाह—पशुर्न यवसे। यथा यवसे घासे भक्षिते पशुरेव भवति सोपि पश्चात्मना अवतिष्ठते। यद्वा—तान्यपि त्वमेव यवसे मिश्रयसि स्थापयसि। विकरणादिव्यत्ययः 'चनचिदिव' इति निघाताभावः। तस्मात्तवैवात्र धाम जन्मस्थानं वा त्वमेव तत्तदात्मना जायसे तिष्ठसि वा। हे अजर विनाशरहित त्वं खलु अविनाशः उदकात्मना वर्षकाले जायसे। अन्यथा तान्यप्युपसंहृत्य स्वरूपेणावतिष्ठसे इति 'अन्येषामपि दृश्यते' इति धामशब्दस्य संहितायां दीर्घत्वम्। स त्वमस्मदर्थं वर्षेति ॥

[26]तत्रैव याज्या—अग्ने इति त्रिष्टुप् ॥ हे अग्ने जातवेदः जातप्रज्ञ। यद्वा—जातानां वेदितः देव देवनशील स्वधावः अन्नवन्। 'मतुवसोः' इति रुत्वम्। तवामृतस्यामरणस्य भूरीणि बहूनि धाम धामानि तेजांसि 'सुपां सुलुक्' इति लुक्। याश्च मायाः कर्माणि मायिनां कर्मिणां यजमानानां सम्बन्धिनीः पूर्वीः

मा॒या मा॒यिनां॑ विश्वमिन्व॒ त्वे पू॒र्वी-
स्सं॑द॒धुः पृं॑ष्टबन्धो । दि॒वो नो॑ वृ॒-
ष्टिं म॑रुतो ररीध्वं॒ प्र पि॑न्वत॒ वृष्णो॒

याः । मा॒यिना॑म् । वि॒श्व॒मि॒न्वेति॑ विश्वं॒-इ॒न्व॒ । त्वे इति॑ । पू॒र्वीः । स॒न्द॒धु॒रिति॑ सं॒-द॒धुः । पृ॒ष्ट॒ब॒न्धो॒ इति॑ पृष्ट-ब॒न्धो॒ । [27]दि॒वः । नः॒ । वृ॒ष्टिम् । म॒रु॒तः । र॒री॒ध्व॒म् । प्रेति॑ । पि॒न्व॒त॒ । वृष्णः॑ । अश्व॑स्य ।

---

पुरातनीः। गौरादित्वात् ङीष् । त्वे त्वयि सन्दधुः स्थापितवन्तः पूर्वे यजमानाः। ताश्च त्वयि भूरयः त्वामेवेष्टवन्तः सर्वे तेन त्वमेव सर्वाणि तेजांसीति । हे विश्वमिन्व विश्वस्य प्रीणयितः। इवि प्रीणने, छान्दसः खश्, 'अरुर्द्विषदजन्तस्य मुम्'। हे पृष्टबन्धो स्पर्शवतां बन्धो। स्पृशेश्छान्दसस्सलोपः, धात्वन्तरं वा द्रष्टव्यम् । व्रीह्यादित्वान्मायाशब्दादिनिः। त्वे इति 'सुपां सुलुक्' इति शे आदेशः । ईदृशस्त्वं अस्मान्वर्षेण रक्षेति ॥

[27]अथ मारुतस्य चतस्रो याज्यानुवाक्या विकल्प्यन्ते । तत्र प्रथमा—दिवो न इति त्रिष्टुप् ॥ हे मरुतः नः अस्मदर्थं दिवो वृष्टिं ररीध्वं स्रावयत । री स्रवणे, व्यत्ययेन शपश्श्लुः, वर्णव्यत्ययेनाभ्यासस्येत्वम् । वृष्णः वर्षितुः इन्द्रस्य अश्वस्य व्याप्तिमतः धाराः वर्षधाराः प्रपिन्वत प्रकर्षेण आसिञ्चत । पिवि मिवि सेचने, चङ् । हे वृषन् इन्द्र त्वमपि अर्वाङ् अस्मद-

अश्व॑स्य॒ धारा॑ः । अ॒र्वाङे॒तेन॑ स्तन-
यि॒त्नुने॒ह्य॒पो नि॑षि॒ञ्चन्नसु॑रः पि॒ता न॑ः ।
पिन्व॑न्त्य॒पो म॒रुत॑स्सु॒दान॑वः पयो॑
घृ॒तव॑द्वि॒दथे॑ष्वा॒भुव॑ः । अत्यं॒ न मि॒हे

धारा॑ः । अ॒र्वाङ् । ए॒तेन॑ । स्त॒न॒यि॒त्नुना॑ । ए॒हि॑ ।
इ॒हि॒ । अ॒पः । नि॒षि॒ञ्चन्निति॑ नि–सि॒ञ्चन् । असु॑रः ।
पि॒ता । न॒ः । [28]पिन्व॑न्ति । अ॒पः । म॒रुत॑ः ।
सु॒दान॑व॒ इति॑ सु–दान॑वः । पय॑ः । घृ॒तव॒दिति॑ घृ॒त
–व॒त् । वि॒दथे॑षु । आ॒भुव॒ इत्या॑–भुव॑ः । अत्य॑म् ।
न । मि॒हे । वीति॑ । न॒य॒न्ति॒ । वा॒जिन॑म् । उत्स॑म् ।

---

भिमुखं याहि आगच्छ । एतेन मेघेन स्तनयित्नुना शब्दयता सहागच्छ । ‘ओमाङोश्च’ इति पररूपत्वम् । अपो निषिञ्चन् वर्षन् असुरः आसनकुशलः । असेरुरन् । असुमान्वा, असुप्रदो वा । प्रजानां नोस्माकं पिता पाता ॥

[28]अथ द्वितीया—पिन्वन्तीति जगती ॥ पिन्वन्ति सिञ्चन्ति क्षारयन्ति अपः । ‘ऊडिदम्’ इति शप उदात्तत्वम् । मरुतस्सुदानवः शोभनदानाः । आद्युदात्तं द्व्यच्छन्दसि’ इत्युत्तरपदाद्युदात्तत्वन् । पयः पयस्सदृशीरपः पिन्वन्ति घृतवत् घृतमिव विदथेषु यज्ञेषु आभुवः आभुवन्तीत्याभुवः ऋत्विजः ते यदा यज्ञेषु घृतं पिन्वन्ति एवमपो मरुतः पिन्वन्ति । हेतुमाह—अत्यं न अश्वमिव यथा अश्वमश्वसादिनो विनयन्ति शिक्षयन्ति एवं मरु-

वि नंयन्ति वाजिनमुत्सं दुहन्ति स्तनयंन्तमक्षिंतम् । उदप्रुतों मरुतस्ताꣳ इंयर्त वृष्टिंम् ॥ ४१ ॥ ये विश्वें मरुतों जुनन्तिं । क्रोशांति ग-

दुहन्ति । स्तनयंन्तम् । अक्षितम् । [29]उदप्रुत इत्युंद-प्रुतंः । मरुतः । तान् । इयर्त । वृष्टिंम् ॥ ४१ ॥ ये । विश्वें । मरुतंः । जुनन्तिं । क्रोशांति । गर्दी ।

तोपि मिहे उदकार्थं वर्षार्थं वाजिनं वेगवन्तं मेघं विनयन्ति विधेयीकुर्वन्ति, 'सावेकाचः' इति मिहश्चतुर्थ्या उदात्तत्वम् । ततस्तं विधेयीकृत्य उत्सं उन्दनशीलं स्तनयन्तं गर्जन्तं अक्षितं अनुपक्षयं दुहन्ति मरुतः, यस्मादेवमेते कुर्वन्ति तस्मादुच्यते पिन्वन्त्यप इति । एवं अस्माकमपि पिन्वन्त्यपो मरुत इति । स्तन शब्दे, चुरादिः अदन्तः ॥

[29]अथ तृतीया—उदप्रुत इति त्रिष्टुप् ॥ उदप्रुतः उदकस्य प्रापयितॄन् । च्युङ् ज्युङ् प्रुङ् पुङ् गतौ । तानास्माकीनान् मरुतः इयर्त गच्छत भजत यजमानार्थं हे ऋत्विजः । ऋ गतौ, जौहोत्यादिकः, 'तप्तनप्तनधनाश्च' इति तस्य तनबादेशः, 'अर्तिपिपर्त्योश्च' इति अभ्यासस्येत्वम् । ये यूयं विश्वे वृष्टिं जुनन्ति प्रार्थयन्ते मरुतः ते यूयमास्माकीनान् मरुतः इयर्त । तानित्यस्य संहितायां 'दीर्घादटि समानपादे' इति रुत्वम् । अत्र प्रार्थयितुः प्रदातुश्च द्वौ दृष्टान्तौ दर्शयति—यथा गर्दा निगरणशीला कन्या तुन्ना बुभुक्षया पीडिता क्रोशाति क्रोशति । लेट्याडागमः । अभ्यवहार्यं प्रार्थयमाना रोदितीत्यर्थः । एवं वृष्टिं प्रार्थयमाना ऋत्विजः मरुत

दी कन्येव तुन्ना पेरुं तुञ्जाना पत्येव जाया। घृतेन द्यावापृथिवी मधुना समुक्षत पयस्वतीः कृणुताप

कन्या। इव। तुन्ना। पेरुम्। तुञ्जाना। पत्या। इव। जाया। [30]घृतेन। द्यावापृथिवी इति द्यावा–पृथिवी। मधुना। सम्। इति। उक्षत। पयस्वतीः। कृणुत। आपः। ओषधीः। ऊर्जम्। च। तत्र।

---

आह्वयन्तीति भावः। यथा च तां कन्यां पेरुं पातुकामां, उपलक्षणत्वाद्बुभुक्षितां च, सामर्थ्यात् क्रोशन्तीं तुञ्जाना भाषमाणा मा रोदीः किं ते अभिलषितमिति वदन्ती पत्या सह जाया तस्या अभिमतं प्रयच्छति अभिप्रेतदानेन मातापितरौ तां प्रीणयत इत्यर्थः। एवं वृष्टिं प्रार्थयमानेभ्यो ऋत्विग्भ्यः तां मरुतः प्रयच्छन्तीति। तस्मादास्माकीनान् ऋत्विजः वर्षदानेन मरुतः प्रीणयतेति। 'मापोरिरुन्' इति पिबतेरिरुन्प्रत्यये पेरुः। तुजि भाषायाम्, चुरादिः, 'बहुलं छन्दसि' इति शपो लुक्, 'छन्दस्युभयथा' इति शानच्, आर्धधातुकत्वाण्णिलोपः॥

[30]अथ चतुर्थी—घृतेनेति अतिजगती विवृद्धपादा। 'घृतेन' इति त्रिभिरक्षरैः प्रथमः पादो विवृद्धः। हे नरः नेतारः मरुतः 'नयतेर्डिच्च' इति ऋप्रत्ययः। घृतेनोदकेन मधुना रसेन मधुरसेन द्यावापृथिवी समुक्षत सिञ्चत। 'दिवो द्यावा' इति द्यावादेशः, 'देवताद्वन्द्वे च' इति पुर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम्। ततस्तस्य मधुरसस्योदकस्य उपर्युक्षणेन आपः पूर्वस्थिताः पय-

ओषधीः । ऊर्जं च तत्र सुमतिं च पिन्वथ यत्रा नरो मरुतस्सिञ्चथा मधु । उदुत्यं चित्रम् । और्वभृ-

सुमतिमिति सु–मतिम् । च । पिन्वथ । यत्र । नरः । मरुतः । सिञ्चथ । मधु । [31]उदिति । उ । त्यम् । [32]चित्रम् । [33]और्वभृगुवदित्यौर्वभृगु–वत् ।

स्वतीः पानार्हरसवतीः कृणुत कुरुत । विभक्तिव्यत्ययेन द्विती-यास्थाने प्रथमा । ओषधीश्च पयस्वतीः कृणुतेत्येव । इदं चाप्य-स्तु—यूयं मधु मधुरं उदकं सिञ्चथ । तत्र ऊर्जमन्नं बलं वा सुमतिं च कल्याणीं मतिं पिन्वथ सिञ्चथ दत्तेत्यर्थः । अबहु-व्रीहेरपि 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । बहुव्रीहिर्वा, सुमतिं च प्रजामिति । यत्रसिंचथशब्दयोः 'अन्येषामपि दृश्य-ते' इति सांहितिकं दीर्घत्वम् ॥

[31]अथ सौम्यस्य पुरोनुवाक्या याज्या च—'उदु त्यं जातवेदसम्,' 'चित्रं देवानाम्' इति गायत्रीत्रिष्टुभौ ॥ व्याख्याते चैते* । अत्र प्रतीकग्रहणम् । तमिमं जातवेदसं जातप्रज्ञानं सूर्यं देवं केतवः उद्वहन्ति यथा सर्वेषां द्रष्टुं योग्यो भवतीति ॥

[32]द्वितीया—चित्रं चायनीयं देवानां सर्वेषामनीकं अनीकभूतं मित्रस्य वरुणस्य च अग्नेश्चक्षुस्थानीयं जङ्गमस्य स्थावरस्य आ-त्मभूतः सूर्य उदगात् उदेति । उदेत्य च द्यावापृथिवी अन्त-रिक्षं च रश्मिभिरापूरयतीति ॥

[33]अथोपहोमार्थाः तिस्रो गायत्र्यचः—और्वभृगुवदित्याद्याः तत्र ॥

*सं. १-४-४३[1—2].

शु॒चि॑मप्न॒वानु॑वदा हुवे । अ॒ग्निꣳ स॒मु॒द्रवा॑ससम् । आ स॒वꣳ स॑वि॒तु- र्यथा॒ भग॑स्येव भु॒जिꣳ हु॑वे । अ॒ग्नि- ꣳ स॒मु॒द्रवा॑ससम् । हु॒वे वात॑स्वनं

शुचिम् । अ॒प्न॒वा॒नु॒वदित्य॑प्नवान-वत् । इति । हु॒वे । अ॒ग्निम् । स॒मु॒द्रवा॑स॒स॒मिति स॒मु॒द्र-वा॒स॒स॒म् ।[34] इति । स॒वम् । स॒वि॒तुः । य॒था॒ । भग॑स्य । इ॒व । भु॒जिम् । हु॒वे । अ॒ग्निम् । स॒मु॒द्रवा॑स॒स॒मिति स॒मु॒द्र-वा॒स॒स॒म् ।[35] हु॒वे । वात॑स्व॒न॒मिति॒ वात॑-स्व॒न॒म् ।

---

प्रथमा । 'शुचिम्' इति प्रथमपादान्तः । और्वाप्नवानौ भार्गवा वृषी । यथोक्तं भृगूणां पञ्चार्षेयप्रवरे-'जमदग्निवदौर्ववदप्नवान-वच्च्यवनवद्भृगुवत्' इति । और्वश्चासौ भृगुश्च और्वभृगुः । भृगुरिति भार्गवोऽभेदेनोच्यते । यथा और्वो भार्गवोऽग्निमाह्वयत्, यथा चाप्न-वानोऽग्निं तद्वदहमपि अग्निं शुचिं समुद्रवाससं आहुवे आह्वयामि आजुहोमि वा । शपो लुक् । समुद्रे वासो यस्य स समुद्रवासाः । अन्तरिक्षे वसतीति केचित् । अपामाच्छादयितेत्यन्ये ।

[34] द्वितीया- यथा सवितुस्सवमनुज्ञां आह्वयामि प्रार्थये, यथा च भगस्यादित्यस्य भुजिं भोगं प्रार्थये तद्वदग्निं समुद्रवाससं हुवे । 'अवस्यवौ छन्दसि' इत्यजन्तौ निपात्येते । भुजेरौणादिकः किप्रत्ययः, भुजि रिति । यद्वा-'इक्श्तिपौ' इति धातुनिर्देशे विधीयमानोऽर्थनिर्देशेऽपि प्रवर्तते

[35] तृतीया- वातस्वनं वातस्वनवन्तं कविं क्रान्तदर्शनं पर्जन्य-क्रन्दं पर्जन्यवत्सर्वैराह्वातव्यं सर्वेषां प्रियम् । उभयत्राप्युपमानपू-

कविं पर्जन्यक्रन्द्यꣳ सहः । अग्निꣳ
समुद्रवाससम् ॥ ४२ ॥

कविम् । पर्जन्यक्रन्द्यमिति पर्जन्य-क्रन्द्यम् । स-
हः । अग्निम् । समुद्रवाससमिति समुद्र-वाससम् ॥

वीर इषꣳ हव्यमुषसौ मरुतश्च वृष्टिं
भगस्य द्वादश च ॥ ११ ॥

प्रजापतिरकामयतैष ते गायत्रो यज्ञं वै प्रजा-
पतेर्जायमानाः प्राजापत्या यो वा अयथादेवतमि-
ष्टर्गो निग्राभ्यास्स्थ यो वै देवाञ्छ्रेष्ठोऽग्निना रयिमे-
कादश ॥ ११ ॥

प्रजापतिः प्रजापतेर्जायमाना व्यायच्छन्ते
महीमिमान्माया मायिनां द्विचत्वारिꣳशत् ॥ ४२ ॥
प्रजापतिरकामयताग्निꣳ समुद्रवाससम् ॥

---

वंपदप्रकृतिस्वरत्वम् । सहः सर्वेषां बलं; तद्धेतुत्वात् । यद्वा - सहस्व-
न्तम् । मतुबर्थीयो लुप्यते । ईदृशमग्निं समुद्रवाससं ह्वये आह्वयामीति ॥

इति भट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये
तृतीयकाण्डे प्रथमप्रपाठके एकादशोऽनुवाकः

समाप्तश्च प्रपाठकः

## द्वितीयप्रपाठकः

यो वै पवमानानामन्वारोहान्
विद्वान् यजतेऽनु पवमानाना रोहति
न पवमानेभ्योऽवच्छिद्यते श्येनोसि
गायत्रच्छन्दा अनु त्वाऽऽरभे स्वस्ति

[1] यः । वै । पवमानानाम् । अन्वारोहानित्यनु-आरोहान् । विद्वान् । यजते । अन्विति । पवमानान् । एति । रोहति । न । पवमानेभ्यः । अवेति । छिद्यते । श्येनः । असि । गायत्रच्छन्दा इति गायत्र-छन्दाः । अन्विति । त्वा । एति । रभे ।

---

## अथ द्वितीयप्रपाठकः

[1]यो वै पवमानानामित्यादि ॥ पवमानाः बहिष्पवमानादयः । पूज्यजोऽश्यानन्' । तेषामन्वारोहाः तान् । यैरन्वारुह्यन्ते अनुक्रमेण प्राप्यन्ते तेषामन्वारोहाः मन्त्राः । तान् विद्वान्यजमानः पवमानानन्वारोहति । न पवमानेभ्योवच्छिद्यते । के पुनरन्वारोहा इत्यत आह—श्येनोसीति । तत्र बहिष्पवमाने पञ्चम्यां स्तोत्रियायां प्रस्तुतायां वाचयति । श्येनः पक्षिविशेषः । स शयनीयः शीघ्रगतिः । स एव त्वमसि । गायत्रच्छन्दाः गायत्रच्छन्दस्कः । गायत्र्येव गायत्रम्, 'छन्दसः प्रत्ययविधाने नपुंसके स्वार्थ उपसंख्यानम्' इत्यण् । तं त्वामहमन्वारभे अनुक्रमेण रोहामि ।

मा सं पारय सुपर्णोऽसि त्रिष्टुप्छन्दा
अनु त्वाऽऽरभे स्वस्ति मा सं पारय
सघोऽसि जगतीछन्दा अनु त्वाऽऽ
रभे स्वस्ति मा सं पारयेत्याहैते ॥
॥ १ ॥ वै पवमानानामन्वारोहास्तान्
य एवं विद्वान् यजतेऽनु पवमानाना

स्वस्ति । मा । समिति । पारय । [2]सुपर्ण इति सु-पर्णः । असि । त्रिष्टुप्छन्दा इति त्रिष्टुप्-छन्दाः । अन्विति । त्वा । एति । रभे । स्वस्ति । मा । समिति । पारय । [3]सघा । असि । जगतीछन्दा इति जगती-छन्दाः । अन्विति । त्वा । एति । रभे । स्वस्ति । मा । समिति । पारय । इति । आह । एते ॥ १ ॥ वै । पवमानानाम् । अन्वारोहा इत्यनु-आरोहाः । तान् । यः । एवम् । विद्वान् । यजते । अन्विति । पवमानम् । एति । रोहति ।

---

किंच – मा स्वस्ति अविघ्नेन संपारय समाप्तकर्माणं कुरु । पारतीर कर्मसमाप्तौ ॥

[2] अथ माध्यन्दिने पवमाने अष्टम्यां स्तोत्रियायां प्रस्तुतायां वाचयति – सुपर्णोऽसीति । सुपर्णः श्येनः दृढतरः शोभनपतनः । स एव त्वमसि । त्रिष्टुप्छन्दाः । गतमन्यत् ॥

[3] अथार्भवे पवमाने नवम्यां प्रस्तुतायां वाचयति – सघाऽसीति ॥

रोहति न पवमानेभ्योऽवच्छिद्यते यो
वै पवमानस्य सन्ततिं वेद सर्वमा-
युरेति न पुराऽऽयुषः प्र मीयते पशु
मान्भवति विन्दते प्रजां पवमानस्य
ग्रहा गृह्यन्तेऽथ वा अस्यैतेऽगृहीता
द्रोणकलश आधवनीयः पूतभृत्तान्
यदगृहीत्वोपाकुर्यात्पवमानं वि ॥ २॥
च्छिन्द्यात्तं विच्छिद्यमानमध्वर्योः प्रा-

न । पवमानेभ्यः । अवेति । छिद्यते । यः । वै । पवमानस्य । सन्ततिमिति सं-ततिम् । वेद । सर्वम् । आयुः । एति । न । पुरा । आयुषः । प्रेति । मी-यते । पशुमानिति पशु-मान् । भवति । विन्दते । प्रजामिति प्र-जाम् । पवमानस्य । ग्रहाः । गृ-ह्यन्ते । अथ । वै । अस्य । एते । अगृहीताः । द्रोणकलश इति द्रोण-कलशः । आधवनीय इत्या-धवनीयः । पूतभृदिति पूत-भृत् । तान् । यत् । अगृहीत्वा । उपाकुर्यादित्युप-आकुर्यात् । पवमानम् । वीति ॥ २ ॥ छिन्द्यात् । तम् । वि-च्छिद्यमानमिति वि-छिद्यमानम् । अध्वर्योः ।

गृध्रो वा भासो वा सुपर्णादपि वृद्धतरः । स एव त्वमसि ।

णोऽनु विच्छिद्येनोपयामगृहीतोसि प्रजापतये त्वेति द्रोणकलशमभिमृशेदिन्द्राय त्वेत्याधवनीयं विश्वेभ्यस्त्वा देवेभ्य इति पूतभृतं पव-

प्राण इति प्र-अनः । अनु । वीति । छिद्येत । उपयामगृहीत इत्युपयाम-गृहीतः । असि । प्रजापतय इति प्रजा-पतये । त्वा । इति । द्रोणकलशमिति द्रोण-कलशम् । अभीति । मृशेत् । [5] इन्द्राय । त्वा । इति । आधवनीयमित्या-धवनीयम् । [6] विश्वेभ्यः । त्वा । देवेभ्यः । इति । पूतभृ-

---

जगतीछन्दः । समानमन्यत् । इत्याहेति । निगदव्याख्यातम् ॥

[4-6] यो वै पवमानस्येत्यादि ॥ सन्तानः सन्ततिः अविच्छेदः । 'गतौ च' इति गतेः प्रकृतिस्वरत्वम् । आयुषः शतसंवत्सर-प्रमाणात् पुरा प्राक् मध्ये न प्रमीयते न म्रियते, पशुमान् भवति बहुपशुर्भवति । 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् । का पुनस्सन्ततिरित्याह – पवमानस्य ग्रहाः द्रोणकलशादयः । ते पवमानोपाकरणात्प्राक् ये गृह्यन्ते सा पवमानस्य सन्ततिः । तर्हि कस्य ते गृह्यन्तामित्यत आह – अथेति । एते खलु पवमानस्य ग्रहास्तुः अस्य पवमानस्य सम्बन्धितया गृहीता एव ग्रहा भवन्ति । के पुनस्ते इत्यत आह – द्रोणकलश इत्यादि । तर्हि

मानमेव तत्सं तनोति सर्वमायुरेति न पुराऽऽयुषः प्र मीयते पशुमान्भवति विन्दते प्रजाम् ॥ ३ ॥

तमिति पूत-भृतम् । पवमानम् । एव । तत् । समिति । तनोति । सर्वम् । आयुः । एति । न । पुरा । आयुषः । प्रेति । मीयते । पशुमानिति पशु-मान् । भवति । विन्दते । प्रजामिति प्र-जाम् ॥ ३ ॥

एते वि द्विचत्वारिंशच्च ॥ १ ॥

---

ते मा ग्राहिषतेत्यत आह—तान्यदित्यादि । यद्येवं का गतिः, यदि गृह्यन्ते पवमानग्रहास्स्युः, यदि न गृह्यन्ते पवमानो विच्छिद्येत । नहि भवन्ति गृह्यते न गृह्यन्ते चेति । तत्राह—उपयामगृहीतोसि प्रजापतये त्वेत्यादि । इयं वा उपयामः तयैव गृहीतस्त्वमसीति व्याख्यातम्* । ते त्वा प्रजापतये प्रजापत्यर्थं अभिमृशामीति शेषः । अनेन मन्त्रेण द्रोणकलशमभिमृशेत् उपयामगृहीतोसि त्रयाणामनुषङ्गः । उपयामगृहीतोसीन्द्राय त्वेत्याधवनीयमभिमृशेत् । उपयामगृहीतोसि विश्वेभ्यस्त्वा देवेभ्य इति पूतभृतमभिमृशेत् । सर्वे पुरस्तादुपयामाः । एतेनाभिमर्शनेन ग्रहपर्यायेण ते गृहीता भवन्ति । तेन पवमानं सन्तनोति । सर्वमायुरेतीत्यादि । गतम् ॥

इति तृतीये द्वितीये प्रथमोनुवाकः

---

* तै १-४-३१

त्रीणि वाव सवनान्यथ तृतीयꣳ
सवनमव लुम्पन्त्यनꣳशु कुर्वन्त-
उपाꣳशुꣳ हुत्वोपाꣳशुपात्रेऽꣳशुम-
वास्य तं तृतीयसवनेऽपिसृज्याभि-
षुणुयाद्यदाप्याययति तेनाꣳशुमद्य-

[1]त्रीणि । वाव । सवनानि । अथ । तृतीयम् । सवनम् । अवेति । लुम्पन्ति । अनꣳशु । कुर्वन्तः । उपाꣳशुमित्युप-अꣳशुम् । हुत्वा । उपाꣳशुपात्र इत्युपाꣳशु-पात्रे । अꣳशुम् । अवास्येत्यव-अस्य । तम् । तृतीयसवन इति तृतीय-सवने । अपिसृज्येत्यपि-सृज्य । अभीति । सुनुयात् । यत् । आप्याययतीत्या-प्याययति । तेन । अꣳशुमदित्यꣳ-

[1]त्रीणि वाव सवनानीत्यादि । त्रीण्येतानि सवनानि प्रातस्सवनादीनि तैः त्रिभिरपि सवनैः सवनवद्भिर्भवितव्यम् । अथैवं सति तृतीयसवनं अनंशु कुर्युः इदं लुंपेयुर्विनाशयेयुः, सवनस्वभाववैधुर्यात् । तस्मात् उपांशु हुत्वा उपांशुपात्रे प्रागेव प्रातस्सवन एव यौंशुः तं तृतीयसवने माध्यन्दिनीये ऋजीषे अपिसृज्य प्रक्षिप्य अभिषुणुयात् । यदाप्याययतीत्यादि । केचिदाहुः—अंशोः प्रक्षेप आप्यायनमिति । अन्ये आहुः—अद्भिराप्यायनं कर्तव्यमिति । तेनाप्यायनेन अंशुमद्भवति । तृतीयसवनस्याभिषवणे च ऋजीषवत्त्वं, तेन सर्वाणि सवनानि

दभिषुणोति तेनर्जीषि सर्वाण्येव त-
त्सवनान्यꣳशुमन्ति शुक्रवन्ति स-
मावद्वीर्याणि करोति द्वौ समुद्रौ वि-
ततावजूर्यौ पर्यावर्तते जठरेव पा-
दाः। तयोः पश्यन्तो अति यन्त्यन्य-

शु–मत्। यत्। अभिषुणोतीत्यभि–सुनोति। तेन। ऋजीषि। सर्वाणि। एव। तत्। सवनानि। अꣳशुमन्तीत्यꣳशु–मन्ति। शुक्रवन्तीति शुक्र–वन्ति। समावद्वीर्याणीति समावत्–वीर्याणि। करोति। [2]द्वौ। समुद्रौ। विततावितिवि–ततौ। अजूर्यौ। पर्यावर्तते इति परि–आवर्तते। जठरा। इव। पादाः। तयोः। पश्यन्तः। अतीति।

---

अंशुमन्ति शुक्रवन्ति रसवन्ति च भवन्ति। अतस्सर्वाणि सवनानि समावद्वीर्याणि तुल्यवीर्याणि च करोति। समादावतुप्॥

[2]आधवनीये दीर्णे प्रवृत्ते [अपवृत्ते] वा पात्र्यां चतुर्गृहीतं गृहीत्वा आहवनीये प्रायश्चित्तं जुहोति अन्वारब्धे यजमाने—द्वौ समुद्राविति त्रिष्टुभा॥ द्वौ समुद्रौ समुद्रसदृशौ आनन्त्यसाम्यात् अहोरात्रावुच्येते। तौ विततौ विस्तीर्णौ। 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम्। अजूर्यौ अहिंस्यौ अप्रतिबद्धौ। जुरी हिंसाहान्योः, 'ययतोश्चातदर्थे' इत्युत्तरपदान्तोदात्तत्वम्। पर्यावर्तेते पर्यायेणावर्तेते जठरा जठरे। 'सुपां सुलुक्' इति सप्तम्या

मपश्यन्तः ॥ ४ ॥ सेतुनाऽतिं य-
न्त्यन्यम् । द्वे द्रधसी सततीं वस्त
एकः केशी विश्वा भुवनानि विद्वा-

यन्ति । अन्यम् । अपश्यन्तः ॥ ४ ॥ सेतुना ।
अतीति । यन्ति । अन्यम् । [3]द्वे इति । द्रधसी
इति । सतती इति स–ततीं । वस्ते । एकः । के-
शी । विश्वा । भुवनानि । विद्वान् । तिरोधायेति

---

आकारः । यथा समुद्रस्य जठरे उदरे इव पादाः ऊर्मिप्रवा-
हाः पर्यावर्तन्ते उपर्युपरि पर्यायेणापतन्ति; एवमेतौ समुद्रौ पर्या-
वर्तेते । तयोरिति निर्धारणे । तयोर्मध्ये अन्यमेकमहरात्मकं
समुद्रं पश्यन्तः अतियन्ति अहनि वृत्तं प्रेक्षमाणाः जनास्तदति-
वाहयन्ति । अन्यमेकं रात्र्यात्मकं समुद्रं अपश्यन्तोतियन्ति,
अदर्शने हेतुमाह—सेतुना । यथा उदकरोधकृता सेतुना समुद्रान्तर्ग-
तमुदकं न पश्यन्ति, एवं प्रबोधनिरोधकारिणा स्वप्नेन रात्रिवृत्त-
मपश्यन्तः अतियन्ति । इत्थं महानुभावौ तावेव प्रमादकृतमेत-
त्समृद्धं कुरुतामिति ॥

[3]अथ पूतभृति दीर्णे प्रवृत्ते [अपवृत्ते] वा तथैव पात्र्यां चतुर्गृहीतं
गृहीत्वा आहवनीये जुहोत्यन्वारब्धे यजमाने—द्वे द्रधसी इति त्रिष्टुभा॥
द्वे द्रधसी वाससी अहोरात्रात्मके । द्रोणे विधार्येते इति द्रधसी,
द्रधातिर्वा छान्दसो धातुराच्छादनकर्मा । सतती सविस्तारे सन्तते
वा अन्योन्यानुषक्ते ते वासस्थानीये द्वे । एकः अयनशीलः आ-

न् । ति॒रो॒धा॒यै॒त्यसि॑तं॒ वसा॑न॒श्शु॒क्र-
मा द॑त्ते अनु॒हाय॑ ज्ञा॒र्यै॑ । दे॒वा वै
यद्य॒ज्ञेऽकु॑र्व॒त तद॑सु॑रा अकुर्व॒त ते

तिरः–धाय॑ । ए॒ति॒ । असि॑तम् । वसा॑नः । शु॒क्रम् ।
एति॑ । द॒त्ते॒ । अ॒नु॒हायेत्य॑नु–हाय॑ । ज्ञा॒र्यै॑ । [4]दे॒वाः ।
वै । यत् । य॒ज्ञे । अकु॑र्वत । तत् । असु॑राः । अ॒-

दित्यः वस्ते आच्छादयति । केशी रश्मिवान् । विश्वा विश्वानि भुवनानि भूतजातानि विद्वान् जानन् । तयोरसितं कृष्णं रात्र्यात्मकं वासो वसानः स आत्मा तिरोधाय अन्तर्हितं कृत्वा एति गच्छति । शुक्रं शुक्लं अहरात्मकं वास आदत्ते धारयति अनुहाय जीर्णाया रात्रेः पश्चादागत्य । यद्वा—जीर्णां वासस्थानीयां रात्रिं अनुक्रमेण हित्वा शुक्रमभिनवं वास आदत्ते तद्वसानः प्रकाशं गच्छतीति । 'नञ्जादिभ्यः'(?) इति जीर्यतेरिन्प्रत्ययः, 'कृदिकारादक्तिनः' इति ङीष् 'उदात्तयणः' इति विभक्तेरुदात्तत्वम्, 'क्रियाग्रहाणं कर्तव्यम्' इति कर्मणस्संप्रदानत्वाच्चतुर्थी । एवमहोरात्रयोरपि प्रवर्तयिता देवः इदं समृद्धं करोत्विति ॥

[4]देवा वा इत्यादि ॥ यन्नाम यत्किंचित्कर्म देवा असुरजयार्थं यज्ञे विषये अकुर्वत, तत्सर्वं असुरा अप्यकुर्वत । ततोसुरान् जेतुमशक्नुवन्तः तद्विजयोपायमन्विच्छन्तो देवा एतं वक्ष्यमाणं महायज्ञमपश्यन् । ततस्तमतन्वत अतिष्ठन् । कः पुनस्स महायज्ञ इत्याह—अग्निहोत्रमित्यादि । अत्रोक्तमाचार्येण—'तत्पृच्छति कः पुनस्स महायज्ञ इति । अयमेवैष चातुर्मास्यः सोम उक्तो भवति इति ।

देवा एतं महायज्ञमंपश्यन्तमंतन्व-
ताग्निहोत्रं व्रतमंकुर्वत तस्माद्विव्रंत-
स्स्याद्विर्ह्यंग्निहोत्रं जुह्वंति पौर्णमासं
यज्ञमंग्नीषोमीयंम् ॥ ५ ॥ पशुमंकु-

कुर्वत । ते । देवाः । एतम् । महायज्ञमिति महा-
यज्ञम् । अपश्यन्न् । तम् । अतन्वत । अग्निहोत्र-
मित्यंग्नि-होत्रम् । व्रतम् । अकुर्वत । तस्मांत् ।
द्विव्रंत इति द्वि-व्रतः । स्यात् । द्विः । हि । अग्नि-
होत्रमित्यंग्नि-होत्रम् । जुह्वंति । पौर्णमासमिति
पौर्ण-मासम् । यज्ञम् । अग्नीषोमीयमित्यंग्नी-
सोमीयंम् ॥ ५ ॥ पशुम् । अकुर्वत । दार्श्यम् । य-

---

अथ खलु य एव कश्चन सौम्योध्वरस्स महायज्ञः ’ इति । अ-ग्निहोत्रादिरूपेण प्रच्छन्नं व्रतोपाकरणादि कुर्वन्तः सोममाहरन् । यथाधिगतपरमार्था असुरास्स्वयमनुष्ठातुं न शक्नुयुः, यथा चाग्निहोत्रादिकमेवैते कर्म कुर्वन्तीति मन्येरन् तथा प्रच्छन्नं सोममाहरन्निति । द्वयोः कालयोः व्रतं यस्य स द्विव्रतः । जुह्वतीति । ‘ हि च ’ इति निघातप्रतिषेधः ‘ अभ्यस्तानामादिः ’ इत्याद्युदात्तत्वम् । अग्नीषोमीयमिति । द्यावापृथिव्यादिना छः, ‘ अग्नेस्तुत्स्तोमसोमाः ’ इति षत्वम्, ‘ ईदग्नेस्सोमवरुणयोः’ इतीकारः । दर्शे भवो दार्श्यः, छान्दसो ण्यः । आग्नेयमिति ।

वेत दाश्यं यज्ञमाग्नेयं पशुमकुर्वत
वैश्वदेवं प्रातस्सवनमकुर्वत वरुणप्र-
घासान्माध्यंन्दिनꣳ सवनꣳ साकमे-
धान्पितृयज्ञं त्र्यम्बकाꣳस्तृतीयसव-
नमकुर्वत तमेषामसुरा यज्ञमन्ववा-

ज्ञम् । आग्नेयम् । पशुम् । अकुर्वत । वैश्वदेवमिति वैश्व—देवम् । प्रातस्सवनमिति प्रातः—सवनम् । अकुर्वत । वरुणप्रघासानिति वरुण—प्रघासान् । माध्यंन्दिनम् । सवनम् । साकमेधानिति साक—मेधान् । पितृयज्ञमिति पितृ—यज्ञम् । त्र्यम्बकानिति त्रि—अम्बकान् । तृतीयसवनमिति तृतीय—सवनम् । अकुर्वत । तम् । एषाम् । असुराः ।

---

अग्नेर्ढक् । वैश्वदेवादयः चातुर्मास्ययागाः । साकमेधादित्रयं तृतीयसवनमकुर्वत । तमेषामित्यादि । एषां देवानां तादृशं यज्ञं महायज्ञात्मकं असुरा अन्ववाजिगांसन् अन्वेतुमनुष्ठातुमैच्छन् । 'सनि च' इति गमिरादेशः, 'अज्झनगमां सनि' इति दीर्घत्वम् । तमन्वेतुं नाशक्नुवन् । तेऽब्रुवन्नसुराः अध्वर्तव्या अस्माभिर्बाधितुमशक्याः इमे देवा अभूवन्निति । 'कृत्योकेष्णुच्चार्वादयश्च' इत्युत्तरपदान्तोदात्तत्वम् । तदध्वरस्येत्यादि । अध्वर्तव्या अनेन देवा अभूवन्नित्यध्वरः । ध्वररहितत्वादध्वरः । ध्वरतेः पचाद्यच् , बहु-

जिगाꣳसन्तं नान्ववायन्तेऽब्रुवन्न-
ध्वर्तव्या वा इमे देवा अभूवन्निति
तदध्वरस्याध्वरत्वं ततो देवा अभ-
वन्पराऽसुरा य एवं विद्वान्त्सोमेन
यजते भवत्यात्मना पराऽस्य भ्रा-
तृव्यो भवति ॥ ६ ॥

यज्ञम् । अन्ववाजिगाꣳसन्नित्यनु-अवाजिगाꣳ-
सन्न् । तम् । न । अन्ववायन्नित्यनु-अवायन्न् । ते।
अब्रुवन्न् । अध्वर्तव्याः । वै । इमे । देवाः । अभू-
वन्न् । इति । तत् । अध्वरस्य । अध्वरत्वमित्यध्व-
र-त्वम् । ततः । देवाः । अभवन्न् । परेति । असु-
राः । यः । एवम् । विद्वान् । सोमेन । यजते ।
भवति । आत्मना । परेति । अस्य । भ्रातृव्यः ।
भवति ॥ ६ ॥

अपश्यन्तोग्नीषोमीयमात्मना परा त्रीणि च ॥ २॥

---

व्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । यद्वा—कर्मणि छान्द-
सोच्, 'अच्कावशक्तौ' इत्युत्तरपदान्तोदात्तत्वम् । ततो देवा
अभवन् भूतिमन्तस्सम्पन्नाः । असुराश्च पराभवन् । य एवमि-
त्यादि । गतम् ॥

इति तृतीये द्वितीये द्वितीयोनुवाकः.

परिभूरग्निं परिभूरिन्द्रं परिभूर्वि-
श्वान्देवान्परि भूर्माꣳ सह ब्रह्म-
वर्चसेन स नः पवस्व शं गवे शं
जनाय शमर्वते शꣳ राजन्नोषधी-

[1]परिभूरिति परि-भूः । अग्निम् । परिभूरिति परि-भूः । इन्द्रम् । परिभूरिति परि-भूः । विश्वान् । देवान् । परिभूरिति परि-भूः । माम् । सह । ब्रह्मवर्चसेनेति ब्रह्म-वर्चसेन । सः । नः । पवस्व । शम् । गवे । शम् । जनाय । शम् । अर्वते । श-

---

[1]समस्तं राजानमुपतिष्ठते—परिभूरिति संकृत्यैकादशपदया ॥ परितस्सर्वतो भविता परिभूः । नेमिवदराणां सर्वतोग्नेः रक्षिता त्वमसि हे सोम । यद्वा—परितोग्नेर्भावयिता प्रवर्तयिता परिभूः । भवतेर्ण्यन्तात्क्विपि 'बहुलमन्यत्रापि' इति णिलुक्, 'पर्यभिभ्यां च' इति तसिः, तस्य गतार्थत्वादप्रयोगः, 'अभितःपरितस्समया' इत्यादिना द्वितीया । एवमिन्द्रादीनां ब्रह्मवर्चसेन सह मां परितो भावयति । ब्रह्मणो वर्चो बलं ब्रह्मवर्चसम् । 'ब्रह्महस्तिभ्याम्' इत्यच् । तादृशः त्वं नः अस्मदर्थं पवस्व शुन्धस्व । पूङ् पवने, भौवादिकः । किमर्थम्? शं गवे । जातावेकवचनम् । यथा गोभ्यः शं सुखं भवति । जनाय जनेभ्यः । अर्वते अर्वद्भ्यः । ओषधीभ्यश्च । हे राजन् दीप्तिमन् । किंच—हे रयिपते धनानां पालयितः ते त्वयि तस्य अच्छिन्नस्यानुपरतरूपस्य सुवीर्यस्य शोभनवीर्यस्य निमित्तस्य रायस्पोषस्य धनपुष्टेः पुष्टस्य धनस्य

भ्योऽच्छिन्नस्य ते रयिपते सुवीर्यस्य
रायस्पोषस्य ददितारस्स्याम । त-
स्य मे रास्व तस्य ते भक्षीय त-
स्य त इदमुन्मृजे । प्राणाय मे व-

म् । राजन् । ओषधीभ्य इत्योषधि—भ्यः । अ-
च्छिन्नस्य । ते । रयिपत इति रयि—पते । सुवीर्य-
स्येति सु—वीर्यस्य । रायः । पोषस्य । ददितारः ।
स्याम । तस्य । मे । रास्व । तस्य । ते । भक्षीय ।
तस्य । ते । इदम् । उदिति । मृजे । [2]प्राणायेति

---

ददितारः दातारस्स्याम । दद दाने । तदर्थं तस्य तादृशस्य धनस्य मे मह्यं रास्व देहि । व्यत्ययेनात्मनेपदम् । पूर्ववत्कर्मण-स्सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी । तस्य ते तादृशं त्वां भक्षीय भजे । यद्वा—तादृशं त्वदीयं धनं भक्षियि । तस्य तादृशस्य तव प्रसादात् तादृशस्य धनस्य लाभाद्वा । इदं ब्राह्मणोक्तानां कामानां अन्यतममिष्टं उन्मृजे उन्मार्ज्मि साधयामीत्यर्थः । के पुनस्ते कामाः? 'स एनं तृप्तो भूत्वाऽभिपवते' इत्यादिप्रसिद्धा भूत्यादयः, ते चास्मिन्नेवानुवाके वक्ष्यन्ते । इदमिति तेषां सामान्य निर्देशः । तं काममादित्यस्योन्मार्ष्टि—भूतिमुन्मृजे, ब्रह्मवर्चसमुन्मृजे इति ॥

[2]अथावकाशैश्चरन्ति । तत्रोपांशुपात्रमवेक्षते—प्राणायेति ॥ ऊर्ध्व-प्रवृत्तिः प्राणः । प्राणाय प्राणार्थं मे मम वर्चोदाः वर्चसो

चोंदा वर्चसे पवस्वापानाय व्या-
नाय वाचे ॥७॥ दक्षक्रतुभ्यां च-
क्षुर्भ्यां मे वर्चोदौ वर्चसे पवेथाꣳ

प्र—अनाय । मे । वर्चोदा इति वर्चः—दाः । वर्चसे। पवस्व । [3]अपानायेत्यप—अनाय । [4]व्यानायेति वि-—अनाय । [5]वाचे ॥ ७ ॥ [6]दक्षक्रतुभ्यामिति दक्ष-क्रतु-भ्याम् । [7]चक्षुर्भ्यामिति चक्षुः—भ्याम् । मे ।

---

दीप्तेर्दाता त्वं वर्चसे दीप्तये तव मम वा पवस्व शुन्धस्व शोधय वा पीतो मदीयं शरीरम् । 'तस्य मे रास्व' इत्यादि पूर्वप्रकृतं सर्वत्रानुषज्यते । 'प्राणापानाभ्यामेवोपांश्वन्तर्यामौ निरमिमीत'* इत्यादि ब्राह्मणम् ॥

[3]अन्तर्यामपात्रमवेक्षते—अपानायेति ॥ अपानोधोवृत्तिः । 'मे वर्चोदाः' इत्यादि मध्ये द्वितीयोनुषङ्गः सर्वत्र ॥

[4]उपांशुसवनमवेक्षते—व्यानायेति ॥ विष्वग्वृत्तिः व्यानः । छान्दसमुत्तरपदादेर्दीर्घत्वम् ॥

[5]ऐन्द्रवायवमवेक्षते—वाचे इति ॥ 'सावेकाचः' इति विभक्तेरुदात्तत्तम् ॥

[6]मैत्रावरुणमवेक्षते—दक्षक्रतुभ्यामिति ॥

[7]शुक्रामन्थिनाववेक्षते—चक्षुर्भ्यामिति ॥ मे वर्चोदाविति । द्वितीयानुषङ्गापवादः ॥

---

*तै. ब्रा. १-५-४.

श्रोत्रा॑यात्मनेऽङ्गे॑भ्य॒ आयु॑षे वी॒र्या॑य॒ विष्णो॒रिन्द्र॑स्य॒ विश्वे॑षां दे॒-

व॒र्चो॒दावि॑ति॑ वर्चः–दौ । वर्च॑से । प॒वे॒था॒म् । [8]श्रो॒त्रा॑य । [9]आ॒त्मने॑ । [10]अङ्गे॑भ्यः । [11]आयु॑षे । [12]वी॒र्या॑य । [13]विष्णोः॑ । [14]इन्द्र॑स्य । [15]विश्वे॑षाम् । दे॒वाना॑म् ।

---

[8]आश्विनमवेक्षते—श्रोत्रायेति ॥ पूर्वकावेवानुषङ्गौ । अत्र 'श्रोत्रादाश्विनम् । चक्षुषश्शुक्रामन्थिनौ'* इति शुक्रामन्थिभ्यां पूर्वमेवाश्विनोत्पत्तिश्रुतेः आश्विनावेक्षणं पूर्वमेव कार्यमित्याहुः ॥

[9]आग्रयणमवेक्षते—अत्मन इति ॥

[10]उक्थ्यमवेक्षते—अङ्गेभ्य इति ॥

[11]ध्रुवमवेक्षते—आयुष इति ॥ अत्र 'प्रतिष्ठाया ऋतु पात्रे'* इति दर्शनात् 'प्रतिष्ठायै मे वर्चोदाः' इत्यादिना ऋतुपात्रयोरवेक्षणं कुर्वन्ति माध्यन्दिनसवने प्रातस्सवने च ॥

[12]अथातिग्राह्यं षोडशिनं वाऽवेक्षते—वीर्यायेति ॥

[13]द्रोणकलशमवेक्षते—विष्णोर्जठरमसीति ॥ वक्ष्यमाणं त्रिभिरनुषज्यते । एष तृतीयोनुषङ्गः ॥

[14]आधवनीयमवेक्षते—इन्द्रस्य जठरमसीति ॥

[15]पूतभृतमवेक्षते—विश्वेषां देवानां जठरमसीति ॥ वर्चोदा

---

*ब्रा. १-५-४.

वानां जठरमसि वर्चोदा मे वर्चसे
पवस्व कोसि को नाम कस्मै त्वा
काय त्वा यं त्वा सोमेनातीतृपं यं
त्वा सोमेनामीमदꣳ सुप्रजाः प्रज-

जठरम् । असि । वर्चोदा इति वर्चः—दाः । मे । वर्चसे । पवस्व । [16]कः । असि । कः । नाम । कस्मै । त्वा । काय । त्वा । यम् । त्वा । सोमेन । अतीतृपम् । यम् । त्वा । सोमेन । अमीमदम् । सुप्रजा इति सु—प्रजाः । प्रजयेति प्र—जया । भू-

---

इत्यादि । व्याख्यातम्* । पुनराम्नानमनुषङ्गसमाप्तिं सूचयितुम् ॥

[16]अथ समस्तमेव राजानमुपतिष्ठते—कोसि कोनामेति पुरउष्णिहा यजुरन्तया ॥ सर्वात्मत्वादनिर्धारितविशेषः प्रजापतिरेव सर्वनाम्नोच्यते—अनिर्धारितविशेषः प्रजापतिरेव स्वयं त्वमसि हे सोमेति । प्रजापत्यात्मना सोमस्स्तूयते—को नामेति । नामधेयवान् 'को ह वै नाम प्रजापतिः'† इति । असर्वनामैवेदं संज्ञापदम् । इदानीं तादृशप्राजापत्यात्मतया यज्ञमाह । ब्राह्मणं च भवति 'एष वै पात्रियः प्रजापतिर्यज्ञः प्रजापतिः'‡ इति । कस्मै त्वा काय त्वा । अनिर्धारितविशेषाय कनाम्ने प्रजापत्यात्मने यज्ञाय त्वामुपतिष्ठे इति शेषः । हे सोमलतात्मन् प्रजापते यं त्वा सोमेन रसस्वरूपेण अतीतृपं स्वयमेव तृप्यन्तं यागेन तर्पयामि ।

---

*सं. ३-२-३[2]. †ब्रा. २-२-१०. ‡सं. ३-२-३[17].

या भूयासꣳ सुवीरो वीरैस्सुवर्चा व-
र्चसा सुपोषः पोषैर्विश्वेभ्यो मे रू-
पेभ्यो वर्चोदाः ॥ ८ ॥ वर्चसे पव-
स्व तस्य मे रास्व तस्य ते भक्षीय

यासम् । सुवीर इति सु—वीरः । वीरैः । सुवर्चा इति सु—वर्चाः । वर्चसा । सुपोष इति सु—पोषः। पोषैः । विश्वेभ्यः । मे । रूपेभ्यः । वर्चोदा इति वर्चः—दाः ॥ ८ ॥ वर्चसे । पवस्व । तस्य । मे । रास्व । तस्य । ते । भक्षीय । तस्य । ते । इदम् ।

---

'उरृत्' इति ऋकारः । यं त्वा सोमेन अमीमदं स्वयमेव माद्यन्तं यागेन मादयामि । उभयत्र छान्दसो लुङ् । एवं प्रजापत्यभेदेन सोमो निर्दिष्टः । तादृशं त्वामुपतिष्ठ इति । एवं महानुभावस्य तव प्रसादात् अहं प्रजया सुप्रजा भूयासं शोभनापत्यः । 'नित्यमसिच्प्रजामेधयोः' इत्यसिच्, 'सोर्मनसी' इत्येतद्बाधित्वा समासान्तस्वरः प्रवर्तते । वीरैः विक्रान्तैः पुरुषैः सुवीरः शोभनविक्रान्तपुरुषो भूयासम् । 'वीरवीर्यौ च' इत्युत्तरपदान्तोदात्तत्वम् । वर्चसा दीप्त्या बलेन वा सुवर्चा भूयासम् । 'सोर्मनसी' इत्युत्तरपदान्तोदात्तत्वम् । पोषैरन्नादिपोषैः सुपोषो भूयासम् । 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । विश्वेभ्यो रूपेभ्यः विश्वरूपार्थम् । वर्चोदा इत्यादि व्याख्यातम्*, तस्य मे रास्वेत्यादि च* । पुनराम्नानमनुषङ्गस्याविच्छेदं दर्शयितुं समाप्तिं च द्योतयितुम् ॥

---

*सं. ३-२-३[1—2].

तस्यं त इदमुन्मृंजे । बुभूषन्नवैक्षे-
तैष वै पात्रियः प्रजापतिर्यज्ञः प्र-
जापतिस्तमेव तर्पयति स एनं तृप्तो
भूत्याऽभि पवते ब्रह्मवर्चसकामोऽ-
वेक्षेतैष वै पात्रियः प्रजापतिर्यज्ञः प्र-
जापतिस्तमेव तर्पयति स एनं तृ-

उदिति । मृजे । [17]बुभूषन्न् । अवेति । ईक्षेत । एषः । वै । पात्रियः । प्रजापतिरिति प्रजा-पतिः । यज्ञः । प्रजापतिरिति प्रजा-पतिः । तम् । एव । तर्पयति । सः । एनम् । तृप्तः । भूत्या । अभीति । पवते । ब्रह्मवर्चसकाम इति ब्रह्मवर्चस-कामः । अवेति । ईक्षेत । एषः । वै । पात्रियः । प्रजापतिरिति प्रजा-पतिः । यज्ञः । प्रजापतिरिति प्रजा-पतिः । तम् । एव । तर्पयति । सः । एनम् । तृ-

---

[17]बुभूषन्नित्यादयः काम्याः अवेक्षणविधयः—बुभूषन् भूतिमिच्छन् । 'इदमुन्मृजे' इति सामान्येन यदुक्तं तस्यैते विशेषा भूत्यादयः ब्राह्मणेन प्रदर्श्यन्ते । पात्रियः पात्रार्हः सोमात्मा प्रजापतिः । 'पात्राद्घः' इति घः । यज्ञश्चायं प्रजापतिः । तस्मादनेन अवेक्षणेन तमेव यज्ञात्मानं प्रजापतिं तर्पयति । स च तृप्त एनं भूत्या अभिपवते यथाऽयं भूतिमान् भवति तथा

प्तो ब्रह्मवर्चसेनाभि पवत आमया-
वी ॥ १ ॥ अवेक्षेतैष वै पात्रियः प्र-
जापतिर्यज्ञः प्रजापतिस्तमेव तर्प-
यति स एनं तृप्त आयुषाऽभि पव-
तेऽभिचरन्नवेक्षेतैष वै पात्रियः प्र-
जापतिर्यज्ञः प्रजापतिस्तमेव तर्प-
यति स एनं तृप्तः प्राणापानाभ्यां

प्तः । ब्रह्मवर्चसेनेति ब्रह्म–वर्चसेन । अभीति ।
पवते । [18]आमयावी ॥१॥ अवेति । ईक्षेत । एषः ।
वै । पात्रियः । प्रजापतिरिति प्रजा–पतिः । यज्ञः ।
प्रजापतिरिति प्रजा–पतिः । तम् । एव । तर्पयति ।
सः । एनम् । तृप्तः । आयुषा । अभीति । पवते ।
[19]अभिचरन्नित्यभि–चरन् । अवेति । ईक्षेत । एषः ।
वै । पात्रियः । प्रजापतिरिति प्रजा–पतिः । यज्ञः ।
प्रजापतिरिति प्रजा–पतिः । तम् । एव । तर्पयति ।

---

एतदाभिमुख्येन पवते । एवं ब्रह्मवर्चसादिष्वपि द्रष्टव्यम् ।

[18]आमयावी रोगवान् । आयुरर्थं सोऽवेक्षेत । 'बहुलं छन्दसि' इति विनिः, 'अन्येषामपि दृश्यते' इति दीर्घत्वम् ।

[19]अभिचरन् अनिष्टं जनं मारयन् । यत्सिद्ध्यर्थमुपांशुपात्रादीनां अवेक्षणं क्रियते, तेभ्यः प्राणादिभ्यः एनमभिचर्यमाणमन्तरेति अन्तरितं

वाचो दक्षक्रतुभ्यां चक्षुर्भ्याꣳ श्रोत्राभ्यामात्मनोङ्गेभ्य आयुषोन्तरेति ताजक्प्र धन्वति ॥ १० ॥
स्फ्यस्स्वस्तिर्विघनस्स्वस्तिः पर्-

सः । एनम् । तृप्तः । प्राणापानाभ्यामिति प्राण–अपानाभ्याम् । वाचः । दक्षक्रतुभ्यामिति दक्षक्रतु–भ्याम् । चक्षुर्भ्यामिति चक्षुः–भ्याम् । श्रोत्राभ्याम् । आत्मनः । अङ्गेभ्यः । आयुषः । अन्तः । एति । ताजक् । प्रेति । धन्वति ॥ १० ॥

वाचे रूपेभ्यो वर्चोदा आमयावी पञ्चचत्वारिꣳशच्च ॥ ३ ॥

[1]स्फ्यः । स्वस्तिः । विघन इति वि–घनः । स्वस्तिः । पर्शुः । वेदिः । पर्शुः । नः । स्वस्तिः ।

---

करोति तत्सम्बन्धमस्य निवर्तयति । ततश्च ताजक् तदानीमेव अयं प्रधन्वति प्रगच्छति म्रियते इत्यर्थः । धवि गतौ, इदित्वान्नुम् ॥

इति तृतीये द्वितीये तृतीयः.

---

[1]स्फ्यविघनादि यजमानमुपस्थापयति—स्फ्यस्स्वस्तिरिति ॥ बृहतीविशेषोयम्, 'बृहती द्वादशाक्षरा त्रयश्चाष्टाक्षरा' इति ॥ स्फ्यः

शुवेदिः परशुर्नस्स्वस्तिः । यज्ञिया
यज्ञकृतस्स्थ ते माऽस्मिन् यज्ञ उप
ह्वयध्वमुप मा द्यावापृथिवी ह्वये-

यज्ञियाः । यज्ञकृत इति यज्ञ-कृतः । स्थ । ते । मा । अस्मिन् । यज्ञे । उपेति । ह्वयध्वम् । [2]उपेति । मा । द्यावापृथिवी इति द्यावा-पृथिवी ।

---

स्वस्तिः अविनाशहेतुरस्माकमयम् । अयं स्वस्तिशब्दो निपातो गुणमात्रे अविनाशे वर्तते । सोयमिदानीं मतुब्लोपादभेदोपचाराद्वा शुक्लादिवद्गुणिन्यपि अविनाशहेतौ वर्तते । विघनश्चास्माकं स्वस्तिः अविनाशहेतुः । विहन्यते भूमिरनेनेति विघनः । व्यत्ययेन अपि घत्वं च, थाथादिनोत्तरपदान्तोदात्तत्वम् । एवं पर्श्वादयः अविनाशहेतवः । पर्शुः पार्श्ववक्रः तृणादिच्छेदनः । परशुः वृक्षवृश्चनः । ते यूयं यज्ञिया यज्ञसंपादनार्हाः यज्ञकृतश्च स्थ यूयमेव यज्ञं संपादितवन्तस्स्थ । ते यूयं मां विशेषकरणार्थं अस्मिन् यज्ञे उपह्वयध्वं अनुजानीत यन्मया कर्तव्यं तदहमेव करोमि तदनुज्ञातुमर्हथेति । 'निसमुपविभ्यो ह्वः' इत्यात्मनेपदम् ॥

[2]द्यावापृथिवी उपतिष्ठते—उप मेति ॥ द्यावापृथिवी उप मा ह्वयेताम् । 'द्यावापृथिव्योर्हि यज्ञः'* इति तदनुज्ञानं प्रार्थयते । द्यावापृथिव्योः स्वर उक्तः ॥

---

*सं. २-६-९.

तामुपास्तावः कलशस्सोमो अ-
ग्निरुप देवा उप यज्ञ उप मा

ह्वयेताम् । [3]उपेति । आस्ताव इत्या–स्तावः । [4]क-
लशः । [5]सोमः । [6]अग्निः । [7]उपेति । देवाः । [8]उ-
पेति । यज्ञः । [9]उपेति । मा । होत्राः । उपहव

---

[3]बहिष्पवमानास्तावमुपतिष्ठते—उपास्ताव इति ॥ ह्वयतामित्यनुषज्यते । उपास्तावो ह्वयतामिति । यत्र वचनभेदस्तत्रोपसर्गावृत्तिः ॥

[4]द्रोणकलशमुपतिष्ठते—कलश इति ॥ शिष्टमनुषज्यते—उप मा कलशो ह्वयतामिति ॥

[5]सर्वं सोममुपतिष्ठते—उप मा सोमो ह्वयतामिति ॥

[6]अग्निमुपतिष्ठते—अग्निरिति ॥ उप माऽग्निर्ह्वयतामिति ॥

[7]देवानुपतिष्ठते—उप देवा इति ॥ उप मा देवा ह्वयन्तामिति । पूर्ववद्वचनभेदादुपसर्गावृत्तिः ॥

[8]यज्ञमुपतिष्ठते—उप यज्ञ इति ॥ उप मा यज्ञो ह्वयतामिति । पूर्ववदुपसर्गावृत्तिः ॥

[9]होत्रकानुपतिष्ठते—उप मा होत्रा इति ॥ होत्रा धिष्ण्यवन्तः । ‘सप्त होत्राः प्राचीर्वषट्कुर्वन्ति’* इति । तेषामुपहवे ह्वयन्तामिति । उपहूयन्ते अस्मिन्नित्युपहवो यज्ञः । यद्वा—उपहवेऽनुज्ञाने कर्तव्ये यत्रयत्र उपहवमिच्छामि, तत्रतत्र मामुपह्वयन्तामिति ॥

---

*ब्रा २-३-६.

होत्रा उपहवे ह्वयन्तां नमोऽग्नये
मखघ्ने मखस्य मा यशोऽर्यादित्याह-
वनीयमुप तिष्ठते यज्ञो वै मखः॥११
यज्ञं वाव स तदहन्तस्मा एव नम-
स्कृत्य सदः प्र सर्पत्यात्मनोऽनार्त्यै

इत्युप-हवे । ह्वयन्ताम् । [10]नमः । अग्नये । मख-
घ्न इति मख-घ्ने । मखस्य । मा । यशः । अर्यात् ।
इति । आहवनीयमित्या-हवनीयम् । उपेति ।
तिष्ठते । यज्ञः । वै । मखः ॥ ११ ॥ यज्ञम् । वा-
व । सः । तत् । अहन् । तस्मै । एव । नमस्कृ-
त्येति नमः-कृत्य । सदः । प्रेति । सर्पति । आ-

---

[10]अथाहवनीयस्य समन्त्रमुपस्थानं ब्राह्मणमेव विदधाति—नम इति ॥ अनया द्विपदया गायत्र्या आहवनीयमुपतिष्ठते । अथोपस्थाने कारणमाह—यज्ञो वा इत्यादि । सोऽग्निः तत् तदानीं सदःप्रसर्पणकाले अहन् आर्तिमार्पयति अनमस्कृतः । तस्मात् तस्मै नमस्कृत्य सदः प्रसर्पत्यात्मनोऽनार्त्यै यज्ञविनाशेन आत्मन आर्तिर्मा भूदिति । मन्त्रार्थस्तु—अग्नये मखघ्ने मखस्य यज्ञस्य अनमस्कारकारिणो नाशयित्रे तुभ्यं नमः । उदात्तनिवृत्तिस्वरेण चतुर्थ्या उदात्तत्वम् । मखस्य यशः फलं मा अर्यात्प्राप्नोतु तद्विघातश्च त्वया न कर्तव्य इति ॥

नमो रुद्राय मखघ्ने नमस्कृत्या
मा पाहीत्याग्नीध्रं तस्मा एव नम-
स्कृत्य सदः प्र सर्पत्यात्मनोनार्त्यै
नम इन्द्राय मखघ्न इन्द्रियं मे वी-
र्यं मा निर्वधीरिति होत्रीयमाशिष-

त्मनः । अनार्त्यै । [11]नमः । रुद्राय । मखघ्न इति मख-घ्ने । नमस्कृत्येति नमः-कृत्या । मा । पाहि । इति । आग्नीध्रमित्याग्नि-इध्रम् । तस्मै । एव । नमस्कृत्येति नमः-कृत्य । सदः । प्रेति । सर्पति । आत्मनः । अनार्त्यै । [12]नमः । इन्द्राय । मखघ्न इति मख-घ्ने । इन्द्रियम् । मे । वीर्यम् । मा । निरिति । वधीः । इति । होत्रीयम् । आशिषमित्या-

[11]अथाग्नीध्रस्योपस्थानं विदधाति—नमो रुद्रायेति ॥ आग्नीध्रमुपतिष्ठते इत्येव । तस्मा इत्यादि । गतम् * । मन्त्रार्थोपि गतः । नमस्कृत्या प्रणिपातेनानेन मां पाहि । ऊर्यादित्वेन नमसो गतित्वात् 'तादौ च निति' इति प्रकृतिस्वरत्वम् । अग्नीधश्शरणमाग्नीध्रम्, 'अग्नीधश्शरणे रण् भं च' ॥

[12]अथ होत्रीयस्योपस्थनं विदधाति—नम इन्द्रायेति ॥ होत्रियमुपतिष्ठते इत्येव । होतुर्धिष्णियं होत्रीयम्, गहादित्वाच्छः । इन्द्रियं चक्षुरादिकं वीर्यं बलं मा निर्वधीः निष्कृष्य मा वधीः ।

* सं. ३-२-४ 10.

मेवैतामा शास्त इन्द्रियस्य वीर्यस्यानिर्घाताय या वै ॥ १२ ॥ देवतास्सदस्यार्तिमार्पयन्ति यस्ता विद्वान्प्रसर्पति न सदस्यार्तिमार्च्छति नमोऽग्नये मखघ्न इत्याहैता वै देवतास्सदस्यार्तिमाऽर्पयन्ति ता य ए-

शिषम् । एव । एताम् । एति । शास्ते । इन्द्रियस्य । वीर्यस्य । अनिर्घातायेत्यनिः—घाताय । याः । वै ॥ १२ ॥ देवताः । सदसि । आर्तिम् । आर्पयन्तीत्या—अर्पयन्ति । यः । ताः । विद्वान् । प्रसर्पतीति प्र—सर्पति । न । सदसि । आर्तिम् । एति । ऋच्छति । नमः । अग्नये । मखघ्न इति मख—घ्ने । इति । आह । एताः । वै । देवताः । सदसि । आर्तिम् । एति । अर्पयन्ति । ताः । यः । एवम् ।

---

एतामाशिषं मा निर्वधीः इत्याशास्ते इन्द्रियस्य वीर्यस्य चानिर्घाताय भवति । या वै देवता इत्यादि । आङ्पूर्वोयमृच्छतिर्विनाशे वर्तते । तत्र 'गोपोषं पुष्णाति' इतिवत् धात्वर्थसामान्यवचनो द्वितीय ऋच्छतिर्वेदितव्यः । आङ्पूर्वात् क्तिनः 'उपसर्गादृति धातौ इति वृद्धिः, 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् । एता वै देवता इत्यादि । एतन्मन्त्रनिर्दिष्टा अग्निरुद्रेन्द्रा इत्यर्थः । एता देवता

वं विद्वान्प्रसर्पति न सदस्यार्तिमा-
च्छति दृढे स्थःशिथिरे समीची
माऽꣳहंसस्पातꣳ सूर्यो मा देवो
दिव्यादꣳहंसस्पातु वायुरन्तरिक्षा-
त् ॥१३॥ अग्निः पृथिव्या यमः

विद्वान् । प्रसर्पतीति प्र-सर्पति । न । सदसि । आर्तिम् । एति । ऋच्छति । [13]दृढे इति । स्थः । शिथिरे इति । समीची इति । मा । अꣳहंसः । पातम् । [14]सूर्यः । मा । देवः । दिव्यात् । अꣳहंसः । पातु । [15]वायुः । अन्तरिक्षात् ॥ १३ ॥ [16]अग्निः ।

---

विदित्वा यस्सदः प्रसर्पति स विद्वानार्तिं न प्राप्नोति, अविद्वांसं आर्तिं प्रापयन्तीति ॥

[13]द्यावापृथिवी उपतिष्ठते—दृढे स्थ इति ॥ दृढे स्थिरे युवां स्थः भवतं शिथिरे मे सर्पणेन शिथिलिते अपि दृढे भवतम् । यद्वा—ममांहसः शिथिलयित्र्यौ । कपिलकादिः । समीची सम्यगञ्चनहेतू । 'चौ' इति पूर्वपदस्य दीर्घत्वं, अन्तोदात्तत्वं च । तादृश्यौ युवामागच्छतम् । अंहसः पापात्पातं रक्षतम् ॥

[14]सूर्यमुपतिष्ठते—सूर्य इति ॥ दिव्यात् दिवि भवात् प्रमादकृतात्पापात् सूर्यो देवो मां पातु ॥

[15]वायुमुपतिष्ठते—वायुरिति ॥ पात्वित्यनुषज्यते । अन्तरिक्षात् अन्तरिक्षनिमित्तात्पापात् पातु ॥

[16]अग्निमुपतिष्ठते—अग्निरिति ॥

पितृभ्यस्सरस्वती मनुष्येभ्यो देवी
द्वारौ मा मा सं ताप्तं नमस्सदसे
नमस्सदसस्पतये नमस्सखीनां पु-
रोगाणां चक्षुषे नमो दिवे नमः पृ-
थिव्या अहे दैधिषव्योदतस्तिष्ठा-

पृथिव्याः । [17]यमः । पितृभ्य इति पितृ-भ्यः । [18]सरस्वती । मनुष्येभ्यः । [19]देवी इति । द्वारौ । मा । मा । सामिति । ताप्तम् । [20]नमः । सदसे । नमः । सदसः । पतये । नमः । सखीनाम् । पु-रोगाणामिति पुरः-गानाम् । चक्षुषे । नमः । दिवे । न-मः । पृथिव्यै । [21]अहे । दैधिषव्य । उदिति । अतः । तिष्ठ ।

---

[17]यममुपतिष्ठते—यम इति ॥ पितृभ्यः पित्रपचारनिमित्तात्पापात्पातु ॥

[18]सरस्वतीमुपतिष्ठते—सरस्वतीति ॥ मनुष्यद्रोहनिमित्तात्पापात्पातु ॥

[19]पूर्वे द्वारौ सदसस्संमृशति—देवी इति ॥ हे देव्यौ द्वारौ मा मा सन्ताप्तं मा कार्ष्टम् ॥

[20]सदः प्रपद्यते—नम इति ॥ 'ऐन्द्रं हि देवतया सदः'* इति इन्द्रः सदसस्पतिः पालयिता तस्मै नमः । 'षष्ठयाः पतिपुत्र' इति सत्वम् । सखीनां समानख्यानानामृत्विजां पुरोगाणामग्रतो गन्तॄणां प्रधानानां सर्वेषामपि चक्षुषे चक्षुस्स्थानीयाय दर्शनहेतवे सवित्रे च नमः । गतमन्यत् ॥

[21]आसनाद्बहिस्सदसस्तृणं निरस्यति—अहे इति ॥ आगत्य

---

* सं. ६-२-१०

न्यस्य सदने सीद योस्मत्पाकतर
उन्निवत उदुद्वतश्च गेषं पातं मा द्या-
वापृथिवी अद्याह्नस्सदो वै प्रस-

अन्यस्य । सदने । सीद । यः । अस्मत् । पाकत-
र इति पाक—तरः । [22]उदिति । निवत इति नि—
वतः । उदिति । उद्वत इत्युत्—वतः । च । गेषम् ।
[23]पातम् । मा । द्यावापृथिवी इति द्यावा—पृथिवी ।

---

हन्तीत्यहिः, अनिष्टकृत् । हे अहे तृण दैधिषव्य दिधिपु आसनधारणसमर्थम् । दधातेः कुप्रत्यये द्विर्वचनं, इपुगागमश्च निपात्यते, तस्यापत्यं दैधिषव्यम्; तत्प्रभवत्वात् । 'द्युप्रागवाक्' इति यत्प्रत्ययः । तादृशस्त्वं अतोस्मादासनादुत्तिष्ठ अन्यस्य सदने सीद मा अत्र स्थाः । कस्यान्यस्य? योस्मत् अस्मत्तः पाकतरः बालतरः अज्ञः तस्य सदने सीद माऽत्र सीद ॥

[22]उपविशति—उदिति ॥ निवतः न्यग्गतान् येऽस्मत्तो न्यग्भूताः तानुद्गेषम् । किंच—उद्वतश्च येऽस्मत्तः उद्गता उद्भूताः, तानपि उद्गेषं उत्क्रम्योल्लङ्घ्य उपरि गम्यासम् । 'उपसर्गाच्छन्दसि धात्वर्थे' इति वतिः । इणः आशिषि लिङ्, आदेशश्छान्दसः, लिङ्याशिष्यङ्, अतो येयः, आर्धधातुकत्वात्सलोपाभावः ॥

[23]द्यावापृथिव्यौ समीक्षते—पातमिति ॥ हे द्यावापृथिव्यौ मां पातं रक्षतं अद्याह्नः अस्मादह्नः । यद्वा—अस्मिन् कर्मणि अह्नः अहर्निमित्तात्पापात्पातं रक्षतम् । 'सद्यःपरुत्' इत्यादिना इदमोद्येति निपात्यते ॥

पन्तम् ॥ १४ ॥ पितरोनु प्र सर्प-
न्ति त एनमीश्वरा हिंसितोस्सदः
प्रसृप्य दक्षिणार्धं परेक्षेताऽगन्त पि-
तरः पितृमानहं युष्माभिर्भूयासꣳ
सुप्रजसो मया यूयं भूयास्तेति ते-

अद्य । अह्नः । [42]सदः । वै । प्रसर्पन्तमिति प्र-सर्प-
न्तम् ॥ १४ ॥ पितरः । अनु । प्रेति । सर्पन्ति ।
ते । एनम् । ईश्वराः । हिंसितोः । सदः । प्रसृ-
प्येति प्र-सृप्य । दक्षिणार्धमिति दक्षिण-अर्धम् ।
परेति । ईक्षेत । एति । अगन्त । पितरः । पितृ-
मानिति पितृ-मान् । अहम् । युष्माभिः । भूया-
सम् । सुप्रजस इति सु-प्रजसः । मया । यूयम् ।
भूयास्त । इति । तेभ्यः । एव । नमस्कृत्येति न-

[24]सद इत्यादि ॥ एनं हिंसितोः हिंसितुं पितरः ईश्वराः अनमस्कृताः । तस्मात्सदः प्रसृप्य दक्षिणार्धं परेक्षेत 'आगन्त' इत्यादिना यजुषा । ततस्तेभ्यो नमस्कृत्य प्रसर्पणं कृतं भवति आत्मन आर्त्यभावाय । मन्त्रार्थस्तु—हे पितरः आगन्त आगच्छत । शपो लुक्, 'तप्तनप्तनथनाश्च' इति तादेशः । युष्माभिरागतैः पितृमानहं भूयासं, यूयमपि मया युष्मदागमनोपलब्धसाधुत्वेन

भ्यं एव नमस्कृत्य सदः प्र सर्प-
त्यात्मनोनार्त्यै ॥ १५ ॥
भक्षेहि माऽऽ विश दीर्घायुत्वाय
शन्तनुत्वाय रायस्पोषाय वर्चसे

मः—कृत्य । सदः । प्रेति । सर्पति । आत्मनः ।
अनार्त्यै ॥ १५ ॥

मखो वा अन्तरिक्षात्प्रसर्पन्तं त्रयं-
स्त्रिंशश्च ॥ ४ ॥

[1]भक्ष । एति । इहि । मा । एति । विश । दी-
र्घायुत्वायेति दीर्घायु—त्वाय । शन्तनुत्वायेति श-
न्तनु—त्वाय । रायः । पोषाय । वर्चसे । सुप्रजा-

---

सुप्रजसो भूयास्तेति । 'नित्यमसिच्प्रजामेधयोः' इति समासा-
न्तोसिच् ॥

इति तृतीये द्वितीये चतुर्थोनुवाकः.

---

[1]अथ भक्षानुवाकः । तत्र ग्रहणावेक्षणभक्षणादिषु यथालिङ्गं
विनियोगः । तत्र भक्षणायाह्रियमाणं सोमं प्रतिगृह्णाति—भक्षे-
हीति ॥ भक्ष्यत इति भक्षः । हे भक्ष । षाष्ठिकमामन्त्रिता-
द्युदात्तत्वम् । एहि आगच्छ । गुणे कृते, 'अन्तादिवच्च'
इति तस्य आङ्ग्रहणेन ग्रहणात् 'ओमाङोश्च' इति पररूपत्वम् ।

सुप्रजास्त्वायेहि वसो पुरोवसो प्रि-
यो मे हृदोस्यश्विनोस्त्वा बाहुभ्याꣳ
सध्यासं नृचक्षसं त्वा देव सोम

स्त्वायेति सुप्रजाः–त्वाय । एति । इहि । वसो इति । पुरोवसो इति पुरः–वसो । प्रियः । मे । हृदः । असि । अश्विनोः । त्वा । बाहुभ्यामिति बाहु–भ्याम् । सध्यासम् । [2]नृचक्षसमिति नृ–चक्षसम् । त्वा । देव । सोम । सुचक्षा इति सु–चक्षाः । अवेति ।

---

स त्वं मामाविश भक्षितोन्तः प्रविश दीर्घायुत्वाय । तादर्थ्ये चतुर्थी । मम दीर्घमायुर्यथा स्यादिति । बहुव्रीहौ छान्दसोन्त्यलोपः । शन्तनुत्वाय आरोग्याय रायो धनस्य पोषाय पुष्ट्यर्थम् । पूर्ववत्सत्वम् । वर्चसे दीप्तये बलाय वा । सुप्रजास्त्वाय शोभनापत्यत्वार्थं मामाविशेति । एहि वसो वासहेतो सर्वेषां, आगच्छ हे पुरोवसो पुरस्ताद्वसो वासयितॄणां पूर्वधनानां वा, प्रथमं मे मम हृदयस्य प्रियोसि प्रीणयिताऽसि उपकारकत्वात् । अश्विनोर्बाहुभ्यां त्वां सध्यासं गृह्णामि । आत्मनस्स्वातन्त्र्यनिवृत्त्यर्थमेवमुक्तम् । सघिः ग्रहणकर्मा छान्दसः ॥

[2]अवेक्षते—नृचक्षसमिति ॥ नॄन् चष्टे पश्यतीति नृचक्षाः । 'गतिकारकयोरपि' इत्यसुन्, कृदुत्तरपदप्रकृतिस्वरत्वम् । ईदृशं त्वां हे देव सोम त्वत्प्रसादात् सुचक्षाः सुष्ठु द्रष्टा अहम् । पूर्ववदसुन् । अवख्येषम् । अवचष्टेराशिषि लिङ्, ख्यादेशः, लिङ्याशिष्यङ्, अतो येयः ॥

सुचक्षा अर्वं ख्येषं मन्द्राऽभिभूतिः
केतुर्यज्ञानां वाग्जुषाणा सोमस्य तृ-
प्यतु मन्द्रा स्ववर्वाच्यदितिरनाहत-
शीर्ष्णी वाग्जुषाणा सोमस्य तृप्य-

ख्येषम् । [3]मन्द्रा । अभिभूतिरित्यभि–भूतिः । के-
तुः । यज्ञानाम् । वाक् । जुषाणा । सोमस्य । तृ-
प्यतु । मन्द्रा । स्ववर्वाचीति सु–अर्वाची । अदितिः ।
अनाहतशीर्ष्णीत्यनाहत–शीर्ष्णी । वाक् । जुषाणा ।
सोमस्य । तृप्यतु । एति । इहि । विश्वचर्षण

---

[3]मन्द्राऽभिभूतिरिति प्रातस्सवने सर्वानैन्द्रान् भक्षयति । नराशंसपीतस्येति नराशंसान्—मन्द्रा मदकरी, अभिभूतिः अभिभवित्री सर्वशरीरस्य, केतुः प्रधानभूता यज्ञानां ; तदधीनत्वात्सर्वप्रवृत्तीनाम् । ईदृशी वाक् जुषाणा प्रीयमाणा सोमस्य तृप्यतु सोमेन पीतेन तृप्ता भवतु । यद्वा—सोमस्य जुषाणा सेवमाना सोममाप्रियमाणा वाक् तृप्यतु । मन्द्रा स एवार्थः । स्ववर्वाची सुष्ठु अस्मदाभिमुख्येन प्रवर्तमाना । अव्ययपूर्वपदप्रकृतिस्वरत्वम्, 'उदात्तस्वरितयोर्यणः' इति संहितायामकारस्स्वर्यते । अदितिः अखण्डनीया । कर्मणि क्तिन् । अनाहतशीर्ष्णी अप्रतिबद्धप्रारम्भा । 'शीर्षन् छन्दसि' इति शिरसश्शीर्षन्भावः, 'अन उपधालोपिनः' इति ङीप् । वाग्जुषाणेत्यादि । गतम् । हे विश्वचर्षणे विश्वचर्षणयो मनुष्याः स्वभूता यस्य स तादृशः । एहि आगच्छ । यद्वा—विश्वज्ञानहेतो अस्मानागच्छ । शम्भूः शान्तेर्नि-

त्वंहि विश्वचर्षणे ॥ १६ ॥ शंभूर्मयोभूस्स्वस्ति मां हरिवर्ण प्र चर क्रत्वे दक्षाय रायस्पोषाय सुवीरतायै मा मां राजन्वि बीभिषो मा मे

इति विश्व-चर्षणे ॥ १६ ॥ शंभूरिति शं-भूः । मयोभूरिति मयः-भूः । स्वस्ति । मा । हरिवर्णेति हरि-वर्ण । प्रेति । चर । क्रत्वे । दक्षाय । रायः । पोषाय । सुवीरताया इति सु-वीरतायै । [4]मा । मा । राजन्न् । वीति । बीभिषः । मा । मे ।

---

वृत्तिलक्षणस्य वाक्सुखस्य भावयिता मयोभूः सुखस्य भावयिता प्रवृत्तिलक्षणस्य । उभयत्रापि पूर्ववण्णिलुक् । ईदृशस्सन् स्वस्ति अविनाशेन ऊर्ध्वाधोगमनराहितः मां प्रचर प्रविश हे हरिवर्ण हरितवर्ण मनोहरवर्ण वा । क्रत्वे क्रत्वर्थम् । 'जसादिषु वा वचनम्' इति 'घेर्ङिति' इति गुणाभावः । दक्षाय उत्साहार्थं, रायस्पोषाय धनस्य पुष्ट्यर्थं, सुवीरतायै शोभनवीर्यतायै च ॥

[4]अथ परोष्णिक्, गायत्री वा—मा मा राजन्निति ॥ हे राजन् सोम मां मा विबीभिषः मा विभीषथाः ऊर्ध्वमधो वा निर्गच्छन् भीतिं मा जीजनः । व्यत्ययेनात्मनेपदाभावः । यद्वा—ऊर्ध्वाधोगमनेन मां मा विभीषथाः । हेतुभयाभावात् आत्मनेपदाभावः, षुगागमश्छान्दसः । मा मे हार्दि त्विषा दीप्त्या त्वदीयया मा वधीः । हृदये भवा अभिप्राया हार्दाः, तद्युक्तं

हार्दिं त्विषा वंधीः। वृषंणे शुष्मायाऽऽ-
युंषे वर्चंसे । वसुंमद्गणस्य सोम
देव ते मतिविदंः प्रातस्सवनस्यं गा-

हार्दि । त्विषा । वधीः । वृषंणे । शुष्माय । आयुं-
षे । वर्चंसे । [5]वसुंमद्गणस्येति वसुंमत्-गणस्य ।
सोम । देव । ते । मतिविद् इति मति-विदंः । प्रा-
तस्सवनस्येति प्रातः-सवनस्यं । गायत्रछंन्दस इ-
ति गायत्र-छन्दसः । इन्द्रंपीतस्येतीन्द्रं-पीतस्य ।

---

मनो हार्दि । 'हृदयस्य हृल्लेख' इति हृद्भावः । कानि पुनस्तान्यभिप्रेतानीत्याह—वृषणे सेकसामर्थ्याय सेक्त्रे वा । उपधालोपाभावश्छान्दसः । शुष्माय बलाय आयुषे संपूर्णाय वर्चसे दीप्तये॥

[5]वसुमद्गणस्य वसुमान् गणो यस्य स तथोक्तः । अष्टौ वसवः । तत्रावयवेन समुदायो गणस्तद्वानिति मत्वर्थोपपत्तिः । कश्चिदाह—वसुमान् धनवान् गण ऋत्विक्सङ्घो यस्येति । तस्य रुद्रवद्गणस्येत्यादि अघटमानं स्यात् । हे सोम देव दीप्तिमन् ते तव मतिविदः सर्वेषां मतानि जानतः अभिमतानां लम्भयितुर्वा प्रातस्सवनस्य प्रातस्सूयत इति प्रातस्सवनं, कर्मणि ल्युट्, 'अनो भावकर्मवचने' इत्युत्तरपदान्तोदात्तत्वम् । गायत्रछन्दसः । गायत्र्येव गायत्रं, तदेव छन्दो यस्य स्तोत्रादिषु तादृशस्य विश्वजनादित्वात्तुगभावः । इन्द्रपीतस्य इन्द्रेण प्रथमं पीतस्य । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । इन्द्रस्य सर्वदेवतामयत्वात् सर्वत्रैवमप्यन्यदेवते । नराशंसपीतस्य नरैश्शंसन्ति पानं ये भक्षणे ते नराशंसाः

यत्रछंन्दस इन्द्रंपीतस्य नराशꣳसं-
पीतस्य पितृपींतस्य मधुंमत उपं-
हूतस्योपंहूतो भक्षयामि रुद्रवंद्गण-
स्य सोम देव ते मतिविदो माध्यं-
न्दिनस्य सवंनस्य त्रिष्टुप्छंन्दस

नराशꣳसंपीतस्येति नराशꣳसं–पीतस्य । पितृ-
पींतस्येतिं पितृ–पीतस्य । मधुंमत इति मधु–मतः।
उपंहूतस्येत्युपं–हूतस्य । उपंहूत इत्युपं–हूतः ।
भक्षयामि । रुद्रवंद्गणस्येतिं रुद्रवंत्–गणस्य । सो-
म । देव । ते । मतिविद इतिं मति–विदंः । मा-
ध्यंन्दिनस्य । सवंनस्य । त्रिष्टुप्छंन्दस इतिं त्रिष्टुप्–

---

देवताविशेषाः । यद्वा—नरैश्शंसनीया नराशंसाः तैः पीतो नरा-
शंसपीतः तस्य । यत्तेन पदेन नराशंसानामेव भक्षणं भक्षिता-
प्यायिता नराशंसाश्चमसाः । पूर्ववत्स्वरः, पूर्ववदेव 'परादिश्छन्दसि'
इत्युत्तरपदाद्युदात्तत्वम् । पितृपीतस्य पितृभिरस्मत्पूर्वैः पीतस्य ।
स एव स्वरः । मधुमतः मधुररसवतः उपहूतस्य इन्द्रादिभिरनु-
ज्ञातस्य ईदृशस्य तव अहं उपहूतः देवैस्सहभक्षिभिरनुज्ञातः भक्ष-
यामि । सर्वत्र कर्मणि षष्ठी ॥

[6]अथ माध्यन्दिने सवने—रुद्रवद्गणस्येत्यादि ॥ माध्यन्दिनस्येति ।
दिनस्य मध्यं मध्यन्दिनम् 'मध्यो मध्यन्दिनं चास्मात्' इति ।
तत्र भवं माध्यन्दिनम् । तस्य सवनस्य सूयमानस्य सोमस्य तव

इन्द्रपीतस्य नराश॰संपीतस्य॥१७
पितृपीतस्य मधुमत उपहूतस्योप-
हूतो भक्षयाम्यादित्यवद्गणस्य सो-
म देव ते मतिविदस्तृतीयस्य सव-
नस्य जगतीछन्दस इन्द्रपीतस्य न-
राश॰संपीतस्य पितृपीतस्य मधु-

छन्दसः । इन्द्रपीतस्येतीन्द्र—पीतस्य । नराश॰सं-पीतस्येति नराश॰सं—पीतस्य ॥१७॥ पितृपीत-स्येति पितृ—पीतस्य । मधुमत इति मधु—मतः । उपहूतस्येत्युप—हूतस्य । उपहूत इत्युप—हूतः । भ-क्षयामि । [7]आदित्यवद्गणस्येत्यादित्यवत्—गणस्य । सोम । देव । ते । मतिविद इति मति—विदः । तृतीयस्य । सवनस्य । जगतीछन्दस इति जगती—छन्दसः । इन्द्रपीतस्येतीन्द्र—पीतस्य । नराश॰सं-पीतस्येति नराश॰सं—पीतस्य । पितृपीतस्येति

---

भक्षयामीति । एवमेतादृशसोमसंबन्धात् प्रातस्सवनादयश्शब्दाः कर्मणि वर्तन्ते । गतमन्यत् ॥

[7]अथ तृतीयसवने—आदित्यवद्गणस्येति ॥ तृतीयस्य सवन-स्य सूयमानस्य तव भक्षयामीति । एवं सोमविशेषणतया नी-

मत उपहूतस्योपहूतो भक्षयामि ।
आ प्यायस्व समेतु ते विश्वतस्सो-
म वृष्णियम् । भवा वाजस्य संग-
थे । हिन्वं मे गात्रा हरिवो गणा-
न्मे मा वि तीतृषः । शिवो मे सप्त-

पितृ-पीतस्य । मधुमत इति मधु-मतः । उपहू-तस्येत्युप-हूतस्य । उपहूत इत्युप-हूतः । भक्ष-यामि ।[8]एति । प्यायस्व । समिति । एतु । ते । विश्वतः । सोम । वृष्णियम् । भव । वाजस्य । संगथ इति सं-गथे ।[9]हिन्व । मे । गात्रा । हरिव इति हरि-वः । गणान् । मे । मा । वीति । तीतृ-

---

तानि दश पदानि षष्ठ्यन्तानि । इतरथा इन्द्रपीतस्येत्याद्यघटमानं स्यात् । वैयधिकरण्यं तु क्लिष्टमिति ॥

[8]चमसानाप्याययति—आ प्यायस्वेति गायत्र्या ॥ हे सोम आप्यायस्व वर्धस्व मा भक्षित इति क्षेष्ठाः, समेतु संगच्छतु. ते त्वाम् । कर्मणि षष्ठी । विश्वतः सर्वतः । वृष्णियं वीर्यम् । वृष्णिसंभवं वृष्णियम्, दिगादित्वाद्यत्, 'यतोऽनावः' इत्याद्युदात्तत्वम् । वाजस्यान्नस्य संगथे संगमने अस्माकं भव तन्निमित्तं भव । 'द्व्यचोतस्तिङः' इति संहितायां दीर्घत्वम् । गमेरौणादिकः स्थन् ॥

[9]भक्षयित्वा आत्मानमभिमृशति—हिन्वेति पथ्याबृहत्या ॥ तृतीयस्य द्वादशाक्षरत्वात् । हे हरिवः हरितवर्ण । 'मतुवसोः'

रृषीनुप तिष्ठस्व मा मेऽवाङ्नाभिम-
ति ॥ १८ ॥ गाः । अपाम सोमं-
ममृता अभूमादर्श्म ज्योतिरविंदा-

षः । शिवः । मे । सप्तर्षीनिति सप्त–ऋषीन् ।
उपेति । तिष्ठस्व । मा । मे । अवाङ् । नाभिम् ।
अतीति ॥ १८ ॥ गाः । [10]अपाम । सोमम् । अ-
मृताः । अभूम । अदर्श्म । ज्योतिः । अविदाम ।

---

इति रुत्वम् । मे मम गात्रा गात्राणि हिन्व प्रीणय । हिवि प्रीणने, इदित्वान्नुम् । मे मदीयान् गणान् पुत्रादीन् मा वितीतृषः वितृष्णान् मा कार्षीः पुनःपुनः पातॄन् कुरु । किंच—शिवो भूत्वा मे मदीयान् सप्त ऋषीन् अरिषितॄन् प्राणान् शीर्षण्यान् द्वेद्वे चक्षुषी श्रोत्रे नासिके एकमास्यमिति, तानुपतिष्ठस्व । ऋषि गतौ, औणादिक इनिप्रत्ययः । उपस्थानमुपेत्य तर्पणं तदर्थं मे मम नाभिमतीत्य अवाक् अधस्तात् मा गाः मा गमः । अवपूर्वादञ्चतेः क्विनि 'अनिगन्तोञ्चतौ' इति गतेः प्रकृतिस्वरत्वम् ॥

[10]आदित्यमुपतिष्ठते—अपामेति त्रिष्टुभा ॥ अपाम सोमम् । पिबतेर्लुङि 'गातिस्थ' इति सिचो लुक् । अमृता अमरणाः अभूम भविष्यामः । प्रत्यक्षविरोधात् व्यत्ययेन भविष्यति लुङ् । यद्वा—'आशंसायां भूतवच्च' इति भविष्यदर्थे लुङ् । अमृता भूयास्मेत्याशास्यते, तेनैव सिचो लुक् । 'नञो जरमरमित्र' इत्युत्तरपदान्तोदात्तत्वम् । अदर्श्म द्रक्ष्यामः ज्योतिः द्योतमानं वस्तु स्व-

म देवान् । किमस्मान्कृणवदरातिः किमु धूर्तिरमृत मर्त्यस्य । यन्मे आत्मनो मिन्दाऽभूदग्निस्तत्पुनराऽ-

देवान् । किम् । अस्मान् । कृणवत् । अरातिः । किम् । उ । धूर्तिः । अमृत । मर्त्यस्य । [11]यत् । मे । आत्मनः । मिन्दा । अभूत् । अग्निः । तत् । पुनः । एति । अहाः । जातवेदा इति जात-वे-

---

र्गं आदित्यं वा । छान्दसः सिचो लोपः । अविदाम ज्ञास्यामः देवान् । व्यत्ययेन च्लेरङ् । यद्वा—अविदाम लप्स्यामहे । ऌदित्वा-दङ् । अत्र प्रथमस्याख्यातस्यापादादित्वान्निघाताभावः । द्वितीयं निहन्यत एव । तृतीयं पादादित्वान्निहन्यते । चतुर्थं तु स-मानवाक्ये पदात्परत्वाभावान्न निहन्यते । एवममृतभूतानस्मान् अरा-तिः शत्रुः मृत्युर्वा किं कृणवत् किं कुर्यात् । कृवि हिंसा-करणयोः, इदित्वान्नुम्, 'धिन्विकृण्व्योरच' इत्युप्रत्ययः, लेटोडा-टौ, इत्य[illegible]ः । मर्त्यस्य मरणधर्मिणो मनुष्यस्य धूर्तिः हिंसा इदानीमस्मान् किमु किमेव कुर्यात् अमृतानस्मान् । विभक्तेर्लुक् छान्दसः, निघातश्च । यद्वा—अमृतेति सोम आमन्त्र्यते । तेन आमन्त्रितानामनुदात्तत्वं प्रवर्तते । धुर्वेः 'क्तिच्क्तौच' इति क्तिच् ।

[11]आग्नीध्रे स्रुवाहुतिं जुहोति—यन्म आत्मन इति द्वाभ्याम्, प्रथमा त्रिष्टुप् जगती वा । 'तत्' इति प्रथमपादान्तः । त्रि-पदा गायत्री । 'अग्निस्तत्पुनराहाः' इति द्वितीयः पादः । द्वि-

हो॒ज्जा॒तवे॑दा॒ विच॑र्षणिः । पुन॑र॒-
ग्निश्चक्षु॑रदा॒त्पुन॒रिन्द्रो॒ बृह॒स्पति॑ः । पु-
न॑र्मे अश्विना यु॒वं चक्षु॒रा ध॑त्तम॒-

दा॒ः । विच॑र्षणि॒रिति॒ वि—च॒र्ष॒णि॒ः । [12]पुन॑ः ।
अ॒ग्निः । चक्षु॑ः । अ॒दा॒त् । पुन॑ः । इन्द्र॑ः । बृह॒स्प-
ति॑ः । पुन॑ः । मे॒ । अ॒श्वि॒ना॒ । यु॒वम् । चक्षु॑ः । ए-

तीयाऽनुष्टुप् ॥ मे मम आत्मनः यत्किंचित् केन चिन्निमित्तेन प्रमादादिना मिन्दा मिन्दितं गळितं क्रान्तमभूत् । 'यद्वै यज्ञस्य न्यूनं क्रियते तच्छिद्रं तेन यज्ञः पराभवति यज्ञमनु यजमानो यजमानमनु प्रजाः पशवश्च' इति दर्शनात् । मिदि स्नेहने । 'गुरोश्च हलः' इत्यकारप्रत्ययः । यदिति सामान्यविवक्षया नपुंसकत्वम्, यथा—'एष वै यजमानः । यद्यूपः'* इति । अग्निः जातवेदाः जातानां वेदिता विचर्षणिः विशिष्टदर्शनः तत्पुनः आहाः आहरतु । छान्दसे लिङि सिचि वृद्धौ 'बहुलं छन्दसि' इतीडभावे हल्ङ्यादिसंयोगान्तलोपौ ॥

[12]अथ द्वितीया—पुनरिति ॥ पुनः मह्यं अग्निश्चक्षुरदात् ददातु । स एव लुङ्' 'गातिस्थ' इति सिचो लुक् । इन्द्रश्च बृहस्पतिश्च पुनश्चक्षुरदादित्येव । बृहस्पतेस्सुडुदात्तत्वे उक्ते । हे अश्विना अश्विनौ युवं युवामपि पुनर्मे चक्षुर्दर्शनसामर्थ्यं अक्ष्योः अक्ष्णोः आधत्तं स्थापयतम् । 'ई द्विवचने' इतीकारः, स चोदात्तः, तेन 'उदात्तयणः' इति विभक्तेरुदात्तत्वम् ॥

*ब्रा. १-३-७.

क्ष्योः । इष्टयजुषस्ते देव सोम स्तु-
तस्तोमस्य ॥ ११ ॥ शस्तोक्थस्य
हरिवत इन्द्रपीतस्य मधुमत उपहू-
तस्योपहूतो भक्षयामि । आपूर्या-
स्स्था मा पूरयत प्रजया च धनेन

ति । धत्तम् । अक्ष्योः । [13]इष्टयजुष इतीष्ट–यजुषः ।
ते । देव । सोम । स्तुतस्तोमस्येति स्तुत–स्तोम-
स्य ॥११॥ शस्तोक्थस्येति शस्त–उक्थस्य । ह-
रिवत इति हरि–वतः । इन्द्रपीतस्येतीन्द्र–पीतस्य ।
मधुमत इति मधु–मतः । उपहूतस्येत्युप–हूतस्य ।
उपहूत इत्युप–हूतः । भक्षयामि । [14]आपूर्या इ-
त्या–पूर्याः । स्थ । एति । मा । पूरयत । प्रजये-

---

[13]अथ हारियोजने धानानां भक्षणमन्त्रः—इष्टयजुष इत्यादि यजुः ॥ हे देव सोम ते तव त्वां भक्षयामि । पूर्ववत्कर्मणि षष्ठी कीदृशस्य? इष्टयजुषः । इष्टमेभिरिति छान्दसः करणे क्तः । इष्टानि यजूंषि यस्य । स्तुतस्तोमस्य स्तुताः स्तोमाः यस्य । शस्तोक्थस्य शस्तानि शस्त्राणि यस्य तादृशस्य, हरिवत इत्यादि । गतम्* ॥

[14]धाना निर्णिज्योत्त†रवेद्यां सन्निवपति—आपूर्या इति द्विपदया गायत्र्या ॥ आपूर्याः आपूर्णा एव यूयं स्थ । भक्षणेन न क्षयः कश्चिदस्माभिः कृतः । कर्तरि कृत्यः । यद्वा—करणे । आपूर्याः स्थ । तस्मान्मामापूरयत प्रजया च धनेन च ॥

---

*सं. ३-२-५.५ †ग–धानादीनि हवींष्युत्त.

च । एतत्ते तत ये च त्वामन्वेतत्ते
पितामह प्रपितामह ये च त्वामन्वत्र
पितरो यथाभागं मन्दध्वं नमो वः
पितरो रसाय नमो वः पितरश्शु-

ति प्र–जया । च । धनेन । च । [15]एतत् । ते । तत । ये । च । त्वाम् । अन्विति । [16–17]एतत् । ते । पितामह । प्रपितामहेति प्र–पितामह । ये । च । त्वाम् । अन्विति । अत्र । पितरः । यथा-भागमिति यथा–भागम् । मन्दध्वम् । [18]नमः । वः । पितरः । रसाय । नमः । वः । पितरः । शुष्माय ।

[15–17]तिस्रो धाना ददाति—एतत्ते ततेति ॥ 'सोमाय पितृमते'* इत्यत्रैतद्व्याख्यातम् । हे तत तात एतदशनं तव ये चान्ये त्वामनुगताः । एतत्ते पितामह, ये च त्वामनुगताः । एतत्ते प्रपितामह, ये च त्वामनुगताः । इदानीं सामान्येनोच्यते—हे पितरः पितामहाः प्रपितामहाः अत्र यथाभागं मन्दध्वं तृप्यतेति ॥

[18]षड्भिर्नमस्कारैरुपतिष्ठते—नमो व इति ॥ हे पितरः युष्मभ्यं नमः नमस्करोमि रसाय रसार्थं रसवान् भूयासमिति । 'पितरो नमो वः' इत्यादिकं षट्स्वप्यनुषज्यते । शुष्मो बलम् । जीवः प्राणः । स्वधा अन्नम् । मन्युर्दीप्तिः, क्रोधो वा । घोरः क्रूरम् । एतयोः स्थाने प्राधान्यं प्रार्थ्यते । हे पितरः युष्मभ्यं

*सं. १-८-५.२

ष्माय नमो वः पितरो जीवाय नमो
वः पितरः ॥ २० ॥ स्वधायै नमो
वः पितरो मन्यवे नमो वः पितरो
घोराय पितरो नमो वो य एतस्मिं-
न्लोके स्थ युष्माꣳस्तेऽनु येऽस्मि-
न्लोके मां तेऽनु य एतस्मिंन्लोके स्थ

नमः । वः । पितरः । जीवाय । नमः । वः । पि-
तरः ॥ २० ॥ स्वधाया इति स्व-धायै । नमः ।
वः । पितरः । मन्यवे । नमः । वः । पितरः ।
घोराय । पितरः । नमः । वः । ये । एतस्मिन्न् ।
लोके । स्थ । युष्मान् । ते । अन्विति । ये । अ-
स्मिन्न् । लोके । माम् । ते । अन्विति । ये । एत-
स्मिन्न् । लोके । स्थ । यूयम् । तेषाम् । वसिष्ठाः ।

---

नमः । फलमनपेक्ष्य सप्तमोयं नमस्कारः क्रियते । पुनर्वचनं फलनिरपेक्षया नमस्कारार्थम् । अन्य आहुः—पितृसंबन्धिभ्यो रसादिभ्यः प्रथमं षण्णमस्काराः, ततः पितृभ्य एव सप्तम इति । ये एतस्मिन् लोके पितरः स्थ । एतस्मिन्निति पितृलोकं व्यपदिशति । स्थेति सर्वपित्रभिप्रायेणोक्तम् । ते सर्वे युष्माननुसन्तु युष्मत्प्रधाना भवन्तु । 'हीने' इत्यनोः कर्मप्रवचनीयत्वम् । युष्मानिति पित्रादित्रयं व्यपदिशति । अस्मिन् मनुष्यलोके मनुष्याः स्थ, ते सर्वे मामनु सन्तु मत्प्रधाना भवन्तु । ये यूयमेतस्मिन्

यूयं तेषां वसिष्ठा भूयास्त येऽस्मि-
न्लोकेऽहं तेषां वसिष्ठो भूयासं प्रजा-
पते न त्वदेतान्यन्यो विश्वा जाता-
नि परि ता बभूव ॥२१॥ यत्कामास्ते
जुहुमस्तन्नो अस्तु वयꣳ स्याम पतयो

भूयास्त । ये । अस्मिन् । लोके । अहम् । तेषाम् । वसिष्ठः । भूयासम् । [19]प्रजापत इति प्रजा—पते । न । त्वत् । एतानि । अन्यः । विश्वा । जातानि । परीति । ता । बभूव ॥ २१ ॥ यत्कामा इति यत्—कामाः । ते । जुहुमः । तत् । नः । अस्तु । वयम् ।

---

लोके स्थ तेषां पितॄणां यूयं वसिष्ठाः वसुमत्तमा भूयास्त । येऽस्मिन् लोके सन्ति मनुष्यास्तेषां मनुष्याणामहं वसिष्ठो वसुमत्तमो भूयासम् । वसुशब्दादिष्ठनि 'विन्मतोर्लुक्' इति लुक्, 'टेः' इति टिलोपः ॥

[19]प्राजापत्यया त्रैष्टुभा गार्हपत्यमुपतिष्ठते—प्रजापत इति ॥ व्याख्याता चेयं 'सोमस्य त्विषिरसि'* इत्यत्र । हे प्रजापते तान्येतानि विश्वानि जातानि भूतानि त्वत्तोन्यः कश्चिदपि परिभवति निजेन महिम्ना व्याप्नोति । यत्कामास्ते जुहुमो वयं तदस्माकमस्तु । किं च—वयं रयीणां पतयः स्याम भूयास्मेति ॥

---

*सं. १–८–१४[10].

रयीणाम् । देवकृतस्यैनसोवय-
जनमसि मनुष्यकृतस्यैनसोवयज-
नमसि पितृकृतस्यैनसोवयजनम-
स्यप्सु धौतस्य सोम देव ते नृभिस्सु-
तस्येष्टयजुषस्स्तुतस्तोमस्य शस्तो-

स्याम । पतयः । रयीणाम् । [20]देवकृतस्येति देव–कृतस्य । एनसः । अवयजनमित्यव–यजनम् । असि । [21]मनुष्यकृतस्येति मनुष्य–कृतस्य । एनसः । अवयजनमित्यव–यजनम् । असि । [22]पितृकृतस्येति पितृ–कृतस्य । एनसः । अवयजनमित्यव–यजनम् । असि । [23]अप्स्वित्यप्–सु । धौतस्य । सोम । देव । ते । नृभिरिति नृ–भिः । सुतस्य । इष्टयजुष इतीष्ट–यजुषः । स्तुतस्तोमस्ये-

---

[20—22]शकलैश्चरन्ति—देवकृतस्येति ॥ देवादिविषये यदस्माभिः कृतमेनः अधर्मः तस्यावयजनं नाशनं असि । 'क्षेपे' इति सप्तम्यास्समासः, सप्तमीपूर्वपदप्रकृतिस्वरत्वम् । यद्वा—देवादिभिरस्मद्विषये यत्कृतमेनःफलं दुःखं तस्यावयजनमसि । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । एतेनोभे व्याख्याते ॥

[23]अथावभृथभक्षमन्त्रः—अप्सु धौतस्येत्यादि ॥ अप्सु धौतस्य प्रक्षालितस्य नृभिः मनुष्यैः चेतनैः अभिषुतस्य । इष्टयजुष

क्थस्य यो भक्षो अश्वसनिर्यो गो-
सनिस्तस्य ते पितृभिर्भक्षंकृतस्यो-
पहूतस्योपहूतो भक्षयामि ॥ २२ ॥

ति स्तुत-स्तोमस्य । शस्तोक्थस्येति शस्त-उक्थ-
स्य । यः । भक्षः । अश्वसनिरित्यश्व-सनिः । यः ।
गोसनिरिति गो-सनिः । तस्य । ते । पितृभिरिति
पितृ-भिः । भक्षंकृतस्येति भक्षं-कृतस्य । उपहू-
तस्येत्युप-हूतस्य । उपहूत इत्युप-हूतः । भक्ष-
यामि ॥ २२ ॥

विश्वचर्षणे त्रिष्टुप्छन्दस इन्द्रपीतस्य नराशꣳस-
पीतस्याति स्तुतस्तोमस्य जीवाय नमो वः पि-
तरो बभूव चतुश्चत्वारिꣳशच्च ॥ ५ ॥

---

इत्यादि । व्याख्यातम्* । हे सोम देव तवेदृशस्य यो भक्षः भ-
क्षणं अश्वसनिः अश्वानां संभक्ता । यो गोसनिः गवां संभक्ता ।
'छन्दसि वनसन' इतीन्प्रत्ययः । तस्य ते तव पितृभिः भक्षं-
कृतस्य । 'च्वौ' इतीत्वापवादः पूर्वपदस्य छान्दसो मुमागमः-
'ऊर्यादिच्विडाचश्च' इति गतित्वात् 'गतिरन्तरः' इति तस्य प्र,
कृतिस्वरत्वम् । उपहूतस्येत्यादि । गतम्† ॥

इति तृतीये द्वितीये पञ्चमोनुवाकः.

---

*सं. ३-२-५[13], †सं. ३-२-५[5].

महीनां पयोऽसि विश्वेषां देवानां तनू-
र् ऋध्यासमद्य पृषतीनां ग्रहं पृषती-
नां ग्रहोऽसि विष्णोर् हृदयमस्येकमि-

[1]महीनाम् । पयः । असि । विश्वेषाम् । देवा-
नाम् । तनूः । ऋध्यासम् । अद्य । पृषतीनाम् ।
ग्रहम् । पृषतीनाम् । ग्रहः । असि । [2]विष्णोः ।
हृदयम् । असि । एकम् । इष । विष्णुः । त्वा ।

---

[1]पृषदाज्यं गृह्णाति—महीनामिति ॥ महीनां महनीयानां गवां पयोसि विश्वेषां देवानां तनूः शरीरं; तत्स्थितिहेतुत्वात् । अद्येदानीं ऋध्यासं वर्धयामि त्वाम् । ऋध्नोतेः ण्यन्तादाशिषि लिङ् । 'बहुलमन्यत्रापि' इति णिलुक् । पृषतीनां ग्रहं मरुतामश्वाः पृषत्यः । शतृवद्भावात् ङीप् । तासां गृहस्थानीयं त्वाम् । पृषतीनां ग्रहोसि; ग्राहकोसि प्रियतरत्वात् । यद्वा—पृषतीशब्देन मरुतस्त्वोपात् [रुतां स्वा ये] तद्वन्तो मरुत उच्यन्ते । मरुतां स्वभतो ग्रहस्त्वमसीति ॥

[2]विष्णोरिति विराड्गायत्री जागतगायत्री वा 'इष' इति प्रथमपादान्तः ॥ विष्णोः यज्ञात्मनः हृदयमिव प्रियोसि । कुत इत्याह—हे इष अन्नवन् । इषुशब्दात् अर्शआदिलक्षणोच्प्रत्ययः । एकं प्रधानं त्वामनु त्वया हेतुना विष्णुर्भगवान् त्रैलोक्यं विचक्रमे । 'अनुर्लक्षणे' इति कर्मप्रवचनीयत्वम् ॥

ष विष्णुस्त्वाऽनु वि चंक्रमे भूतिर्दध्ना घृतेनं वर्धतां तस्यं मेष्टस्यं वीतस्य द्रविंणमा गंम्याज्ज्योतिंरसि वैश्वा-नरं पृश्निंयै दुग्धं यावंती द्यावापृ-

अनुं । वीतिं । चक्रमे । [3]भूतिः । दध्ना । घृतेनं । वर्धताम् । तस्यं । मा । इष्टस्यं । वीतस्यं । द्रविं-णम् । एतिं । गम्यात् । [4]ज्योतिः । असि । वैश्वा-नरम् । पृश्निंयै । दुग्धम् । [5]यावंती इतिं । द्यावा-

---

[3]तस्य स्कन्नस्य स्वधासंभरणमन्त्रः—भूतिरिति । इयमपि विराङ्गायत्री द्विपदान्ता ॥ भूतिः तवैश्वर्यं दध्ना घृतेन वर्धताम् । तस्य तादृशस्य उद्भूतैश्वर्यस्य इष्टस्य देवानां प्रियस्य देवेभ्यो हुतस्य वीतस्य भक्षितस्य च यद्द्रविणं फलं तन्मां आगम्यात् आगच्छतु वृथा स्कन्नं मा भूदिति ॥

[4]दधिघर्ममवेक्षते—ज्योतिरिति ॥ अग्निस्त्वमसि; प्रवर्ग्यभक्तित्वात् वैश्वानरं विश्वेषां नराणां हितत्वेन स्वामित्वेन वा सम्बन्धी वैश्वानरः आदित्यः तस्य स्वभूतमसि । अभेदेनोच्यते । पृश्निये पृश्न्याः गोर्दुग्धं पयः । षष्ठ्यर्थे चतुर्थी ॥

[5]अथ तस्य ग्रहणमन्त्रः—यावती इति चतुष्पदा बृहती ॥ यावती यावत्यौ यत्प्रमाणे यत्प्रमाणकाले वा द्यावापृथिवी द्यावापृथिव्यौ । उभयत्रापि 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम्,

थिवी महित्वा यावच्च सप्त सिन्धवो वि तस्थुः । तावन्तमिन्द्र ते॥२३॥
ग्रहꣳ सहोर्जा गृह्णाम्यस्तृतम् । यत्कृष्णशकुनः पृषदाज्यमवमृशेच्छूद्रा अस्य प्रमायुकास्स्युर्यच्छ्वाऽवमृ-

पृथिवी इति द्यावा—पृथिवी । महित्वेति महि—त्वा । यावत् । च । सप्त । सिन्धवः । वितस्थुरिति वि—तस्थुः । तावन्तम् । इन्द्र । ते ॥ २३ ॥ ग्रहम् । सह । ऊर्जा । गृह्णामि । अस्तृतम् । [6]यत् । कृष्णशकुन इति कृष्ण—शकुनः । पृषदाज्यमिति पृषत्—आज्यम् । अवमृशेदित्यव—मृशेत् । शूद्राः । अस्य । प्रमायुका इति प्र—मायुकाः । स्युः । यत् । श्वा । अवमृशेदित्यव—मृशेत् । चतुष्पाद इति च-

'देवताद्वन्द्वे च' इति द्यावापृथिवीशब्द आद्युदात्तः । महित्वा महत्त्वेन । तृतीयाया आजादेशः । यावच्च यावत्कालं सप्त सिन्धवः समुद्राः वितस्थुः विभक्ताः स्थास्यन्ति । छान्दसो वा लिट्, आत्मनेपदाभावश्च । तावन्तं तावत्प्रमाणं तावत्कालस्थायिनं तावत्कालस्थितिहेतुं वा लोकानाम्, हे इन्द्र तव ग्रहं एतं अस्तृतं अहिंसितं ऊर्जा अन्नेन सह गृह्णामि । स्तृ इति ह्रस्वान्तं धात्वन्तरं, स्तृणातेर्वा ह्रस्वत्वम् ॥

[6]अथ विकृतपृषदाज्यब्राह्मणं—यत्कृष्णशकुन इत्यादि ॥ कृष्ण-

शेच्चतुष्पादोस्य पशवः प्रमायुका-
स्स्युर्यत्स्कन्देद्यजमानः प्रमायुक-
स्स्यात्पशवो वै पृषदाज्यं पशवो
वा एतस्य स्कन्दन्ति यस्य पृषदा-
ज्यꣳ स्कन्दति यत्पृषदाज्यं पुनर्गृ-
ह्णाति पशूनेवास्मै पुनर्गृह्णाति प्राणो
वै पृषदाज्यं प्राणो वै ॥ २४ ॥ ए-

तुः–पादः । अस्य । पशवः । प्रमायुका इति प्र–
मायुकाः । स्युः । यत् । स्कन्देत् । यजमानः ।
प्रमायुक इति प्र–मायुकः । स्यात् । पशवः । वै ।
पृषदाज्यमिति पृषत्–आज्यम् । पशवः । वै । ए-
तस्य । स्कन्दन्ति । यस्य । पृषदाज्यमिति पृषत्–
आज्यम् । स्कन्दति । यत् । पृषदाज्यमिति पृषत्–
आज्यम् । पुनः । गृह्णाति । पशून् । एव । अस्मै ।
पुनः । गृह्णाति । प्राण इति प्र–अनः । वै । पृष-
दाज्यमिति पृषत्–आज्यम् । प्राण इति प्र–अनः ।
वै ॥ २४ ॥ एतस्य । स्कन्दति । यस्य । पृषदा-

---

वर्णशकुनः पक्षी कृष्णशकुनः । पृषद्वर्णमाज्यं पृषदाज्यं पृषद्बिन्दु-
वन्नानावर्णम् । अवमर्शनं पद्भ्यां स्पर्शनम् । अस्य यजमानस्य शूद्राः

तस्यं स्कन्दति यस्यं पृषदाज्यꣳ स्कन्दंति यत्पृंषदाज्यं पुनंर्गृह्णाति प्राणमेवास्मै पुनंर्गृह्णाति हिरंण्यमवधायं गृह्णात्यमृतं वै हिरंण्यं प्राणः पृंषदाज्यममृतंमेवास्यं प्राणे दंधाति शतमांनं भवति शतायुः पुरुंषश्श-

ज्यमितिं पृषत्–आज्यम् । स्कन्दति । यत् । पृषदाज्यमितिं पृषत्–आज्यम् । पुनः । गृह्णाति । प्राणमितिं प्र–अनम् । एव । अस्मै । पुनः । गृह्णाति । [7]हिरंण्यम् । अवधायेत्यंव–धायं । गृह्णाति । अमृतम् । वै । हिरंण्यम् । प्राण इतिं प्र–अनः । पृषदाज्यमितिं पृषत्–आज्यम् । अमृतम् । एव । अस्य । प्राण इतिं प्र–अने । दधाति । शतमानमितिं शत–मानम् । भवति । शतायुरितिं शत–

---

प्रमाणशीलाः मरणशीलाः म्रियतेश्छान्दस उकञ् । पशवो वै पृषदाज्यमिति । तद्धेतुत्वात्ताच्छब्द्यम् । यथोक्तेन पुनर्ग्रहणेन स्कन्नस्योपलक्षणत्वात्सर्वामेध्यत्वनिवृत्तिः । प्राणो वै पृषदाज्यमिति । पूर्ववत्ताच्छब्द्यम् ॥

[7]हिरण्यमिति ॥ एतां स्रुचमप्सु प्रवेश्य अन्यस्यां स्रुचि हिरण्यमवधाय तत्पृषदाज्यं गृह्णाति । नित्यग्रहणमिति केचित् ।

तेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठ-
त्यश्वमवं घ्रापयति प्राजापत्यो वा
अश्वः प्राजापत्यः प्राणस्स्वादेवास्मै
योनेः प्राणं निर्मिमीते वि वा ए-

आयुः । पुरुषः । शतेन्द्रिय इति शत–इन्द्रियः ।
आयुषि । एव । इन्द्रिये । प्रतीति । तिष्ठति ।
[8]अश्वम् । अवेति । घ्रापयति । प्राजापत्य इति
प्राजा–पत्यः । वै । अश्वः । प्राजापत्य इति प्रा-
जा–पत्यः । प्राण इति प्र–अनः । स्वात् । एव ।
अस्मै । योनेः । प्राणमिति प्र–अनम् । निरिति ।
मिमीते । [9]वीति । वै । एतस्य । यज्ञः । छिद्यते ।

---

शतमानमिति शतं मानमस्येति । शतायुः शतसंवत्सरमायुः । श-
तेन्द्रियः शतवीर्यः । शतत्वसंख्यायोगादायुरिन्द्रियलाभः ॥

[8]अश्वमिति ॥ अपोद्धृत्य हिरण्यमश्वमवघ्रापयति । अश्वप्राण-
योः प्राजापत्यत्वादन्यतरस्यान्वये इदमभिसन्धापयतीति प्राणसिद्धिः ॥

[9]वैष्णव्यर्चेति ॥ 'विष्णो त्वं नो अन्तमः'* इत्येतामृचमनु-
वर्तयन् गृह्णाति पृषदाज्यं विच्छिन्नं यज्ञं यज्ञात्मना विष्णुना सन्त-
नोति संहितं करोति । वैष्णव्येत्युदात्तनिवृत्तिस्वरेण ङीप उदा-

---

*सं. ३-१-१०७.

तस्यं यज्ञश्छिद्यते यस्यं पृषदाज्य९ स्कन्दंति वैष्णव्यर्चा पुनर्गृह्णाति य- ज्ञो वै विष्णुर्यज्ञेनैव यज्ञ९ सं त- नोति ॥ २५ ॥

देवं सावितरेतत्ते प्राह तत्प्र चं सुव

यस्यं । पृषदाज्यमितिं पृषत्-आज्यम् । स्कन्दंति । वैष्णव्या । ऋचा । पुनः । गृह्णाति । यज्ञः । वै । विष्णुः । यज्ञेन । एव । यज्ञम् । समितिं । तनो- ति ॥ २५ ॥

ते पृषदाज्यं प्राणो वै योनैः प्राणं द्वावि९शतिश्च ॥ ६ ॥

[1]देवं । सवितः । एतत् । ते । प्रेतिं । आह । तत् । प्रेतिं । च । सुव । प्रेतिं । च । यज । बृहस्प-

त्तत्वं, 'उदात्तयणः' इति तृतीयाया उदात्तत्वम्, 'स्वरितो वाऽनु- दात्ते पदादौ' इति संहितायामेकादेशस्स्वर्यते । 'साविकाचः' इति ऋचस्तृतीयाया उदात्तत्वम् ॥

इति तृतीये द्वितीये षष्ठोनुवाकः.

---

[1]यत्र हि 'ब्रह्मन् स्तोष्यामः प्रशास्तः' इति, तद्ब्रह्मा प्रसौ- ति—देव सवितरिति ॥ हे देव सवितः एतत्तवायं प्राह

प्र च॑ यज॒ बृह॒स्पति॑र्ब्र॒ह्माऽऽयु॑ष्मत्या
ऋ॒चो मा गा॑त तनू॒पात्साम्न॑स्स॒त्या
व॑ आ॒शिष॑स्सन्तु स॒त्या आकू॑तय

ति॑ः । ब्र॒ह्मा । आयु॑ष्मत्याः । ऋ॒चः । मा । गा॒त॒ । त॒नू॒पादिति॑ तनू॒-पात् । साम्न॑ः । स॒त्याः । व॒ः । आ॒शिष॒ इत्या॑-शिष॑ः । स॒न्तु॒ । स॒त्याः । आकू॑तय॒ इत्या-कू॒त॒य॒ः । ऋ॒तम् । च॒ । स॒त्यम् । च॒ । व॒द॒-

ब्रवीति स्तोष्याम इति । तत्प्रसुव च अनुजानीहि । प्रयज च प्रकर्षेण यागं निर्वर्तय च । 'च वा योगे प्रथमा' इति तिङ्विभक्तिर्न निहन्यते । हे उद्गातारः बृहस्पतिरेवाहं ब्रह्मा, न मनुष्यमात्रः, सोहं वो ब्रवीमि । आयुष्मत्या अविनष्टया ऋचा* योनिभूतया मा गात मा अपगमत । कीदृश्या? तनूपात्साम्नः साम्नो गीतेश्शरीरं रक्षन्त्या ऋचा हि साम्नः शरीरं रक्ष्यते । छान्दसो लिङ्गव्यत्ययः । यद्वा—ऋचस्तनुं पालयतस्साम्नश्च मा गात तस्या ऋचश्शरीरमवलम्बमानादित्यर्थः । सत्या अवितथाः युष्माकमाशिषः प्रार्थनास्सन्तु । आकूतयस्संकल्पाश्च सत्या यथासंकल्पसमाप्तयः सन्त्वित्येव । ऋतं च वदत । मानसं तथ्यमृतम् । यथा मनसाऽभिसंहितं तथा वदत । सत्यं च वदत । वाचिकं सत्यं तथ्यम् । यथा वाचा प्रतिज्ञातं तथा वदत । स्तुत गीत्या स्तुतिं निर्वर्तयतः देवस्य सवितुः प्रसवे अनुज्ञां लब्ध्वा स्तुतिं कुरुत । अत्र प्रातस्सवने—'भूरिन्द्रवन्तः स्तुत' इति विशेषमाहुः । 'भुव इन्द्र-

*अ—अविनष्टाया ऋचो.

ऋतं चं सत्यं चं वदत स्तुत देवस्यं
सवितुः प्रसवे स्तुतस्यं स्तुतमस्यूर्जं
मह्यꣳ स्तुतं दुंहामा मा स्तुतस्यं
स्तुतं गम्याच्छस्त्रस्यं शस्त्रम् ॥२६॥
अस्यूर्जं मह्यꣳ शस्त्रं दुंहामा मा

त। स्तुत। देवस्यं। सवितुः। प्रसव इति प्र-सवे। [2]स्तुतस्यं। स्तुतम्। असि। ऊर्जम्। मह्यम्। स्तुतम्। दुहाम्। एति। मा। स्तुतस्यं। स्तुतम्। गम्यात्। [3]शस्त्रस्यं। शस्त्रम् ॥ २६ ॥ असि। ऊर्जम्। मह्यम्। शस्त्रम्। दुहाम्। एति। मा।

---

वन्तस्स्तुत' इति माध्यन्दिने । 'सुवरिन्द्रवन्तस्स्तुत' इति तृतीयसवने ॥

[2]अथ स्तुते स्तुतस्य दोहं वाचयति—स्तुतस्य स्तुतमसीति ॥ स्तुतस्य यज्ञस्य स्तुतं फलं त्वमसीति हे स्तोत्र त्वदधीनत्वात्तस्य। यद्वा—स्तुतस्यापि स्तुतं त्वमसि स्तोत्रस्यापि स्तोत्रमसि त्वत्तुल्यं स्तोत्रं नास्तीति । यथा—ब्राह्मणानामपि त्वं ब्राह्मण इति । स्तुतस्येति जातावेकवचनम् । तादृशं त्वां स्तुतं यथोक्तस्तुतरूपं मह्यं मदर्थं ऊर्जमन्नं दुहां दुहे। लेव्यामागमः, विकरणव्यत्ययेन शः। ततश्च स्तुतस्य स्तुतं यथोक्तं स्तुतिफलरूपं वा विशिष्टस्तोत्ररूपं मामागम्यात् आगच्छतु ॥

[3]अथ शस्त्रे शस्त्रस्य दोहं वाचयति—शस्त्रस्येति ॥ शस्त्रस्य

शस्त्रस्यं शस्त्रं गम्यादिन्द्रियावन्तो वनामहे धुक्षीमहिं प्रजामिषम्। सा मे सत्याऽऽशीर्देवेषु भूयाद्ब्रह्मवर्चसं

शस्त्रस्यं । शस्त्रम् । गम्यात् । [4]इन्द्रियावन्त इतीन्द्रिय-वन्तः । वनामहे । धुक्षीमहिं । प्रजामितिं प्र-जाम् । इषम् । सा । मे । सत्या । आशीरित्यां-शीः । देवेषु । भूयात् । ब्रह्मवर्चसमितिं ब्रह्म-

---

शंसनफलं त्वमसि, शस्त्राणामपि वा शस्त्रमसि। तादृशशस्त्ररूपं त्वां ऊर्जं दुहे । ततो मां यथोक्तं शस्त्रमागच्छतु । अत्र ष्टुञ् स्तुतौ, शंस स्तुतौ, इत्यर्थाविशेषेऽपि गीतिविशिष्टं स्तोत्रं, ऋक्समुदायमात्रं शस्त्रमित्यवगन्तव्यम् ॥

[4]एतयोरुभयोरभ्यासं वाचयति—इन्द्रियावन्त इति । इयं पथ्याबृहती 'तृतीयश्चेद्द्वादशाक्षरः पथ्या' इति । द्व्यक्षरोनत्वाद्विराट् ॥ इन्द्रियावन्त इन्द्रियैरविकलैस्तद्वन्तः । 'मन्त्रे सोमाश्व' इति दीर्घत्वम् । त्वामेव वनामहे भजामहे सर्वकालम् । ते धुक्षीमहि दोहामहे त्वाम् । किम्? प्रजां पुत्रादिकां इषमन्नं तस्याश्च जीवनम् । किं च—देवेषु मे या आशीः प्रार्थना यजामी*ति सा सत्या अवितथा भूयात् पुनःपुनः यज्ञ उत्पद्यतां यागश्च प्रवर्ततामिति । अवितथं च ब्रह्मवर्चसमागम्यात् आगच्छतु । यियक्षा वर्तिष्यते इति ॥

---

*अ—यजाता इ.

माऽऽ गंम्यात् । यज्ञो बंभूव स आ बंभूव स प्र जंज्ञे स वांवृधे । स देवानामधिपतिर्बभूव सो अस्मा२ अधिपतीन्करोतु वयꣳ स्याम पतयो रयीणाम् । यज्ञो वावै ॥ २७ ॥ यज्ञपंतिं दुहे यज्ञपंतिर्वा यज्ञं दुहे स

वर्चसम् । मा । एति । गम्यात् । [5]यज्ञः । बभूव । सः । एति । बभूव । सः । प्रेति । जज्ञे । सः । वावृधे । सः । देवानाम् । अधिपतिरित्यधि—पतिः । बभूव । सः । अस्मान् । अधिपतीनित्यधि—पतीन् । करोतु । वयम् । स्याम । पतयः । रयीणाम् । [6]यज्ञः । वा । वै ॥ २७ ॥ यज्ञपतिमिति यज्ञ—पतिम् । दुहे । यज्ञपतिरिति यज्ञ—पतिः । वा । य-

---

[5]यज्ञस्य पुनरालम्भं जपति—यज्ञो बभूवेति ॥ इयं जगती पञ्चविधा । व्याख्याता चेयम् 'अगन्म सुवः'* इत्यत्र । यज्ञस्सम्पद्यतां, स विश्वमभिभवतु, स प्रजनयतु स प्रजास्संवर्धताम्, स देवानामधिकं पालयिता भूयात् । वयं च रयीणां धनानां स्वामिनः स्यामेति ॥

[6]अथ स्तुतशस्त्रयोर्दोहस्य ब्राह्मणं—यज्ञो वा वा इत्यादि ॥ यद्द्वयमत्र भवति यज्ञो वा यज्ञपतिं दुहे, यज्ञपतिर्वा यज्ञं दुहे

---

*सं. १-६-६[14].

यस्स्तुतशस्त्रयोर्दोहमविद्वान् यजते तं यज्ञो दुहे स इष्ट्वा पापीयान्भवति य एनयोर्दोहं विद्वान् यजते स यज्ञं दुहे स इष्ट्वा वसीयान्भवति स्तुतस्य स्तुतमस्यूर्जं मह्यꣳ स्तुतं दुहामा मा

ज्ञम् । दुहे । सः । यः । स्तुतशस्त्रयोरिति स्तुत–शस्त्रयोः । दोहम् । अविद्वान् । यजते । तम् । यज्ञः । दुहे । सः । इष्ट्वा । पापीयान् । भवति । [7]यः । एनयोः । दोहम् । विद्वान् । यजते । सः । यज्ञम् । दुहे । सः । इष्ट्वा । वसीयान् । भवति । स्तुतस्य । स्तुतम् । असि । ऊर्जम् । मह्यम् । स्तुतम् । दुहाम् । एति । मा । स्तुतस्य । स्तुतम् ।

---

इति । 'लोपस्त आत्मनेपदेषु' इति तलोपः । 'वै वा वेति च छन्दसि' इति प्रथमा तिङ्विभक्तिर्न निहन्यते । कस्तयोः प्रथम इत्याह—स इत्यादि । गतम् । यज्ञो दुह इति । तं रेचयति । यथा गौर्दुह्यमाना क्षीरशून्या भवति, एवमयं यज्ञेन दुह्यमानो रिक्तात्मा भवेत्, ततस्स इष्ट्वा पापीयान् भवति । अत्र दुह प्रपूरणे इति प्रशब्दः पूरणप्रतिपक्षमाह यथा प्रस्मरणं प्रस्थानमिति, एवं प्रपूरणं रेचनमिति जानीयात् ॥

[7]य एनयोरित्यादि ॥ यज्ञोनेन दुह्यमानः पुनःपुनरुपचीय-

स्तुतस्यं स्तुतं गंम्याच्छस्त्रस्यं शस्त्रम-
स्यूर्जं मह्य॑ꣳ शस्त्रं दुंहामा मां शस्त्रस्यं
शस्त्रं गंम्यादित्याहैष वै स्तुंतशस्त्र-
योर्दोहस्तं य एवं विद्वान् यजंते दुह
एव यज्ञमिष्ट्वा वसींयान्भवति ॥२८॥

गम्यात् । शस्त्रस्यं । शस्त्रम् । असि । ऊर्जंम् ।
मह्यंम् । शस्तम् । दुहाम् । एति । मा । शस्त्रस्यं ।
शस्त्रम् । गम्यात् । इति । आह । एषः । वै ।
स्तुतशस्त्रयोरिति स्तुत–शस्त्रयोः । दोहः । तम् ।
यः । एवम् । विद्वान् । यजंते । दुहे । एव । यज्ञम् ।
इष्ट्वा । वसींयान् । भवति ॥ २८ ॥

शस्त्रं वै शस्त्रं दुंहां द्वाविꣳशतिश्च ॥७॥

---

मानः सदा गौरिव दोग्धुरस्योपकरोति । ततश्च स इष्ट्वा यज्ञवान् भूत्वा वसीयान् वसुमत्तरो भवति 'विन्मतोर्लुक्' इति लुक्, 'टेः' इति टिलोपः । कः पुनरेतयोः दोह इत्याह— स्तुतस्येत्यादि । गतम्* । दोहमजानन्तं गोकल्पं यज्ञो दुग्धे । दोहवित्तु यज्ञमेव गोस्थानीयं सर्वाण्यभिमतानि दुग्धे । इत्थं यज्ञवांश्च भूत्वा वसयियान् भवति गोमानिव समृद्धो भवतीत्यर्थः ॥

इति तृतीये द्वितीये सप्तमोनुवाकः.

---

*सं. ३-२-७²⁻³.

श्येनाय पत्वने स्वाहा वट्स्वयमभिगूर्ताय नमो विष्टम्भाय धर्मणे स्वाहा वट्स्वयमभिगूर्ताय नमः परिधये जनप्रथनाय स्वाहा वट्-

[1]श्येनाय । पत्वने । स्वाहा । वट् । स्वयमभिगूर्तायेति स्वयं-अभिगूर्ताय । नमः । [2]विष्टम्भायेति वि-स्तम्भाय । धर्मणे । स्वाहा । वट् । स्वयमभिगूर्तायेति स्वयं-अभिगूर्ताय । नमः । [3]परिधय इति परि-धये । जनप्रथनायेति जन-प्रथनाय ।

---

[1]अथ—होतॄणां संतर्पणमन्त्राः—क्रमेण श्येनायेत्यादयः ॥ तत्र सप्तधिष्ण्याः गायत्र्यादिसप्तच्छन्दोरूपेणोच्यन्ते । नमस्कारान्ते वषट्कृते जुहोति । 'तृम्पन्तां होत्राः' इत्यनुवषट्कृते । श्येनाय श्येनवपुषे पत्वने पतनकुशलाय गायत्र्यात्मने स्वाहा स्वाहुतमिदमस्तु हविः । 'अन्येभ्योपि दृश्यते' इति क्वनिप् । वाडिति सत्यनाम । स्वयमभिगूर्ताय स्वयमेव सोमपार्श्वं गन्तुमुद्युक्ताय नमः नमस्कारोयम् । नम इति पूजानाम । गुरी उद्यमने, 'श्विदितो निष्ठायाम्' इतीट्प्रतिषेधः, 'स्वयं क्तेन' इति समासः, अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥

[2]विष्टम्भाय विष्टम्भयित्रे शत्रूणाम् । धर्मणे धारयित्रे आत्मीयानाम् । तेनैव मनिन्प्रत्ययः । शेषं समानम् ॥

[3]परिधये परितो धात्रे सर्वतो रक्षित्रे जनानाम् । जनप्रथनाय जनैः प्रथनीयाय जनानां वा प्रथयित्रे ॥

---

*सं. ३-२-८[४].

त्स्वयमभिगूर्ताय नम ऊर्जे होत्रा-
णाꣳ स्वाहा वट्त्स्वयमभिगूर्ताय न-
मः पयसे होत्राणाꣳ स्वाहा वट्त्स्व-
यमभिगूर्ताय नमः प्रजापतये मन-
वे स्वाहा वट्त्स्वयमभिगूर्ताय नम
ऋतमृतपास्सुववाट्त्स्वाहा वट्त्स्व-

स्वाहा । वट् । स्वयमभिगूर्तायेति स्वयं–अभिगू-
र्ताय । नमः । [4]ऊर्जे । होत्राणाम् । स्वाहा । वट् ।
स्वयमभिगूर्तायेति स्वयं–अभिगूर्ताय । नमः ।
[5]पयसे । होत्राणाम् । स्वाहा । वट् । स्वयमभिगू-
र्तायेति स्वयं–अभिगूर्ताय । नमः । [6]प्रजापतय
इति प्रजा–पतये । मनवे । स्वाहा । वट् । स्वय-
मभिगूर्तायेति स्वयं–अभिगूर्ताय । नमः । [7]ऋतम् ।
ऋतपा इत्यृत–पाः । सुववाडिति सुवः–वाट् ।
स्वाहा । वट् । स्वयमभिगूर्तायेति स्वयं–अभिगू-

[4]ऊर्जे अन्नभूताय होत्राणामन्नहेतवे वा ॥

[5]पयसे पयस्स्थानीयाय पयसो हेतवे वा ॥

[6]प्रजापतये त्वष्ट्रात्मने प्रजानाम् । मनवे यस्येमा मानव्यः प्रजाः तदात्मने ॥

[7]ऋतं यज्ञात्मा । हे ऋतपाः यज्ञस्य पालयितः । हे सुव-

यर्मभिगूर्ताय नर्मस्तृम्पन्ताꣳ होत्रा मधोर्घृतस्यं यज्ञपतिमृषंय एनंसा ॥२१॥ आहुः । प्रजा निर्भक्ता अनु-

तर्याय । नर्मः । तृम्पन्ताम् । होत्राः । मधोः । घृत-स्यं । [8]यज्ञपतिमिति यज्ञ-पतिम् । ऋषंयः । ए-नंसा ॥ २१ ॥ आहुः । प्रजा इति प्र-जाः । नि-र्भक्ता इति निः-भक्ताः । अनुतप्यमाना इत्यनु-

---

वाट् अग्नेरादित्यस्य स्वर्गिणां वा वोढः यस्त्वमृतात्मा तस्मै स्वाहा स्वाहुतमस्तु । 'वहेश्च' इति ण्विः । तृम्पन्तां तृप्यन्तु । होत्रास्सप्ताप्येता अनुक्रान्ताः । मधोः मधुरसस्य घृतस्य च । 'चतुर्थी चाशिषि' इत्यादिना षष्ठी, सुहितयोगलक्षणा वा । तृम्प तृप्तौ, तौदादिकः, व्यत्ययेनात्मनेपदम् ॥

[8]पञ्च वैश्वकर्मणानि जुहोति—यज्ञपतिमित्यादि ॥ सर्वाश्चैतास्त्रिष्टुभः पूर्वयापूर्वया परा अनुषक्ता भवन्ति, नान्त्याः । प्रथमतृतीयौ पादौ द्वितीयचतुर्थाभ्यां न युज्यते, द्वितीयस्तु तृतीयेन युज्यते, चतुर्थ उत्तरस्याद्येन युज्यते, अन्त्या त्वविकृतैव । 'घोरा ऋषयः' इति द्वितीया । 'अनन्यान् सोमपान्' इति तृतीया । 'ये भक्षयन्तः' इति चतुर्थी । 'नमः पितृभ्यः' इति पञ्चमी । तत्र प्रथमा—यज्ञपतिं यजमानमृषय आहुः एनसा । इत्थंभूतलक्षणे तृतीया । एनस्स्विनमित्यर्थः । किं सर्वदा ? नेत्याह—यदा प्रजा निर्भक्ता निर्भागा दुर्गता अनुतप्यमाना हीनैश्वर्या भवन्ति प्रजा इति ऋषय आहुः । तप

तप्यमाना मधव्यौ स्तोकावप तौ
रराध । सं नस्ताभ्या सृजतु वि-
श्वकर्मा घोरा ऋषयो नमो अस्त्वे-

तप्यमानाः । मधव्यौ । स्तोकौ । अपेति । तौ ।
रराध । समिति । नः । ताभ्याम् । सृजतु । वि-
श्वकर्मेति विश्व—कर्मा । [9]घोराः । ऋषयः । नमः ।
अस्तु । एभ्यः । चक्षुषः । एषाम् । मनसः । च ।

---

ऐश्वर्ये, दैवादिकः, अनुशब्दो धात्वर्थहानिं द्योतयति, व्यत्य-येन श्यन उदात्तत्वम् । यद्वा—तप सन्तापे, इत्यस्य भौवादि-कस्य कर्मणि यक् । यदा प्रजा निर्भक्ता दुःख्यमाना पापेन भवन्तीति । अधुना तमेवास्यापराधं स्वयमेव दर्शयति—यस्मा-दयं मधव्यौ तौ मासौ स्तोकौ स्तोतव्यौ ज्योतिष्टोमकालत्वात्प्र-शस्तौ अपरराध अपराद्धवान् । तत्र यागस्याकरणमेव तयोरपरा-धः । मधुः वसन्त ऋतुः ; मधुभूयिष्ठत्वात् । तस्यावयवौ मासौ मधव्यौ चैत्रवैशाखौ । 'मये च', 'मधोः' इति मधुशब्दात् मयडर्थे अवयवे यत्प्रत्ययः । यस्मादेवं तस्मात्ताभ्यां मधव्याभ्यां मासाभ्यां नः अस्मान् संसृजतु संपृक्तान् करोतु विश्वकर्मा विश्वं करणीयं यस्य स प्रजानां पतिः वसन्तेवसन्ते ज्योतिष्टोमेन यष्टॄन् अस्मान् करोत्वित्यर्थः । तत्रत्येन यागेन संसर्गः ताभ्यां संसर्ग इत्युच्यते ॥

[9]अथ द्वितीया—ये घोरा ऋषयः एभ्यो नमोस्तु । प्राणा वा ऋषयः । किं च—एषामृषीणां चक्षुषो मनसश्च सन्धौ

भ्यः। चक्षुष एषां मनसश्च संधौ बृहस्पतये महिषद्द्युमन्नमः। नमो विश्वकर्मणे स उ पात्वस्माननन्यान्त्सोमपान्मन्यमानः। प्राणस्य

संधाविति सं—धौ। बृहस्पतये। महि। सत्। द्युमदिति द्यु—मत्। नमः। नमः। विश्वकर्मण इति विश्व-कर्मणे। सः। उ। पातु। अस्मान्। [10]अनन्यान्। सोमपानिति सोम—पान्। मन्यमानः। प्राणस्येति प्र—अनस्य। विद्वान्। समर इति सं—अरे। न।

---

सन्धाने महि महति महनीये वा यत् सत् सीदन् भवति द्युमत् दीप्तिमत् यथा तथा सीदति यस्तत्र तस्मै बृहस्पतये नमः। द्युमते वा। बृहतां पतिः बृहस्पतिः परमात्मा। सुद्बुरावुक्तौ। चक्षुर्ग्रहणमुपलक्षणमिन्द्रियार्थम्। मनसा संयोजने यस्सीदतीति नमस्कारविशेषणं वा। महि, सत्, द्युमत्, इति पदत्रयं, महत् शोभनं दीप्तिमच्च नमस्कुर्म इति। किं च—नमस्तस्मै विश्वकर्मणे स एव पात्वस्मान्॥

[10]अथ तृतीया—अनन्यान् आत्मनोऽपृथग्भूतानस्मान्त्सोमपान् पीत-सोमान् मन्यमानः प्राणस्यात्मनो विद्वान्। कर्मणस्सम्प्रदानत्वात्पूर्व-वत् षष्ठी। यद्वा—प्राणस्याननन्यान्मन्यमानः। एवं तत्पुरुषपक्षे अव्ययपूर्वपदप्रकृतिस्वरत्वं प्राप्नोति, तस्माद्बहुव्रीहिर्व्याख्येयः। अन-न्याननन्यरहितान् मद्व्यतिरेकेणान्य एषां नास्तीति मन्यमानः प्राण-

विद्वान्त्समरे न धीर एनंश्चकृवान्म-
हिं बुद्ध एषाम् । तं विश्वकर्मन्न् ॥
३० ॥ प्र मुञ्चा स्वस्तये ये भक्ष-
यन्तो न वसून्यानृहुः । यानग्नयो-

धीरः । एनः । चकृवान् । महि । बुद्धः । एषाम् ।
तम् । विश्वकर्मन्निति विश्व–कर्मन्न् ॥३०॥ प्रेति ।
मुञ्च । स्वस्तये । [11]ये । भक्षयन्तः । न । वसूनि ।
आनृहुः । यान् । अग्नयः । अन्वतप्यन्तेत्यनु–अ-

---

स्यात्मनो बलस्य ज्ञाता समरे न सङ्ग्राम इव धीरः शूरः पुरुषः स यथा पाति तथाऽस्मान् पातु । यद्वा—समरेण धीरो यथा बद्धो भवति तथा एनः पापं चकृवान् कृतवान् पुरुषः एषां भूतेन्द्रियाणां संघट्टने समरस्थानीये महि महत् बद्धो भवति ततो निर्गन्तुं न शक्नोति । तं हे विश्वकर्मन् प्रमुञ्च तेनैनसा मुक्तं कुरु स्वस्तये अविनाशाय । 'द्व्यचोतस्तिङः' इति दीर्घत्वम् ॥

[11]अथ चतुर्थी—'धिष्णियाः' इति द्वितीयपादान्तः । ये वयं भक्षयन्तो न भक्षयन्त इव अदन्त इव वसूनि धनानि आनृहुः पूजितवन्तः न तैरिष्टवन्तः, अपि तु कुक्षिस्थानीयायां पृथिव्यां संचित्य निहितवन्तः । यद्वा—वसूनि भक्षयन्तः यागार्थेन व्ययेन नाशं युञ्जन्तः नानृहुः यागार्थं न संगृहीतवन्तः अर्हा न बभूवुः वसूनाम् । 'अपस्पृधेथाम्' इत्यादौ अर्हैः निपात्यते । यांश्चास्मान् धिष्णिया अग्नयः अन्वतप्यन्त अस्मद्विषये अनुतापं कृतवन्तः अहो शोच्या एते मिथ्याकारिण इति । एवं ये अयष्टारः दुर्यष्टारश्च

न्वतंप्स्यन्तु धिषिणया इयं तेषांमव-
या दुरिंष्ट्यै स्विंष्टिं नुस्तां कृणोतु
विश्वकर्मा । नमंः पितृभ्यों अभि

तंप्यन्त । धिष्णियाः । इयम् । तेषांम् । अवया ।
दुरिंष्ट्या इति दुः–इष्टैय । स्विंष्टिमिति सु–इष्टिम् ।
नः । ताम् । कृणोतु । विश्वकर्मेति विश्व–कर्मा । [12]न-
मंः । पितृभ्य इति पितृ–भ्यः । अभीति । ये ।

---

तेषामस्माकं संभाव्यमानप्रमादानां संबन्धिनी इयमिष्टिर्यागः अव-
या विनाशयित्री । कस्य? दुरिष्ट्यै दुरिष्ट्याः । षष्ठ्यर्थे चतुर्थी ।
उपलक्षणत्वादयागस्य च । अयागनिमित्तस्य दुरिष्टिनिमित्तस्य च
एनसो विनाशायायं यागः क्रियते इति । 'अवे यजः' इति
ण्विन्प्रत्ययः । 'सुपां सुलुक्' इति सोर्डादेशः, उत्तरपदस्यान-
च्त्वान्नोपहन्यते । यथा प्राची प्रतीची । स्विष्टिमिति वक्ष्यमाणत्वा-
दियमितीष्टिरुच्यते इति गम्यते । तामिमामस्माकमिष्टिं अनिष्टि-
दुरिष्टिपरिहाराय कृतां स्विष्टिं शोभनामिष्टिं कृणोतु करोतु
विश्वकर्मा विश्वकृद्देवः । अनिष्टिदुरिष्टिनिवारणसामर्थ्यं शो-
भनत्वमिष्टेः । प्रत्ययान्तविशेषणत्वे सोर्गतित्वाभावादव्ययपूर्वपदप्रकृ-
तिस्वरत्वम्, धात्वर्थविशेषणत्वेऽपि गतित्वात् 'गतिरनन्तरः' इति
गतेः प्रकृतिस्वरत्वम्, 'उदात्तस्वरितयोर्यणः' इति संहितायां
ततः पर इकारस्स्वर्यते ॥

[12]अथ पञ्चमी—नमः पितृभ्यः तेभ्यः ये नोस्मान् अभ्य-
ख्यन् आभिमुख्येन पश्यन्ति । छान्दसो लुङ्, 'अस्यति' इत्या-

ये नो अख्यंन् यज्ञकृतो यज्ञकामा-
स्सुदेवा अंकामा वो दक्षिणां न नी-
निम मा नस्तस्मादेनंसः पापयिष्ट।
यावंन्तो वै संदस्यास्ते सर्वे दाक्षि-

नः । अख्यन्न् । यज्ञकृत इति यज्ञ–कृतः । यज्ञ-
कामा इति यज्ञ–कामाः । सुदेवा इति सु–देवाः।
अकामाः । वः । दक्षिणाम् । न । नीनिम । मा ।
नः । तस्मात् । एनंसः । पापयिष्ट । [13]यावंन्तः । वै ।
सदस्याः । ते । सर्वे । दक्षिण्याः । तेभ्यः । यः ।

---

दिनाऽङ् । यज्ञकृतः यज्ञं कृतवन्तः यज्ञकामाः भूयोपि यज्ञं क-
र्तुमिच्छन्तः । 'शीलिकामि' इत्यादिना णः, पूर्वपदप्रकृतिस्वरत्वं
च । सुदेवाः शोभनदानाः अकामाः इच्छाद्वेषरहिताः । तेभ्यो
नमः । उभयोरपि 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । संप्रति
प्रत्यक्षवदुच्यते—वः युष्मदर्थं दक्षिणां लक्षणया यज्ञ एवोच्यते । यन्न
नीनिम न नीतवन्तः । यद्वा—अकामा वयं प्रमादात् यज्ञं
कृतवन्तः । तस्मादयागनिमित्तादेनसः पापात् नोस्मान्पापयिष्ट मा
पापान् कर्तुमिच्छत । 'छन्दसि परेच्छायामपि' इति क्यच्,
'न छन्दस्यपुत्रस्य' इतीत्वाभावः, तदन्तात् लुङ् । नयतेर्लिटि
द्विर्वचने धात्वभ्यासयोर्विपर्ययः ॥

[13]अथ वैश्वकर्मब्राह्मणम्—यावन्त इत्यादि ॥ गतम् । दक्षि-
ण्याः दक्षिणार्हाः । 'कडंकरदक्षिणाच्छ च' इति यत् ॥

ण्यास्तेभ्यो यो दाक्षिणां न ॥ ३१ ॥
नयेदेभ्यो वृश्च्येत यद्वैश्वकर्मणानि
जुहोति सदस्यानेव तत्प्रीणात्यस्मे
देवासो वपुषे चिकित्सत यमाशिरा
दम्पती वाममश्नुतः । पुमान्पुत्रो

दक्षिणाम् । न ॥ ३१ ॥ नयेत् । एति । एभ्यः । वृश्चेत । यत् । वैश्वकर्मणानीति वैश्व-कर्मणानि । जुहोति । सदस्यान् । एव । तत् । प्रीणाति । [14]अस्मे इति । देवासः । वपुषे । चिकित्सत । यम् । आशिरा । दम्पती इति । वामम् । अश्नुतः । पुमान् । पुत्रः । जायते । विन्दते । वसु । अथ ।

[14]आशीरवनयति—अस्मे इति चतसृभिः ॥ अत्र द्वे जगत्यौ द्वे त्रिष्टुभौ । तत्र प्रथमा—'वसु' इति तृतीयपादान्तः ॥ हे देवासः देवाः । 'आज्जसेरसुक्' । वपुषे शोभनाय रूपाय अस्मे अस्मान् चिकित्सत निर्दोषान् कुरुत । 'गुप्तिज्किद्भ्यस्सन्' व्यत्ययेव परस्मैपदम् । कीदृशायेत्याह—यमिति । लिङ्गव्यत्ययः । वामं कमनीयं कल्याणं आशिरा अवनीयमानया दम्पती जाया-पती पत्नीयजमानौ । दासीभारादिः । अश्नुतः । व्यत्ययेन पर-स्मैपदम् । तादृशाय वपुषे अस्मान् चिकित्सत अस्माकं वपुषे चिकित्सया गुणोत्कर्षं कुरुत । कीदृशं यत् वामं वननीयं आ-शिरा दम्पती अश्नुत इति । घोळा नाम* दधिविशेषः आशीः

*अ—मादो नाम.

जायते विन्दते वस्वथ विश्वे अरपा
एधते गृहः । आशीर्दाया दम्पती
वाममश्नुतामरिष्टो रायस्सचताꣳ स-

विश्वे। अरपाः । एधते ।गृहः।[15]आशीर्दायेत्याशीः
—दाया । दम्पती इति । वामम् । अश्नुताम् । अ-
रिष्टः । रायः । सचताम् । समोकसेति सं—ओक-

---

दोहनपात्रस्थमेव घनीभवति । न शीर्यत इत्याशीः 'अपस्पृधेथाम्' इत्यादौ निपात्यते । किं च—युष्मच्चिकित्सया अस्माकं पुमान् पुत्रो जायते जायताम् । द्वयोरुपादानं प्रशंसार्थम् । वसु चास्मान्विन्दते विन्दतां प्राप्नोतु । अथ अनन्तरं विश्वे । व्यत्ययेन बहुवचनम् । विश्वोपि गृहः गृहवासी जनः अरपाः अपापः एधते वर्धताम् । यद्वा—अथशब्दो यथेत्यस्यार्थे । यथा चिकित्सिते दम्पती वाममश्नुतः, पुमान्पुत्रो जायते, वसु च विन्दते, गृहजनश्चापाप एधते तथा चिकित्सतेति ॥

[15]अथ द्वितीया—आशीर्दायेति ॥ 'सह' इति तृतीयपादान्तः । आशीर्दाया आशिरं दत्त इत्याशीर्दाया दम्पती पत्नीयजमानौ वामं कल्याणं अश्नुताम् । दय दानगतिरक्षणेषु; 'कर्मण्यण्', 'सुपां सुलुक्' इत्याकारः । दधातेरेव वा विजन्तात्तेनैव सूत्रेण याजादेशः । दानं चावनयनमेव। यज्ञो वा आशिरा लक्ष्यते । किं च—अरिष्टः अहिंसितः रायो धनम् । रातेर्घञ्, रायः । बहुवचनं, व्यत्ययो वा । सचतां दम्पती समोकसा एकगृहौ अवियुक्तौ । किं च—योयं यजमान आ-

मौकसा । य आऽसिंचत्संदुग्धं कुम्भ्या सहेष्टेन यामन्नमतिं जहातु सः । सर्पिर्ग्रीवी ॥ ३२ ॥ पीवर्यस्य जाया पीवानः पुत्रा अकृशासो अस्य । सहजानिर्यस्सुमखस्यमान

सा । यः । एति । असिंचत् । संदुग्धमिति सं-दुग्धम् । कुम्भ्या । सह । इष्टेन । यामन्न् । अमतिम् । जहातु । सः । [16]सर्पिर्ग्रीवीति सर्पिः-ग्रीवी ॥३२॥ पीवरी । अस्य । जाया । पीवानः । पुत्राः । अकृशासः । अस्य । सहजानिरिति सह-जानिः । यः । सुमखस्यमान इति सु-मखस्यमानः । इन्द्राय ।

---

सिचत् आसिक्तवान् संदुग्धं एकत्र सहितं दुग्धं आशीराख्यम् । पूर्ववद्गतिस्वरः । कुम्भ्या आसिञ्चत् प्रभूतमित्यर्थः । सहेष्टेन संपद्यमानेन यागेन सहासिचत् । क्व यामन् यामनि सारभूते सोमे य आसिचत् । 'लिपि सिचि ह्वश्च' इत्यङ् । सः अमतिं शरीरमरोगम् । अमेरतिप्रत्ययः, मतिविपर्यासो वा अमतिः, तां जहातु त्यजतु अरोगशरीरो यागकृतबुद्धिर्वा भवत्वित्यर्थः॥

[16]अथ तृतीया—सर्पिर्ग्रीवीति ॥ अस्य यजमानस्य सर्पिर्ग्रीवी स्निग्धकण्ठी मृष्टभोजना वा जाया भवति । 'स्वाङ्गाच्चोपसर्जनात्' इति ङीप् । पीवरी प्यायनशीला अकृपणाङ्गी । प्या-

इन्द्रायाशिरꣳ सह कुम्भ्याऽदात् ।
आशीर्म ऊर्जमुत सुप्रजास्त्वमिषं
दधातु द्रविणꣳ सवर्चसम् । संजय-
न्क्षेत्राणि सहसाऽहमिन्द्र कृण्वानो

आशिरम् । सह । कुम्भ्या । अदात् । [17]आशीरि-
त्या-शीः । मे । ऊर्जम् । उत । सुप्रजास्त्वमिति
सुप्रजाः-त्वम् । इषम् । दधातु । द्रविणम् । सव-
र्चसमिति स-वर्चसम् । संजयन्निति सं-जयन् ।
क्षेत्राणि । सहसा । अहम् । इन्द्र । कृण्वानः । अ-

---

यतेः 'अन्येभ्योपि दृश्यते' इति क्वनिप्, 'प्यायः पी' इति पीभावः, 'वनो र च' इति ङीब्रेफौ । पुत्राश्च पीवानः प्यायनशीलाः पुष्टाङ्गाः अकृशासः विद्याधनादिभिरकृशाः अस्य भवन्ति । 'आज्जसेरसुक्' । कस्येत्याह—यो यजमानः सहजानिः सभार्यः । जायाया निङादेशः । सुमखस्यमानः शोभनं यज्ञं आत्मन इच्छन् । असुगागमश्छान्दसः, व्यत्ययेनात्मनेपदम्, भृशादिर्वा द्रष्टव्यः । सुमखो भवतीति क्यङ् । इन्द्रायाशिरं कुम्भ्या सहादात् प्रभूतं ददाति दास्यति । छान्दसो लुङ्, 'गातिस्था' इति सिचो लुक् ॥

[17]अथ चतुर्थी—आशीरिति ॥ आशीरियमवनीयमाना मे ममोर्जं क्षीरादि उत अपि च सुप्रजास्त्वं शोभनापत्यत्वम् । 'नित्यमसिच्प्रजामेधयोः' इत्यसिच्, छान्दसं दीर्घत्वम् । इषमन्नं ददा-

अन्यांश्च अधरान्त्सपत्नान् । भूतमंसि भूते मा धा मुखंमसि मुखं भूयासं द्यावांपृथिवीभ्यां त्वा परिं गृह्णामि विश्वें त्वा देवा वैश्वानराः

न्यान् । अधरान् । सपत्नान् । [18]भूतम् । असि । भूते । मा । धाः । मुखम् । असि । मुखम् । भूयासम् । [19]द्यावांपृथिवीभ्यामिति द्यावां–पृथिवीभ्याम् । त्वा । परीति । गृह्णामि । [20]विश्वें । त्वा ।

---

तु द्रविणं धनं च ददातु सुवर्चसं बलसहितं दीप्तिसहितं वा । लिङ्गव्यत्ययश्छान्दसः । इषो वा विशेषणम्—यथाऽहं संजयन् सहसा बलेन क्षेत्राणि शत्रुसंबन्धीन्यन्यान् सपत्नान् शत्रूनधरान् अधरीभूतान् आज्ञाविधेयान् कृण्वानः कुर्वाणः स्यां तथा मे ऊर्जादि ददात्विति । पदकारमते आशीरिति प्रार्थनापदम् । इयं........प्रार्थना दद्याशिर [मह्यमाशिर] उर्जादि ददात्विति ॥

[18]पश्यति—भूतमिति ॥ भूतं सर्वदा न जातं जन्यं त्वमसि । भूते सर्वदा यद्भूतं न जायते न च जनिष्यते तत्र परस्मिन् नित्ये वस्तुनि मा धाः स्थापय । किंच मुखं प्रधानं त्वमसि । तादृशेन त्वया अहं मुखं प्रधानभूतः सर्वेषां भूयासम् ॥

[19]परिगृह्णाति—द्यावापृथिवीभ्यां त्वा परिगृह्णामि, नाहमेव । 'देवताद्वन्द्वे च' इति द्यावापृथिवीशब्द आद्युदात्तः ॥

[20]प्रच्यावयति—विश्वे इति ॥ विश्वे देवाः इन्द्रादयः वैश्वानराः

॥ ३३ ॥ प्र च्यावयन्तु दिवि देवा-
न्दृꣳहान्तरिक्षे वयाꣳसि पृथिव्यां
पार्थिवान्ध्रुवं ध्रुवेणं हविषाऽव सोमं
नयामसि । यथा नस्सर्वमिज्जगंदय-

देवाः । वैश्वानराः ॥ ३३ ॥ प्रेति । च्यावयन्तु ।
दिवि । देवान् । दृꣳह । अन्तरिक्षे । वयाꣳसि ।
पृथिव्याम् । पार्थिवान् । [21]ध्रुवम् । ध्रुवेणं । हविषा ।
अवेति । सोमम् । नयामसि । यथा । नः । सर्वम् ।
इत् । जगत् । अयक्ष्मम् । सुमना इति सु-मनाः ।

---

विश्वेषां नराणां हितत्वेन संबन्धिनोऽग्निरूपाश्च प्रच्यावयन्त्वस्मात् स्थानात् न वयं शक्ताः। प्रच्याव्यमानश्च त्वं दिवि देवान् दृंह दृढान् कुरु, अन्तरिक्षे वयांसि पक्षिणो दृंह; पृथिव्यां च पार्थिवान् पृथिव्यां भवान् पर्वतपादपादीन् दृंह । 'पृथिव्या ञ्जाऔ' इति ञः ॥

[21]होतृचमसेऽवनयति—ध्रुवमिति । इयमत्यष्टिरष्टपदा । अष्टाक्षरास्सर्वे पादाः, षष्ठस्तु द्वादशाक्षरः ॥ ध्रुवं नित्यं अविचलितं असि सोमं होतृचमसस्थं त्वया ध्रुवेण नित्येन हविषा अवनयामसि अवनयामः अधस्तान्नयामः । तस्योपरि त्वां सिञ्चामः । 'इदन्तो मसि' । किमर्थं? यथा नः अस्माकं सर्वमित् सर्वमेव जगत् जङ्गमं गवादि अयक्ष्मं अरोगं सुमनस्कं च असत् । छान्दसो लिङ्गव्यत्ययः, अस्तेर्लेट्यडागमः । यथा चास्माकं सर्वा विशः प्रजाः

क्षमः सुमना असंत् । यथा न इन्द्र इद्विशः केवलीस्सर्वास्समंनसः करंत् । यथा नस्सर्वा इद्दिशोस्माकं केवलीरसन्न् ॥ ३४ ॥

असंत् । यथा । नः । इन्द्रः । इत् । विशः । केवलीः । सर्वाः । समंनस इति स–मनसः । करंत् । यथा । नः । सर्वाः । इत् । दिशः । अस्माकम् । केवलीः । असन्न् ॥ ३४ ॥

एनसा विश्वकर्मन् यो दक्षिणां न सर्पिर्ग्रीवी वैश्वानराश्चत्वारिंशच्च ॥ ८ ॥

---

सर्वा अपि केवलीः रोगादिरहिताः समनसः अनाकुलमनसश्च इन्द्र इत् इन्द्र एव करत् कुर्यात् । करोतेर्लेटि शपो लुक्, पूर्ववदडागमः । 'कः करत्करति' इति सत्वम् । 'केवलमामक' इति केवलशब्दात् ङीप् । यथा चास्माकं सर्वा एव दिशः दिक्षु स्थिताः नोस्माकं प्रजाः केवलीः केवल्यः । पूर्ववत्पूर्वसवर्णदीर्घत्वम् । अस्माकमेव स्वभूताः नान्यगामिन्यः भवन्ति तथा अवनयामीति । अस्तेर्लेटि व्यत्ययेन शप्; लुकि हि आद्युदात्तत्वं न स्यात् ॥

इति तृतीये द्वितीये अष्टमोनुवाकः.

---

यद्वै होताऽध्वर्युमभ्याह्वयते वज्रमे-
नमभि प्र वर्तयत्युक्थशा इत्याह
प्रातस्सवनं प्रतिगीर्य त्रीण्येतान्यक्ष-
राणि त्रिपदा गायत्री गायत्रं प्रात-
स्सवनं गायत्रियैव प्रातस्सवने व-

[1]यत् । वै । होता । अध्वर्युम् । अभ्याह्वयत इत्यभि-आह्वयते । वज्रम् । एनम् । अभि । प्रेति । वर्तयति । उक्थशा इत्युक्थ-शाः । इति । आह । प्रातस्सवनमिति प्रातः-सवनम् । प्रतिगीर्येति प्रति-गीर्य । त्रीणि । एतानि । अक्षराणि । त्रिपदेति त्रि-पदा । गायत्री । गायत्रम् । प्रातस्सवनमिति प्रातः-सवनम् । गायत्रिया । एव । प्रातस्सवन इति प्रातः-सवने । वज्रम् । अन्तः । ध-

[1]यद्वै होतेत्यादि ॥ अध्वर्युमाभिमुख्येन यदाह्वयते आह्वानं प्रयुङ्क्ते 'शोंसावोम्' इति होता, तेनायमध्वर्युमभि वज्रं प्रवर्तयति । तत्परिहारं सवनत्रयेऽपि क्रमेणाह—उक्थशा इत्यादि । प्रातस्सवनं प्रातस्सवनविषयं उक्थं प्रातस्सवनं च प्रतिगीर्य उक्थशा इत्याहाध्वर्युः । उक्थानि शंसति उक्थैर्वा शंसतीत्युक्थशाः अयमभूदिति । 'मन्त्रे श्वेतवहोक्थशास्' इत्यादिना ण्विन् । शंसितुः प्रोत्साहनं प्रतिगरः । कथं पुनरेतेन उक्तदोषः परिह्रियते इत्याह—

ज्रमन्तर्धत्त उक्थं वाचीत्याह मा-
ध्यंन्दिनꣳ सवनं प्रतिगीर्यं चत्वार्ये-
तान्यक्षराणि चतुष्पदा त्रिष्टुप्त्रैष्टुभं
माध्यंन्दिनꣳ सवनं त्रिष्टुभैव माध्यं-
न्दिने सवने वज्रमन्तर्धत्ते ॥ ३५ ॥
उक्थं वाचीन्द्रायेत्याह तृतीयसवनं

त्ते । [2]उक्थम् । वाचि । इति । आह । माध्यंन्दिनम् । सवनम् । प्रतिगीर्येति प्रति-गीर्य । चत्वारि । एतानि । अक्षराणि । चतुष्पदेति चतुः-पदा । त्रिष्टुप् । त्रैष्टुभम् । माध्यंन्दिनम् । सवनम् । त्रिष्टुभा । एव । माध्यंन्दिने । सवने । वज्रम् । अन्तः । धत्ते ॥ ३५ ॥ [3]उक्थम् । वाचि । इन्द्राय । इति ।

---

त्रीण्येतानीत्यादि । अनेन गायत्रात्मना त्र्यक्षरेणोच्चारितेन गायत्रे प्रातस्सवने आत्मानमभि प्रवर्तितं वज्रमन्तर्धत्ते अन्तर्हितं करोति निवारयतीत्यर्थः ॥

[2]उक्थं वाचीति ॥ अनेन चतुरक्षरेण त्रिष्टुभात्मना माध्यन्दिने सवने आत्मानमभि प्रवर्तितं वज्रमन्तर्धत्ते । उक्थं शास्त्रं सम्यक्प्रवृत्तं अस्य वाचीति । त्रिष्टुप्छब्दादुत्सादित्वादञ् । 'सावेकाचः' इति वाचो विभक्तिरुदात्ता ॥

[3]उक्थं वाचीन्द्रायेत्यादि ॥ अनेन सप्ताक्षरेण शक्वर्यात्मना

प्रतिगीर्यं सप्तैतान्यक्षराणि सप्तपदा
शक्वरी शाक्वरो वज्रो वज्रेणैव तृती-
यसवने वज्रमन्तर्धत्ते ब्रह्मवादिनो
वदन्ति स त्वा अध्वर्युस्स्याद्यो य-
थासवनं प्रतिगरे छन्दाꣳसि संपा-

आह । तृतीयसवनमिति तृतीय–सवनम् । प्रति-गीर्येति प्रति–गीर्य । सप्त । एतानि । अक्षराणि । सप्तपदेति सप्त–पदा । शक्वरी । शाक्वरः । वज्रः । वज्रेण । एव । तृतीयसवन इति तृतीय–सवने । वज्रम् । अन्तः । धत्ते । [4]ब्रह्मवादिन इति ब्रह्म–वादिनः । वदन्ति । सः । तु । वै । अध्वर्युः । स्यात् । यः । यथासवनमिति यथा–सवनम् । प्रतिगर इति प्रति–गरे । छन्दाꣳसि । संपादयेदि-

---

वज्रभूतेन तृतीयसवने यथोक्तं वज्रमन्तर्धत्ते उक्थं सम्यक्प्रवृत्त-मिन्द्रार्थमस्य वाचीति । अत्र सवर्णदीर्घत्वं न कर्तव्यं सप्ताक्ष-रत्वायेत्याहुः ॥

[4]ब्रह्मवादिन इत्यादि ॥ यथासवनं सवनानुरूपं प्रातस्सवने गायत्रीं माध्यन्दिनसवने त्रिष्टुभं तृतीयसवने जगतीमिति प्रतिगरे विविक्तरूपाणि छन्दांसि योध्वर्युः संपादयेत्, यो वा तेजः प्रातस्स-वने आत्मन् दधीत आत्मनि तेजो दधीत माध्यन्दिने इन्द्रिय-

दयेत्तेजः प्रातस्सवन आत्मन्दधीते-
न्द्रियं माध्यंन्दिने सवंने पशूꣳस्तृ-
तीयसवन इत्युक्थंशा इत्याह प्रात-
स्सवनं प्रतिगीर्य त्रीण्येतान्यक्षरा-
णि ॥ ३६ ॥ त्रिपदा गायत्री गाय-

त्रं सं-पादयेत् । तेजः । प्रातस्सवन इति प्रातः-
सवने । आत्मन्न् । दधीत । इन्द्रियम् । माध्यंन्दि-
ने । सवंने । पशून् । तृतीयसवन इति तृतीय-
सवने । इति । [5]उक्थंशा इत्युक्थ-शाः । इति ।
आह । प्रातस्सवनमिति प्रातः-सवनम् । प्रतिगी-
र्येति प्रति-गीर्य । त्रीणि । एतानि । अक्षराणि ॥
३६ ॥ त्रिपदेति त्रि-पदा । गायत्री । गायत्रम् ।

---

मात्मनि दधीत तृतीयसवने पशूनात्मनि दधीत धारयितुं शक्नु-
यात् सोध्वर्युस्स्यात् भवितुमर्हतीति ब्रह्मवादिन आहुः ॥

[5]उक्थशा इत्यादि ॥ प्रातस्सवनस्य गायत्रत्वात् गायत्र्यास्सवना-
नुकूलत्वमिति । छन्दांसीति सवनत्रयापेक्षं बहुवचनम् । प्रातस्स-
वने गायत्रीसंपादनेन यथासवनं छन्दांसि संपादयति एतत्सं-
पादयतीति । वचनव्यत्ययोपि । प्रातस्सवने गायत्री छन्दस्संपाद-
यतीति । अथो अपि च तेजोरूपे प्रातस्सवने आत्मनि तेजो
धत्ते उक्थशा इति तेजोरूपगायत्र्यात्मकत्र्यक्षरोच्चारणात् ॥

त्रं प्रातस्सवनं प्रातस्सवन एव प्रं-
तिगरे छन्दाꣳसि सं पादयत्यथो
तेजो वै गायत्री तेजः प्रातस्सवनं
तेज एव प्रातस्सवन आत्मन्धंत्त
उक्थं वाचीत्याह माध्यंन्दिनꣳ स-
वंनं प्रतिगीर्यं चत्वार्येतान्यक्षराणि
चतुंष्पदा त्रिष्टुप्त्रैष्टुंभं माध्यंन्दिनꣳ

प्रातस्सवनमिति प्रातः-सवनम्। प्रातस्सवन इति प्रातः-सवने । एव । प्रतिगर इति प्रति-गरे । छन्दाꣳसि । समिति । पादयति । अथो इति । तेजः । वै । गायत्री । तेजः । प्रातस्सवनमिति प्रातः-सवनम् । तेजः । एव । प्रातस्सवन इति प्रातः-सवने । आत्मन्न् । धत्ते । [6]उक्थम् । वाचि। इति । आह । माध्यंन्दिनम् । सवंनम् । प्रतिगीर्येति प्रति-गीर्यं । चत्वारि । एतानि । अक्षराणि । चतुंष्पदेति चतुः-पदा । त्रिष्टुप् । त्रैष्टुंभम् । मा-

---

[6]एवं माध्यन्दिने सवने त्रिष्टुभस्सवनानुरूप्यं, इन्द्रियरूपत्रिष्टुभात्मकचतुरक्षरोच्चारणादिन्द्रियमात्मनि धत्ते ॥

सवनं माध्यंन्दिन एव सवने प्रतिगरे छन्दाꣳसि सं पादयत्यथो इन्द्रियं वै त्रिष्टुगिन्द्रियं माध्यंन्दिनꣳ सवनम् ॥ ३७ ॥ इन्द्रियमेव माध्यंन्दिने सवन आत्मन्धत्त उक्थं वाचीन्द्रायेत्याह तृतीयसवनं प्रतिगीर्यं सप्तैतान्यक्षराणि सप्तपदा शक्करी

ध्यंन्दिनम् । सवनम् । माध्यंन्दिने । एव । सवने। प्रतिगर इति प्रति–गरे । छन्दाꣳसि । समिति । पादयति । अथो इति । इन्द्रियम् । वै । त्रिष्टुक् । इन्द्रियम् । माध्यंन्दिनम् । सवनम् ॥ ३७ ॥ इन्द्रियम् । एव । माध्यंन्दिने । सवने । आत्मन्न् । धत्ते। [7]उक्थम् । वाचि । इन्द्राय । इति । आह । तृतीयसवनमिति तृतीय–सवनम् । प्रतिगीर्येति प्रति–गीर्यं । सप्त । एतानि । अक्षराणि । सप्तपदेति सप्त–पदा । शक्करी । शाक्कराः । पशवः । जागतम् ।

---

[7]तृतीयसवने जागतशक्कर्योस्सवनानुरूप्यं, जगतीशक्कर्योः पशुसाधनत्वात्पश्वात्मके तृतीयसवने पशुरूपशक्कर्यात्मकसप्ताक्षरोच्चारणात् पशूनात्मनि धत्ते ॥

शाक्कराः पशवो जागतं तृतीयसवनं
तृतीयसवन एव प्रतिगरे छन्दाꣳसि
सं पादयत्यथो पशवो वै जगती
पशवस्तृतीयसवनं पशूनेव तृतीय-
सवन आत्मन्धत्ते यद्वै होताऽध्वर्यु-
मभ्याह्वयत आव्यमस्मिन्दधाति त-

तृतीयसवनमिति तृतीय-सवनम् । तृतीयसवन इति तृतीय-सवने । एव । प्रतिगर इति प्रति-गरे । छन्दाꣳसि । समिति । पादयति । अथो इति । पशवः । वै । जगती । पशवः । तृतीयसवनमिति तृतीय-सवनम् । पशून् । एव । तृतीयसवन इति तृतीय-सवने । आत्मन् । धत्ते । [8]यत् । वै । होता । अध्वर्युम् । अभ्याह्वयत इत्यभि-आह्वयते । आव्यम् । अस्मिन् । दधाति ।

---

[8]दोषान्तरमप्याह—यद्वा इत्यादि ॥ आव्यं रोगविशेषः, समन्तात्पीड्यते येन तदाव्यम् । आङ्पूर्वाद्वीतेः 'अचो यत्' इति यति 'यचिवर्णयोः' इति लोपः, द्वितीयस्वरलोपश्छान्दसः । तदस्मिन्नध्वर्योरभ्याह्वानेन होता दधाति उत्पादयति । तदध्वर्युः यदि नापहनीत नापहन्यात् । व्यत्ययेनात्मनेपदम् । संवत्सरसमाप्तेः पुरा अस्याध्वर्योर्गृहे प्रजा आवेवीरन् सर्वतो रोगादिभिः पीड्येरन् ।

घ्नन्न ॥ ३८ ॥ अपहनीत पुराऽस्यं संवत्सराद्गृह आ वेवीरञ्छोꣳसा मोदं इवेति प्रत्याह्वयते तेनैव तदपं हते यथा वा आयंतां प्रतीक्षंत एवमध्वर्युः प्रतिगरं प्रतीक्षते यदाभिप्रति-

तत् । यत् । न ॥ ३८ ॥ अपहनीतेत्यंप-हनीत । पुरा । अस्य । संवत्सरादितिं सं-वत्सरात् । गृहे । एतिं । वेवीरन्न् । शोꣳसां । मोदंः । इव । इतिं । प्रत्याह्वयत इतिं प्रति-आह्वयते । तेन । एव । तत् । अपेतिं । हते । यथां । वै । आयंतामित्या-यताम् । प्रतीक्षंत इतिं प्रति-ईक्षंते । एवम् । अध्वर्युः । प्रतिगरमितिं प्रति-गरम् । प्रतीतिं । ईक्षते । यत् ।

---

वेवीङ् वेतिना तुल्ये । तत्परिहारार्थं अभ्याहूतोध्वर्युः शोंसा मोद इव शंस बाढं भो होतः मोद इव अस्माकं, मोदामह एव वयमिति प्रत्याह्वयते अभ्याह्वयमानं होतारं प्रत्याह्वस्थानीयं प्रतिगरमिममुच्चारयेत्, तेन तदाव्यमपहत्येव । शोंसावोमिति द्वावोकाराकारौ । 'प्रतिगरोध्वर्यूणाम्' इति उद्गीथत्वं प्रतिगरस्य । यथेत्यादि । यथा लोके आयतां आभिमुख्येन नियतां वाचं स्थाने वक्तुं प्रतीक्षते, एवमध्वर्युरपि प्रतिगरं प्रतीक्षेत न सहसा प्रतिगरितव्यम्, अपि तु होत्राभ्याहूतः अध्वर्यो इति प्रतिगृणीयात्, न पूर्वमित्यर्थः । न चाभिप्रति-

गृणीयाद्यथाऽऽयतया समृच्छते ता-
दृगेव तद्यदर्धर्चाल्लुप्येत यथा धाव-
द्भ्यो हीयते तादृगेव तत्प्रबाहुग्वा
ऋत्विजामुद्गीथा उद्गीथ एवोद्गातॄ-
णाम् ॥ ३९ ॥ ऋचः प्रणव उक्थ-

अभिप्रतिगृणीयादित्यभि–प्रतिगृणीयात् । यथा ।
आयतयेत्या–यतया । समृच्छत इति सं–ऋच्छते ।
तादृक् । एव । तत् । यत् । अर्धर्चादित्यर्ध–ऋ-
चात् । लुप्येत । यथा । धावद्भ्य इति धावत्–भ्यः ।
हीयते । तादृक् । एव । तत् । प्रबाहुगिति प्र–
बाहुक् । वै । ऋत्विजाम् । उद्गीथा इत्युत्–गीथाः ।
उद्गीथ इत्युत्–गीथः । एव । उद्गातॄणामित्युत्–
गातॄणाम् ॥ ३९ ॥ ऋचः । प्रणव इति प्र–नवः ।

---

गृणीयादर्धर्चान्तमतिक्रम्य उपरिगत्वा न प्रतिगृणीयात् । यद्यभिप्र-
तिगृणीयात् यथा लोके आयतया अस्थाने समृच्छते संगच्छते । पीड्यते
इति केचित् । तादृगेव तदभिप्रतिगरणम् । तस्मान्नाभिप्रतिगृणीयात् ।
न चार्धर्चाल्लुप्येतेत्याह—यदर्धर्चाल्लुप्येतेति । यद्यर्धर्चाल्लुप्येताभिप्र-
तिगरः यथा धावद्भ्यः एकः धिया हीयते सामर्थ्याद्भ्रष्टो
भवति तथाऽर्धर्चात्प्रतिगरं लुम्पन्तं शंसन् सामर्थ्याद्धीयते
तस्मादर्धर्चयोः प्रतिगृणीयादिति । ऋचोर्धमर्धर्चं, 'अर्धं नपुंसकम्'

शꣳसिनां प्रतिगरोऽध्वर्यूणां य एवं विद्वान्प्रतिगृणात्यन्नाद एव भवत्याऽस्य प्रजायां वाजी जायत इयं वै होताऽसावध्वर्युर्यदासीनश्शꣳसंत्य-

उक्थशꣳसिनामित्युक्थ–शꣳसिनाम् । प्रतिगर इति प्रति–गरः । अध्वर्यूणाम् । यः । एवम् । विद्वान् । प्रतिगृणातीति प्रति–गृणाति । अन्नाद इत्यन्न–अदः । एव । भवति । एति । अस्य । प्रजायामिति प्र–जायाम् । वाजी । जायते । [१]इयम् । वै । होता । असौ । अध्वर्युः । यत् । आसीनः । शꣳ-

---

इति समासः, 'ऋक्पूरब्धूः' इति समासान्तः । तत्र 'शोंसावोम्' इति यत्राह अतोर्धर्चो भवति तत्र 'शोंसा मोद इव' इति प्रत्याहवः प्रतिगरः क्रियते, अन्यत्रार्धर्चे 'ओथा मोद इव' इति शाखान्तरे प्रसिद्धं प्रतिगृणीयादिति । प्रबाहुग्वा इत्यादि । प्रबाहुक्समित्यर्थः । सर्वेषामृत्विजामप्युद्गीथाः उद्गानानि समानीत्यर्थः । तत्रोद्गातॄणां उद्गीथः प्रसिद्धः एव । उक्थशंसिनां होतॄणामृचोन्ते यः प्रणवस्स उद्गीथः । अध्वर्यूणां तु प्रतिगरः उद्गीथः। य एवमित्यादि । गतम् । वाजी अन्नवान् जायते ॥

[१]इयं वा इत्यादि ॥ आसित्वा शंसनादधोभावादियं पृथिवी होता, स्थित्वा प्रतिगरणादुपरिभावादसौ द्यौरध्वर्युः । एतदेव प्रतिपादयति—यदित्यादि । गतम् । अस्या नैति न पृथग्भवति

स्या एव तद्धोता नैत्यास्त इव हीयमथो इमामेव तेन यजमानो दुहे यत्तिष्ठन्प्रतिगृणात्यमुष्या एव तदध्वर्युर्नैति ॥ ४० ॥ तिष्ठतीव ह्यसावथो अमूमेव तेन यजमानो दुहे यदासीनश्शꣳसति तस्मादितःप्रं-

सति । अस्याः । एव । तत् । होता । न । एति । आस्ते । इव । हि । इयम् । अथो इति । इमाम् । एव । तेन । यजमानः । दुहे । यत् । तिष्ठन् । प्रतिगृणातीति प्रति-गृणाति । अमुष्याः । एव । तत् । अध्वर्युः । न । एति ॥ ४० ॥ तिष्ठति । इव । हि । असौ । अथो इति । अमूम् । एव । तेन । यजमानः । दुहे । [10]यत् । आसीनः । शꣳसति । तस्मात् । इतःप्रदानमितीतः-प्रदानम् । देवाः ।

---

पृथिव्येव भवति । तदपि कुत इत्याह—आस्त इव हीयं पृथिवी अथो अपि च तेनानेन होत्रा आसीनां पृथिवीं दुहे दुग्धे यजमानः । यत्तिष्ठन्नित्यादि समानं पूर्वेण । 'लोपस्त आत्मनेपदेषु' इति तलोपः । एवमाभ्यां द्यावापृथिव्यौ दुग्धे यजमानः ॥

[10]यदासीन इत्यादि ॥ इतःप्रदानं अनया पृथिव्या प्रदत्तं हविरादि देवा उपजीवन्ति । अमुतःप्रदानं अमुना द्युलोकेन

दानं देवा उपं जीवन्ति यत्तिष्ठन्प्रति-
गृणाति तस्मांदमुतःप्रदानं मनुष्यां
उपं जीवन्ति यत्प्राङासीनश्शꣳ-
संति प्रत्यङ्तिष्ठन्प्रतिगृणाति तस्मां-
त्प्राचीनꣳ रेतों धीयते प्रतीचीः प्र-
जा जायन्ते यद्वै होताऽध्वर्युमंभ्या-

उपेति । जीवन्ति । यत् । तिष्ठन्न् । प्रतिगृणातीति प्रति—गृणाति । तस्मात् । अमुतःप्रदानमित्यमुतः—प्रदानम् । मनुष्याः । उपेति । जीवन्ति । यत् । प्राङ् । आसीनः । शꣳसंति । प्रत्यङ् । तिष्ठन्न् । प्रतिगृणातीति प्रति—गृणाति । तस्मात् । प्राचीनम् । रेतः । धीयते । प्रतीचीः । प्रजा इति प्र—जाः । जायन्ते । [11]यत् । वै । होता । अध्वर्युम् ।

प्रदत्तं वृष्ट्यादिकं मनुष्या उपजीवन्ति । सार्वविभक्तिकस्तसिः, अव्ययपूर्वपदप्रकृतिस्वरत्वम् । इतः प्रदानं यस्येति वा बहुव्रीहिः । यत्प्राङित्यादि । प्राचीनं प्रकृष्टगमनं क्षेत्राधीनं* रेतो धीयते निपातितं तत्रास्ते । 'विभाषाञ्चेरदिक्स्त्रियाम्' इति खः । प्रतीचीः प्रतिकूलगतिकाः प्रजाः ज्ञात्वा उत्तिष्ठन्ति । 'चौ' इति पूर्वपदस्यान्तोदात्तत्वम्, दीर्घत्वं च ॥

[11]दोषान्तरं दर्शयितुं तृतीयं पठति—यद्वा इति ॥ पराङ्

* अ—क्षेत्रादिकं.

ह्वयंते वज्रमेनमभि प्र वर्तयति प-
राङा वर्तते वज्रमेव तन्नि क-
रोति ॥ ४१ ॥
उपयामगृहीतोसि वाक्षसदसि वा-

अभ्याह्वयंत इत्यंभि—आह्वयंते । वज्रम् । एनम् ।
अभि । प्रेति । वर्तयति । पराङ् । एति । वर्तते ।
वज्रम् । एव । तत् । नीति । करोति ॥ ४१ ॥

सवने वज्रमन्तर्धत्ते त्रीण्येतान्यक्षराणीन्द्रि-
यं माध्यंन्दिनꣳ सवनं नोद्गातॄणामंध्वर्युर्नै-
ति वर्तयत्यष्टौ च ॥ ९ ॥

[1]उपयामगृहीत इत्युंपयाम—गृहीतः । असि ।
वाक्षसदिति वाक्ष—सत् । असि । वाक्पाभ्यामिति

पराचीनगतिः आवर्तते यत आगतस्ततो गच्छति, तेन वज्रं नि-
करोति न्यक्करोति । 'अनिगन्तोञ्चतौ' इति गतेः प्रकृतिस्वरत्वम् ॥

इति तृतीये द्वितीये नवमोनुवाकः.

---

[1]द्विदेवत्यानां प्रतिनिर्ग्राह्यग्रहणमन्त्राः क्रमेण । ऐन्द्रवायवस्य
—उपयामगृहीत इति ॥ 'इयं वा उपयामः'* इत्युक्तं, तयैव

*सं. ६-५-८.

क्पाभ्यां त्वा क्रतुपाभ्यामस्य य-
ज्ञस्य ध्रुवस्याध्यक्षाभ्यां गृह्णाम्युप-
यामगृहीतोस्यृतसदसि चक्षुष्पाभ्यां
त्वा क्रतुपाभ्यामस्य यज्ञस्य ध्रुव-

वाक्-पाभ्याम् । त्वा । क्रतुपाभ्यामिति क्रतु-पाभ्याम् । अस्य । यज्ञस्य । ध्रुवस्य । अध्यक्षाभ्यामित्यधि-अक्षाभ्याम् । गृह्णामि । [2]उपयामगृहीत इत्युपयाम-गृहीतः । असि । ऋतसदित्यृत-सत् । असि । चक्षुष्पाभ्यामिति चक्षुः-पाभ्याम् । त्वा । क्रतुपाभ्यामिति क्रतु-पाभ्याम् । अस्य । यज्ञस्य । ध्रुवस्य । अध्यक्षाभ्यामित्यधि-अक्षाभ्याम् । गृ-

गृहीतोसि । वाक्षसदसि वाक् क्षियति निवस्यत्यनयोरिति वाक्षौ इन्द्रवायू, तयोर्ग्रहो वाक्षः । यथोक्तं—'वाग्वा ऐन्द्रवायवः'* इति । छान्दसो डः । तद्गृहं सीदतीति वाक्षसत् । यद्वा— 'वचिपचिभ्यो डश्च' इति वचेरसुन्, णाविति तत्रानुवर्तते वाक्षो वागिन्द्रियं, तत्र सीदतीति वाक्षसत्, बर्हिषदादिवत्सलोपः । ईदृशस्त्वमसि, तं त्वां वाक्पाभ्यां वाचः पालयितृभ्यां क्रतुपाभ्यां क्रतोर्यज्ञस्य पालयितृभ्यां अस्य यज्ञस्य ध्रुवस्य अविनाशिफलस्य अध्यक्षाभ्यां स्वामिभ्यां इन्द्रवायुभ्यां गृह्णामि ॥

[2]मैत्रावरुणस्य—ऋतं सत्यं, 'चक्षुर्वै सत्यम्'† 'चक्षुर्मैत्रावरुणः'* इति चोक्तम् । मित्रावरुणाभ्यां गृह्णामि । गतमन्यत् ॥

*सं. ६-४-९. †ब्रा. ३-३-५.

स्याध्यंक्षाभ्यां गृह्णाम्युपयामगृंही-
तोसि श्रुतसदंसि श्रोत्रपाभ्यां त्वा
क्रतुपाभ्यांमस्य यज्ञस्यं ध्रुवस्याध्यं-
क्षाभ्यां गृह्णामि देवेभ्यंस्त्वा वि-
श्वदे॑वेभ्यस्त्वा विश्वेभ्यस्त्वा देवे-
भ्यो विष्णंवुरुक्रमैष ते सोमस्त॰

ह्णामि । [3]उपयामगृंहीत इत्युंपयाम–गृहीतः । अ-
सि । श्रुतसदितिं श्रुत–सत् । असि । श्रोत्रपा-
भ्यामितिं श्रोत्र–पाभ्याम् । त्वा । क्रतुपाभ्यामितिं
क्रतु–पाभ्यांम् । अस्य । यज्ञस्यं । ध्रुवस्यं । अध्यं-
क्षाभ्यामित्यधिं–अक्षाभ्याम् । गृह्णामि । [4]देवेभ्यंः।
त्वा । [5]विश्वदेवेभ्य इतिं विश्व–देवेभ्यः । त्वा ।
[6]विश्वेभ्यः । त्वा । देवेभ्यंः । [7]विष्णों । उरुक्रमेत्युं-
रु–क्रम । एषः । ते । सोमंः । तम् । रक्षस्व ॥४२॥

[3]आश्विनस्य—श्रुतं श्रवणम् । 'श्रोत्रमाश्विनः'* इत्युक्तम् । ताभ्यामाश्विम्यां गृह्णामीति ॥

[4–6]अथ द्विदेवत्यशेषाणामादित्यस्थाल्यामवनयनमन्त्राः क्रमेण—देवेभ्य इत्यादयः ॥ देवाः एकत्र, इतरत्र विश्वेदेवाख्यो गणः, अपरत्र सर्वे देवाः ॥

[7]आदित्यस्थाल्यामपिधानमन्त्रः—विष्णविति ॥ हे विष्णो उरुक्रम महाविक्रम एष ते तव सोमः । त्वमस्य गोपयिता,

*सं- ६-४-९.

रक्षस्व ॥ ४२ ॥ तं ते दुश्चक्षा माऽ-
व ख्यन्मयि वसुः पुरोवसुर्वाक्पा
वाचं मे पाहि मयि वसुर्विदद्वसुश्च-
क्षुष्पाश्चक्षुर्मे पाहि मयि वसुस्संय-

तम् । ते । दुश्चक्षा इति दुः-चक्षाः । मा । अवेति । ख्यत् । [8]मयि । वसुः । पुरोवसुरिति पुरः-वसुः । वाक्पा इति वाक्-पाः । वाचम् । मे । पाहि । [9]मयि । वसुः । विदद्वसुरिति विदत्-वसुः । चक्षुष्पा इति चक्षुः-पाः । चक्षुः । मे । पाहि । [10]मयि । वसुः । संयद्वसुरिति संयत्-वसुः । श्रोत्रपा

---

तस्मात्त्वं रक्षस्व तं ते त्वदीयं सोमं दुश्चक्षाः पापदृष्टिः माऽवख्यत् मा द्राक्षीत् । 'अस्यतिवक्तिख्यातिभ्योऽङ्' । दुष्टं चष्ट इति 'गतिकारकयोरपि' इत्यसुन्, पूर्वपदप्रकृतिस्वरस्य पाक्षिकत्वात्कृदुत्तरपदप्रकृतिस्वरत्वम् ॥

[8]त्रयाणां भक्षणमन्त्राः—मयीत्यादि ॥ मयि वर्तते वसुः धनं सोमाख्यं पुरोवसुः पुरस्कृतेतरसमस्तधनः । यद्वा पुरस्ताद्वासयिता प्राणादीनां पुरस्सरः । स त्वं वाक्पाः वाचः पालयिता मे मम वाचं पाहि रक्षय । एवमुत्तरयोरपि ॥

[9]विदद्वसुः भजमानवसुः । विन्दतेः छान्दसो नुमभावः । कर्मणि वा लिटि यगात्मनेपदाभावश्छान्दसः ॥

[10]संयद्वसुः संगच्छद्वसुः ॥

ह्वंसुश्श्रोत्रपाश्श्रोत्रं मे पाहि भूरसि श्रेष्ठो रश्मीनां प्राणपाः प्राणं मे पाहि धूरसि श्रेष्ठो रश्मीनामपानपा अपानं मे पाहि यो न इन्द्रवायू मित्रावरुणावश्विनावभिदासति भ्रा-

इति श्रोत्र–पाः । श्रोत्रम् । मे । पाहि । [11]भूः । असि । श्रेष्ठः । रश्मीनाम् । प्राणपा इति प्राण–पाः । प्राणमिति प्र–अनम् । मे । पाहि । [12]धूः । असि । श्रेष्ठः । रश्मीनाम् । अपानपा इत्यपान–पाः । अपानमित्यप–अनम् । मे । पाहि । [13–15]यः । नः । इन्द्रवायू इतीन्द्र–वायू । मित्रावरुणाविति मित्रा–वरुणौ । अश्विनौ । अभिदासतीत्यभि–दास-

---

[11–12]उपांश्वन्तर्यामयोरनुमन्त्रणमन्त्रः—भूरिति ग्रहात्मा सोम उच्यते । भावयिता सुखानामसि । धूः हिंसिता दुःखानामसि ॥

[13–15]द्विदेवत्यानां होममन्त्राः क्रमेण—यो न इति तिस्रो जगत्यः । त्रिष्टुब्वा तृतीया । तत्र त्रयाणां देवतापदानां भेदेन शेष इतरः । तेन 'यो न इन्द्रवायू अभिदासाति' इति प्रथमा । 'यो नो मित्रावरुणावभिदासति' इति द्वितीया । 'यो न आश्विनावभिदासति' इति तृतीया । तत्र प्रथमा ॥ हे इन्द्रवायू यो नः अभिदासति हिनस्ति । दासृ दाने, अभिपूर्वो हिंसाकर्मा । यद्वा—दसु अपक्षये, व्यत्ययेन शप्, स्वरविकार-

तृव्य उत्पिपीते शुभस्पती इदमहं तमधरं पादयामि यथेन्द्राहमुत्तमश्चे-तयानि ॥ ४३ ॥

ति । भ्रातृव्यः । उत्पिपीत इत्युत्–पिपीते । शुभः । पती इति । इदम् । अहम् । तम् । अधरम् । पादयामि । यथा । इन्द्र । अहम् । उत्तम इत्युत्–तमः । चेतयानि ॥ ४३ ॥

रक्षस्व भ्रातृव्यस्त्रयोदश च ॥१०॥

श्छान्दसः । भ्रातृव्यश्शत्रुः । 'व्यन्सपत्ने' । उत्पिपीते उत्क्रम्यामार्गेण सोमं पिबति । पीङ् पाने, दैवादिकः, 'बहुलं छन्दसि' इति शपश्श्लुः । पिबतेरेव वा पूर्ववत् श्लुः, व्यत्ययेनात्मनेपदम्, 'ईहल्यघोः, इतीत्वम्, 'बहुलं छन्दसि' इत्यभ्यासस्येत्वम्, 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वं अनजादावपि व्यत्ययेन । शुभस्पती शुभस्य कर्मणः पालयिता । क्किबन्तात् षष्ठी, 'षष्ठ्याः पतिपुत्र' इति सत्वम्, छान्दसष्षष्ठ्या अलुक् । इदमिति क्रियाविशेषणम् । तं भ्रातृव्यं अधरं पादयामि अपकृष्टतां नयामि यथाकृते अहमुत्तम उद्गततमश्चेतयानि जानाम्यात्मानं हे इन्द्र । यद्वा—यथा अधरं पादयामि तथा हे इन्द्र त्वमपि कुरु, अहमुत्तमश्चेतयानि चेतयिता भूयासमिति प्रार्थयते । एवमुत्तरयोरपि द्रष्टव्यम् । उत्तमशब्द उत्सादित्वादन्तोदात्तः ॥

इति तृतीये द्वितीये दशमोनुवाकः.

प्र सो अ॑ग्ने तवो॒तिभि॑स्सु॒वीरा॑भिस्त-
रति॒ वाज॑कर्मभिः । यस्य॒ त्वꣳ स॒-
ख्यमावि॑थ । प्र होत्रे॑ पू॒र्व्यं वचो॒ऽग्नये॑

[1] प्रेति॑ । सः । अ॒ग्ने॒ । तव॑ । ऊ॒तिभि॒रित्यू॒ति–भिः॒ । सु॒वीरा॑भि॒रिति॑ सु–वीरा॑भिः । त॒र॒ति॒ । वाज॑कर्मभि॒रिति॒ वाज॑कर्म–भि॒ः । यस्य॑ । त्वम् । स॒ख्यम् । आवि॑थ । प्रेति॑ । होत्रे॑ । पू॒र्व्यम् । वचः॑ ।

---

[1]अस्ति त्रैधातवीयेष्टिः । 'सर्वाणि छन्दांस्येतस्यामिष्ट्यामनूच्यानीत्याहुः'* इति । तस्यां धाय्ये द्वे—प्र सो अग्ने इति प्रथमा ककुबुष्णिक्; द्वितीयस्य पादस्य द्वादशाक्षरत्वात् ॥ हे अग्ने तवोतिभिः रक्षाभिः । 'ऊतियूति' इति क्तिन उदात्तत्वं निपात्यते । सुवीराभिः शोभनपुत्राद्यपत्यहेतुभिः । 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम् । वाजकर्मभिः वाजस्यान्नस्य साधनानि कर्माणि भवन्ति यासु सतीषु तादृशीभिः त्वत्कर्तृकाभिरूतिभिः प्रतरति प्रकर्षेण तरति सामर्थ्याद्दुःखं संसारदुःखं वा स पुरुषः । कः? यस्य सख्यं समानख्यानतां समानभोजनतां तेन यष्टव्यतां त्वं आविथ आरक्षितवानसि गतवानित्यर्थः । 'थलि च सेटीडन्तो वा' इत्याद्युदात्तत्वम् ॥

[2]अथ द्वितीया—प्र होत्र इति परोष्णिक्; तृतीयस्य द्वादशाक्षरत्वात् ॥ होत्रे दैव्यायाग्नये पूर्व्यं 'पूर्वैः कृतमिनयौ च'

---

*सं. २-४-११[1].

भरता बृहत् । विपां ज्योतीꣳषि
बिभ्रंते न वेधसें । अग्ने त्री ते वा-
जिना त्रीषधस्था तिस्रस्तें जिह्वा
ऋंतजात पूर्वीः । तिस्र उ ते तनु-

अग्नयें । भरत । बृहत् । विपामितिं वि–पाम् । ज्योतीꣳषि । बिभ्रंते । न । वेधसें । [3]अग्नें । त्री । ते । वाजिंना । त्री । सधस्थेतिं सध–स्था । तिस्रः। ते । जिह्वाः । ऋतजातेत्यृंत–जात । पूर्वीः । ति-स्रः । उ । ते । तनुवंः । देववांता इतिं देव–वाताः।

---

इति यत् । यादृशं पूर्वैः कृतं तादृशं बृहत् महत् वचस्तुतिलक्षणं प्रभरत प्रकर्षेण कुरुत । 'अन्येषामपि दृश्यते' इति संहितायां दीर्घत्वम् । अग्निर्विशेष्यते—विपां विविधं रक्षितुं शीलवतां आदित्यचन्द्रग्रहादीनां ज्योतींषि बिभ्रते न बिभ्रत इव महातेजसे वेधसे विधात्रे विश्वस्य । बिभ्रतेश्शतरि 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम्, विपूर्वात्पातेः 'अन्येषामपि दृश्यते' इति विचि कृदुत्तरपदप्रकृतिस्वरत्वे आतो लोपे च कृते उदात्तनिवृत्तिस्वरेणाम उदात्तत्वम् । विदधेरसुनि नब्विषयत्वाभावादुदात्तत्वाभावः ॥

[3]अथ तस्या एव परिधानीया—अग्ने त्रीति त्रिष्टुप् ॥ 'त्रिवत्या परि दधाति'* इति च ब्राह्मणम् । हे अग्ने ते तव त्री त्रीणि वाजिना अन्नानि, अस्यामेवेष्टौ 'त्रयः पुरोडाशा भवन्ति'† इत्युक्तत्वात् । यद्वा—सोमौषधिसान्नाय्यात्मना त्रित्वम् ।

---

*सं. २-४-११⁴. †सं.२-४-११⁹.

वो देववातास्ताभिर्नः पाहि गिरो अप्रयुच्छन् । सं वां कर्मणा समिषा ॥ ४४ ॥ हिनोमीन्द्राविष्णू अ-

ताभिः । नः । पाहि । गिरः । अप्रयुच्छन्नित्यप्र–युच्छन् । [4]समिति । वाम् । कर्मणा । समिति । इषा ॥ ४४ ॥ हिनोमि । इन्द्राविष्णू इतीन्द्रा–विष्णू ।

'शेश्छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । त्री त्रीणि सधस्था सधस्थानि पृथिव्यन्तरिक्षद्युलोकाः । 'सधमादस्थयोः' इति सधादेशः, सांहितिकं षत्वं छान्दसं, सुषामादित्वाद्वा । तिस्रस्ते तव जिह्वाः त्रिष्वपि स्थानेषु और्ववैद्युतादित्यात्मिकाः । हे ऋतजात यज्ञार्थं जात पूर्वीः चिरन्तन्यः चौरादिर्द्रष्टव्यः, 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । तिस्र इति तिस्र एव तव तनुवः शरीराणि अग्निविद्युदादित्यात्मिकाः तिस्रस्तनवः अन्तस्स्थितस्य देवतात्मनः देववाताः देवैस्सर्वैरपि गताः अनुप्रविष्टाः सर्वदेवतामय इत्यर्थः । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । संभक्ता वा देवैः। परमप्यनुनासिकलोपं बाधित्वा 'अनुनासिकस्य क्विझलोः' इति दीर्घत्वं व्यत्ययेन प्रवर्तते, ततोनुनासिकलोपः । ताभिरनन्ताभिः नोस्माकं गिरः स्तुतिलक्षणाः पाहि रक्ष फलवतीः कुरु अप्रयुच्छन् अप्रमादयन् अविच्छेदेन अस्मान् यज्ञेषु प्रवर्तयन् । यद्वा— ताभिरस्मान्पाहि गिरो वा अस्मदीया अप्रयुच्छन्निति । युच्छ प्रमादे । यद्वा—ताभिस्सर्वैः वाजिनादिभिः । नपुंसकस्य शेषे प्राप्ते व्यत्ययेन स्त्रियाश्शेषः ॥

[4]अथ तस्यामेव पुरोनुवाक्या—सं वामिति त्रिष्टुप् ॥ हे इन्द्रा-

पंसस्पारे अस्य । जुषेथां यज्ञं द्रविणं च धत्तमरिष्टैर्नः पथिभिः पारयन्ता । उभा जिग्यथुर्न परा ज-

अपसः । पारे । अस्य । जुषेथाम् । यज्ञम् । द्रविणम् । च । धत्तम् । अरिष्टैः । नः । पथिभिरिति पथि-भिः । पारयन्ता । [5]उभा । जिग्यथुः । न । परेति । जयेथे इति । न । परेति । जिग्ये । कत-

विष्णू कर्मणा शारीरेण प्रणिपातादिना मानसेन भक्त्यादिना वाचिकेन स्तुतिलक्षणेन वां युवां संहिनोमि संगच्छामि । हि गतौ, यद्वा—संप्रीणयामि । हिवि प्रीणने, व्यत्ययेन प्रत्ययः, अकारश्चान्तादेशः । इषा अन्नेन हविर्लक्षणेन संहिनोमीत्येव । किमर्थम्? अस्यापसः कर्मणः पारे पारनिमित्तं, पारस्समाप्तिः, अविघ्नसमाप्त्यर्थम् । 'षष्ठ्याः पतिपुत्र' इत्यादिना सत्वम् । युवामपि यज्ञमिमं जुषेथां सेवेथाम् । सेवित्वा च द्रविणं धनमस्माकं धत्तम् । अरिष्टैः अनुपहिंसितैः पथिभिर्मार्गैः नः अस्मान् पारयन्ता पारयन्तौ कर्मणः पारं प्रापयन्तौ । 'सुपां सुलुक्' इत्याकारः, पार तीर कर्मसमाप्तौ, ॥

[5]तत्रैव याज्या—उभेति त्रिष्टुप् ॥ हे विष्णो त्वं चेन्द्रश्च युवामुभा उभौ जिग्यथुः सर्वदा जयथ । छान्दसो लिट्, 'सन्लिटोर्जेः' इति कुत्वम् । न कदाचिदपि पराजयेथे अन्येन न जीयेथे । 'विपराभ्यां जेः' इत्यात्मनेपदम् । तथाहीत्याह—

येथे न परा जिग्ये कतरश्चनैनोः। इ॰
न्द्रश्च विष्णो यदपस्पृधेथां त्रेधा स-
हस्रं वि तदैरयेथाम्। त्रीण्यायूꣳषि

रः । चन । एनोः । इन्द्रः । च । विष्णो इति ।
यत् । अपस्पृधेथाम् । त्रेधा । सहस्रम् । वीति ।
तत् । ऐरयेथाम् । [6]त्रीणि । आयूꣳषि । तव ।

---

एनोरिति । एनयोरिन्द्राविष्णवोः । एनादेशे कृते व्यत्ययेन 'ओसि च' इत्येत्वाभावे अतो गुणे पररूपत्वम् । एनयोर्मध्ये कतरश्चन अन्यतरोपि न पराजिग्ये न पराजयते पराजयं न प्राप्तवान् । पूर्ववदात्मनेपदम्, कुत्वं च । कदेत्याह—यत् यदा अपस्पृधेथां तदा उभा जिग्यथुः । 'अपस्पृधेथामानृचुः' इति लिङि द्विर्वचनं संप्रसारणं च निपात्यते । यद्वा—यत् यदा अपस्पृधेथां तत् तदा सहस्रं दक्षिणाः त्रेधा व्यैरयेथां त्रेधा सहस्रं व्यभजेथाम् । 'त्रेधा विभक्तं वै त्रिरात्रे सहस्रम्'* इति । यद्वा—यदर्थं युवां स्पर्धेथे तत्सहस्रं बहुमतं हविः त्रेधा विभजेथाम् 'त्रयः पुरोडाशा भवन्ति'† इति ॥

[6]तस्यामेव याज्यास्तिस्रो विकल्प्यन्ते । तत्र प्रथमा त्रिष्टुप् । उत्तरे गायत्र्यौ । हे जातवेदः जातधन जातानां वा वेदितः तव त्रीण्यायूंषि अन्नानि त्रिषु स्थानेषु द्युवियदवनिषु आहुतितोयकाष्ठानि । किंच—हे अग्ने तव तिस्र आजानी आजानयः

---

*सं.-७-१-६. †सं. २-४-११º.

तव॑ जातवेदस्ति॒स्र आ॒जानी॑रु॒षस॑-
स्ते अग्ने । ताभि॑र्दे॒वाना॒मवो॑ यक्षि
वि॒द्वानथ॑ ॥ ४५ ॥ भ॒व॒ यज॑माना॒य
शं योः । अ॒ग्निस्त्रीणि॑ त्रि॒धातू॒न्या

जा॒त॒वे॒द॒ इति॑ जात–वे॒दः । ति॒स्रः । आ॒जा॒नी॒रि-
त्या॑–जानीः । उ॒षस॑ः । ते॒ । अ॒ग्ने । ताभि॑ः । दे॒वा-
नाम् । अव॑ः । य॒क्षि । वि॒द्वान् । अथ॑ ॥ ४५ ॥
भ॒व॒ । यज॑मानाय । शम् । योः । [7]अ॒ग्निः । त्रीणि॑ ।

---

प्रादुर्भावाः सूर्यविद्युदग्निरूपेण । आङ्पूर्वाज्जनेरिङ् *'अजादिभ्यः' इति निप्रत्ययो वा । आत्वं छान्दसं, पूर्वसवर्णदीर्घत्वम् । किंच—उषसश्च तव तिस्र इत्येव त्रिप्रकारा इत्यर्थः । ताभिरनन्ताभिः उषोभिः सर्वैरनुक्रान्तैः आयुरादिभिः । पूर्ववद्व्यत्ययेन स्त्रियाश्शेषः । देवानां अवः तृप्तिं अन्नं वा हविर्लक्षणं यक्षि यज संगमय । यजेर्लेटि शपो लुक् । कर्मणस्संप्रदानत्वाद्देवानामिति चतुर्थ्यर्थे षष्ठी । विद्वान् तत्प्रकारज्ञः । अथ अनन्तरं च भव यजमानाय शं शमयिता रोगाणामागतानां योः यावयिता पृथक्कर्ता च भयानाम् । शाम्यतेः यौतेश्च विच् । 'निपातस्य च' इत्यथशब्दस्य दीर्घत्वम् ॥

[7]अथ द्वितीया—अग्निस्त्रीणीति ॥ त्रीणि तानि द्युवियद्वनिरूपाणि । कीदृशानि? त्रिधातूनि देवानां हविर्धारणपरंपरया

---

* जानतेरिति चाजातिभ्य इतीङ्.

क्षेति विदथा कविः । स त्रीꣳरेका-
दशाꣳ इह । यक्षच्च पिप्रयच्च नो वि-
प्रो दूतः परिष्कृतः । नभन्तामन्यके

त्रिधातूनीति त्रि–धातूनि । एति । क्षेति । विदथा ।
कविः । सः । त्रीन् । एकादशान् । इह । [8]यक्षत् ।
च । पिप्रयत् । च । नः । विप्रः । दूतः । परिष्कृ-

---

सर्वस्य लोकस्य त्रिधात्वात्मकानि । आक्षेति आगच्छति आवसति वा अग्निः । 'त्रयः पुरोडाशा भवन्ति त्रय इमे लोका एषां लोकानामाप्त्या उत्तरउत्तरो ज्यायान्भवत्येवमिव हीमे लोका यवमयो मध्ये'* इति त्रि प्रकारत्वं तेषाम् । त्रिचक्रादित्वादुत्तरपदाद्युदात्तत्वम्, क्षि निवासगत्योः, शपो लुक् । विदथा विदथेषु यज्ञेषु । विदेरथच्प्रत्ययः, 'सुपां सुलुक्' इत्याकारः । स त्रीनप्येकादशान् गणान् इह पृथिवीस्थाने एव तत्तत्स्थानस्थितानाक्षेति च । 'ये देवा दिव्येकादश स्थ'† इत्युक्तत्वात् 'त्रिंशत्त्रयश्च गणिनः'† इति । उभयत्रापि 'दीर्घादटि समानपादे' इति रुत्वम्, अनुनासिकश्च । एकादशपूरणा एकादशाः । कविः क्रान्तदर्शनः नोस्माकं अभिप्रेतं साधयत्विति ॥

[8]अथ तृतीया—यक्षदिति ॥ यक्षत् यजतु देवान् । यजेर्लेटि 'सिब्बहुलं लेटि' इति सिप् । पिप्रयच्च तर्पयतु च नः अस्मान्, सम्यग्यागनिर्वृत्त्या देवांश्च । प्रीञ् तर्पणे, लेटि शप-

---

*सं. २-४-११.५ † सं १-४-१०, ११[1]

समे। इन्द्राविष्णू दृंहिताश्शम्बरस्य नव पुरो नवतिं च श्नथिष्टम्। शतं वर्चिनस्सहस्रं च साकं हथो

तः। नभन्ताम्। अन्यके। समे। [9]इन्द्राविष्णू इतीन्द्रा–विष्णू। दृंहिताः। शम्बरस्य। नव। पुरः। नवतिम्। च। श्नथिष्टम्। शतम्। वर्चिनः। सहस्रम्। च। साकम्। हथः। अप्रति। असुर-

---

श्लुः, 'लेटोडाटौ' इत्यडागमः, समानवाक्ये निघातविधानेन पदात्परत्वाभावान्निघाताभावः। विप्रः मेधावी अग्निः दूतः देवानां परिष्कृतः अङ्गीकृतः समवेतो वा। 'संपर्युपेभ्यः' इति, 'समवाये च' इति सुट्, 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम्। अन्यके अरयः। कुत्सायां कः। समे सर्वेऽप्यस्मदीयाः नभन्तां नश्यन्तु। नभ हिंसायां, व्यत्ययेन शबात्मनेपदत्वम्। 'समसिमेत्यनुच्चानि'॥

[9]पुनरपि हविषः पुरोनुवाक्या, याज्या च विकल्पार्थे—इन्द्राविष्णू इति त्रिष्टुभौ॥ तत्र पुरोनुवाक्या—हे इन्द्राविष्णू युवां शम्बरस्य असुरस्य नव नवतिं च पुरः नगरीः दृंहिताः दृढाः श्नथिष्टं नाशितवन्तौ। श्नथ हिंसायां, लुङि 'बहुलं छन्दसि' इत्यडभावः। किञ्च—तासु वर्चिनः दीप्तिशीलान् शतं सहस्रं च असुरस्य शम्बरस्य वीरान् प्रधानभूतान् साकं एकेन प्रहारेण हथः नाशितवन्तौ युवाम्, अप्रति अप्रतिपक्षौ यथा भवति तथा। 'नञ्सु-

अप्रत्यसुरस्य वीरान् । उत माता महिषमन्ववेनदमी त्वां जहति पुत्र देवाः । अथाब्रवीद्वृत्रमिन्द्रो हनिष्य-

स्य । वीरान् । [10]उत । माता । महिषम् । अन्विति । अवेनत् । अमी इति । त्वा । जहति । पुत्र । देवाः । अथ । अब्रवीत् । वृत्रम् । इन्द्रः । हनि-

---

भ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । एवं महाप्रभावौ युवां अस्मदभिप्रेतं साधयतमिति ॥

[10]अथ याज्या—उतेति ॥ उत अपि च माता देवमाता महिषं महनीयं महान्तं वा पुत्रं अन्ववेनत् अनुक्रमेण उद्दीपितवती ज्ञापितवतीत्यर्थः । माता विज्ञापितवती स्वयं च ज्ञातवानित्यर्थः । वेनतिः कान्तिकर्मा । अथ माता पुत्रमब्रवीत्—हे पुत्र अमी देवाः त्वां जहति त्यजन्ति त्वया तूष्णीमास्यते इति । अथानन्तरं विदितार्थोऽभिमुखो भूत्वा पुत्रं हनिष्यन् इन्द्रो विष्णुमब्रवीत् । एवं विदितार्थं वा विष्णुं इन्द्रोऽब्रवीत् । किमब्रवीत्? हे सखे विष्णो वितरं विक्रान्ततरं विक्रमस्व जहि शीघ्रं शत्रुमिति । 'अमु च छन्दसि' इत्यमुप्रत्ययः । तौ वाऽस्मदभिमतं साधयतमिति । एवं शत्रुमारणख्यापनप्रधानमिदं

न्त्सखे विष्णो वितरं वि क्रमस्व ॥

॥ ४६ ॥

ष्यन्न् । सखे । विष्णो इति । वितरमिति वि–तरम् । वीति । क्रमस्व ॥ ४६ ॥

इषाऽर्थं त्वा त्रयोदश च ॥ ११ ॥

यो वै पवमानानां त्रीणि परिभूस्स्फ्यस्स्व- स्तिर्भक्षेहि महीनां पयोसि देव सवितरेतत्ते श्येनाय यद्वै हेतोपयामगृहीतोसि वाक्षस- त्प्रसो अग्न एकादश ॥११॥

यो वै स्फ्यस्स्वस्तिस्स्वधायै नमः प्र मुञ्च तिष्ठतीव षट्चत्वारिंशत् ॥ ४६ ॥

यो वै पवमानानां वि क्रमस्व ॥

हरिः ओं तत्सत् ॥

युगळं अभिचरतोभिचर्यमाणस्य वा युक्तमिति लक्ष्यते यथा— 'त्रैधातवीयेन यजेताभिचरन्'* इत्यादि ॥

इति भट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये

तृतीयकाण्डे द्वितीयप्रश्ने एकादशोनुवाकः.

समाप्तश्च प्रपाठकः.

---

* सं. २-४-११[5].

अग्ने तेजस्विन्तेजस्वी त्वं देवेषु
भूयास्तेजस्वन्तं मामायुष्मन्तं वर्च-
स्वन्तं मनुष्येषु कुरु दीक्षायै च

[1]अग्ने । तेजस्विन् । तेजस्वी । त्वम् । देवेषु । भूयाः । तेजस्वन्तम् । माम् । आयुष्मन्तम् । वर्चस्वन्तम् । मनुष्येषु । कुरु । [2]दीक्षायै । च । त्वा । तपसः । च । तेजसे । जुहोमि । [3]तेजोविदिति ते-

---

अथ तृतीये तृतीयप्रपाठकः.

[1]अथातिग्राह्यमाणमाग्नेयगृहीतं होष्यन्नवेक्षते*—अग्ने तेजस्विन्निति ॥ हे अग्ने तेजस्विन् अतिशयेन दीप्तिमन् त्वं देवेषु मध्ये एवं सर्वदा तेजस्वी भूयाः भक्त्यतिशयेन विच्छेदभीरुरिवाशास्ते । मामपि मनुष्येषु मध्ये तेजस्वन्तं अन्येभ्योधिकदीप्तिमन्तं आयुष्मन्तं दीर्घायुषं, अन्येभ्योपि वाऽधिकमन्नवन्तं वर्चस्वन्तं महाबलं महान्तं वा कुरु ॥

[2]जुहोति—दीक्षायै दीक्षायास्तपस उपवासादेश्च सकाशात् यत्तेज उत्पद्यते तन्मे भूयादिति त्वां जुहोमि ॥

[3]हुत्वा वाचयति—तेजोविदसीति ॥ तेजसो वेत्ता लब्धा लम्भयिता वा त्वमसि, त्वत्संबन्धात् मां तेजो मा हासीत् मा त्याक्षीत् ।

---

* ग—अथातिग्राह्याणामाग्नेयादीनां मन्त्राः.

त्वा तपसश्च तेजसे जुहोमि तेजो-
विदसि तेजो मा मा हासीन्माऽहं
तेजो हासिषं मा मां तेजो हासी-
दिन्द्रौजस्विन्नोजस्वी त्वं देवेषु भू-
या ओजस्वन्तं मामायुष्मन्तं वर्च-
स्वन्तं मनुष्येषु कुरु ब्रह्मणश्च त्वा
क्षत्रस्य च ॥ १ ॥ ओजसे जुहो-

जः–वित् । असि । तेजः । मा । मा । हासीत् ।
मा । अहम् । तेजः । हासिषम् । मा । माम् ।
तेजः । हासीत् । [4]इन्द्र । ओजस्विन् । ओजस्वी ।
त्वम् । देवेषु । भूयाः । ओजस्वन्तम् । माम् ।
आयुष्मन्तम् । वर्चस्वन्तम् । मनुष्येषु । कुरु ।
[5]ब्रह्मणः । च । त्वा । क्षत्रस्य । च ॥ १ ॥ ओज-

---

जहातेः लुङि 'यमरमनमातां सक्च' इति सगिटौ । इदानीं तदहानं द्वेधा प्रार्थयते—माऽहमिति । तेजः तेजोविषया जिहासा मम मा भूत्, तेजसोपि मद्विषया जिहासा मा भूदिति ॥

[4]ऐन्द्रमवेक्षते—इन्द्रेति ॥ ओजो बलम् । गतमन्यत् ॥

[5]जुहोति—ब्रह्मण इति ॥ ब्रह्मभिः क्षत्रैश्च यदोज उत्पद्यते तन्मे भूयादिति त्वां जुहोमि ॥

म्योजोविदस्योजो मा मा हासी-
न्माऽहमोजो हासिषं मा मामोजो
हासीत्सूर्य भ्राजस्विन्भ्राजस्वी त्वं
देवेषु भूया भ्राजस्वन्तं मामायुष्म-
न्तं वर्चस्वन्तं मनुष्येषु कुरु वायो-
श्चं त्वाऽपां च भ्राजसे जुहोमि सुव-
र्विदसि सुवर्मा मा हासीन्माऽहꣳ

से । जुहोमि । [6]ओजोविदित्योजः-वित् । असि । ओजः । मा । मा । हासीत् । मा । अहम् । ओजः । हासिषम् । मा । माम् । ओजः । हासीत् । [7]सूर्य । भ्राजस्विन्न् । भ्राजस्वी । त्वम् । देवेषु । भूयाः । भ्राजस्वन्तम् । माम् । आयुष्मन्तम् । वर्चस्वन्तम् । मनुष्येषु । कुरु । [8]वायोः । च । त्वा । अपाम् । च । भ्राजसे । जुहोमि । [9]सुवर्विदिति सुवः-वित् । असि । सुवः । मा । मा । हासीत् ।

---

[6]हुत्वा वाचयति—ओजोविदिति ॥ गतम् ॥

[7]अथ सौर्यमवेक्षते—सूर्य इति ॥ भ्राजो दीप्तिः समानमन्यत् ॥

[8]जुहोति—वायोरिति ॥ वायुना अद्भिश्च यद्भ्राजस्संपद्यते तन्मे भूयादिति त्वां जुहोमि ॥

[9]हुत्वा वाचयति—सुवर्विदिति ॥ गतम् । सुवः स्वर्गम् ॥

सुवर् हासिषं मा माꣳ सुवर् हासी-
न्मयि मेधां मयि प्रजां मय्यग्नि-
स्तेजो दधातु मयि मेधां मयि
प्रजां मयीन्द्र इन्द्रियं दधातु मयि
मेधां मयि प्रजां मयि सूर्यो भ्राजो
दधातु ॥ २ ॥

मा । अहम् । सुवः । हासिषम् । मा । माम् । सुवः । हासीत् । [10]मयि । मेधाम् । मयि । प्रजामिति प्र—जाम् । मयि । अग्निः । तेजः । दधातु । [11]मयि । मेधाम् । मयि । प्रजामिति प्र—जाम् । मयि । इन्द्रः । इन्द्रियम् । दधातु । [12]मयि । मेधाम् । मयि । प्रजामिति प्र—जाम् । मयि । सूर्यः । भ्राजः । दधातु ॥ २ ॥

क्षत्रस्य च मयि त्रयोविꣳशतिश्च ॥१॥

---

[10—12]त्रयाणां क्रमेण भक्षमन्त्राः—मयि मेधामित्याद्याः ॥ मेधा ग्रन्थार्थधारणसामर्थ्यम् । प्रजा पुत्रादिः । इन्द्रियं चक्षुरादिशक्तिः । दधातु स्थापयतु । गतमन्यत् ॥

इति तृतीये तृतीये प्रथमोनुवाकः.

वायुर् हिंकर्ताऽग्निः प्रस्तोता प्रजा-
पतिस्साम बृहस्पतिरुद्गाता विश्वे
देवा उपगातारो मरुतः प्रतिहर्तार
इन्द्रो निधनं ते देवाः प्राणभृतः
प्राणं मयि दधत्वेतद्वै सर्वमध्व-

[1]वायुः । हिंकर्तेति हिं–कर्ता । अग्निः । प्रस्तोतेति प्र–स्तोता । प्रजापतिरिति प्रजा–पतिः । साम । बृहस्पतिः । उद्गातेत्युत्–गाता । विश्वे । देवाः । उपगातार इत्युप–गातारः । मरुतः । प्रतिहर्तार इति प्रति–हर्तारः । इन्द्रः । निधनमिति नि–धनम् । ते । देवाः । प्राणभृत इति प्राण–भृतः । प्राणमिति प्र–अनम् । मयि । दधतु । [2]एतत् । वै ।

---

[1]अथ स्तोत्रोपाकरणं जपति—वायुरिति ॥ हिंकर्ता हिंकारस्य कर्ता वायुर्भवति, प्रस्तोता प्रस्तुवन्नग्निर्भवति । प्रस्तावो गानस्य प्रारम्भः । साम गानं तत्स्वयं प्रजापतिर्भवति, उद्गाता बृहस्पतिर्भवति, उपगातारो विश्वेदेवा भवन्ति, प्रतिहर्तारो मरुतो भवन्ति, निधनं साम्न इन्द्रो भवति । ते वाय्वादयो हिंकर्त्रादिनो देवाः प्राणभृतः साम्नः प्राणं बलं आत्मानं वा बिभ्रतीति प्राणभृतः मयि प्राणं दधतु स्थापयतु । जातावेकवचनम् । प्राणापानादीन् चक्षुश्श्रोत्रादींश्चेति ॥

[2]अथात्र ब्राह्मणम्—एतद्वा इत्यादि ॥ एतत्सर्वमेतानि सर्वा-

युरुपाकुर्वन्नुद्गातृभ्यं उपाकरोति ते
देवाः प्राणभृतः प्राणं मयि दध-
त्वित्याहैतदेव सर्वमात्मन्धत्त इडा

सर्वम् । अध्वर्युः । उपाकुर्वन्नित्युप–आकुर्वन् । उ-
द्गातृभ्य इत्युद्गातृ–भ्यः । उपाकरोतीत्युप–आक-
रोति । ते । देवाः । प्राणभृत इति प्राण–भृतः ।
प्राणमिति प्र–अनम् । मयि । दधतु । इति । आ-
ह । एतत् । एव । सर्वम् । आत्मन् । धत्ते । [3]इडा ।

---

णि वाध्वाद्यात्मकानि हिंकर्त्रादीनि उपाकरोति साम्नि प्रवर्तयत्य-
ध्वर्युः । किं कुर्वन्? उद्गातृभ्य उपाकुर्वन् उपाकरणमिदं जपन् ।
'नपुंसकमनपुंसकेन' इति नपुंसकैकशेषः, एकवद्भावश्च । किं चा-
यमध्वर्युः ते देवाः प्राणभृतः प्राणं मयि दधत्वित्याह । यस्मा-
देवमाह, तस्मादेतत्सर्वं हिंकर्त्रादीनि सर्वाण्यपि आत्मन् धत्ते
आत्मनि स्थापयति स्वयमेव हिंकर्त्रादिना प्रतिपद्यते । 'सुपां
सुलुक्' इति सप्तम्याः लुकि 'न ङिसम्बुद्ध्योः' इति नलो-
पाभावः ॥

[3]आर्त्विज्यं वा करिष्यन् शस्त्रं वा प्रतिगरिष्यन् जपति—
इडेति ॥ इडा दैवी गौर्वा प्रष्टिर्वा, यामुपह्वयते सा देवहूः देवा-
नामाह्वाता होता । यद्वा—सा देवानां मनुर्यज्ञनीः यज्ञस्य नेता
मनुः प्रजापतिः वा बृहस्पतिरुक्थामदानि शस्त्रप्रतिगरादीनि शंसि-
षत् शंसति शस्त्राणि शंसति मदान् प्रतिगरान् शंसति । शंसे-

देवहूर्मनुर्यज्ञनीर्बृहस्पतिरुक्थामदा-
नि शꣳसिषद्विश्वे देवाः ॥ ३ ॥
सूक्तवाचः पृथिवि मातर्मा मा हिꣳ-
सीर्मधु मनिष्ये मधु जनिष्ये मधु
वक्ष्यामि मधु वदिष्यामि मधुमतीं

देवहूरिति देव-हूः । मनुः । यज्ञनीरिति यज्ञ-नीः । बृहस्पतिः । उक्थामदानीत्युक्थ-मदानि । शꣳसिषत् । विश्वे । देवाः ॥ ३ ॥ सूक्तवाच इति सू-क्त-वाचः । पृथिवि । मातः । मा । मा । हिꣳ-सीः । मधु । मनिष्ये । मधु । जनिष्ये । मधु । वक्ष्यामि । मधु । वदिष्यामि । मधुमतीमिति म-

---

लेटि 'सिब्बहुलं लेटि' इति सिप् । उक्थशब्दस्य संहितायां छान्दसं दीर्घत्वम् । विश्वेदेवाः सूक्तवाचः सूक्तवाकस्य वक्तारः सूक्तं सूक्तवाकः, तद्ब्रुवन्तीति सूक्तवाचः । 'क्विब्वचि' इत्यादिना क्विप्दीर्घत्वे । यस्मादेवं सर्वमेतादिडादयः कुर्वन्ति तस्मात्सत्यपि प्रमादे न मे कश्चिदपराधः । तस्मात् हे पृथिवि मातः सर्वस्य रक्षिके मा मा हिंसीः । अहं तु मधु मनिष्ये मधुवदेव मनसा चिन्तयिष्यामि । मधुवदेव जनयिष्यामि मधुवदेव वक्ष्यामि युष्मान् प्रापयिष्यामि । वह प्रापणे । मधुवदेव वाचा वदिष्यामि । सर्वत्र प्रमादाभाव एव मधुमत्त्वं वेदितव्यम् । देवेभ्यो मधुमतीं मधुवदनहेतुं न केवलमप्रमादां वाचं उद्यासं

देवेभ्यो वाचमुद्यासꣳ शुश्रूषेण्यां
मनुष्येभ्यस्तं मां देवा अवन्तु शो-
भायै पितरोऽनु मदन्तु ॥ ४ ॥
वसवस्त्वा प्र वृहन्तु गायत्रेण छ-

धुं–मतीम् । देवेभ्यः । वाचम् । उद्यासम् । शुश्रू-
षेण्याम् । मनुष्येभ्यः । तम् । मा । देवाः । अव-
न्तु । शोभायै । पितरः । अन्विति । मदन्तु ॥४॥

शꣳसिषद्भिश्वे देवा अष्टाविꣳशतिश्च ॥ २ ॥

[1]वसवः । त्वा । प्रेति । वृहन्तु । गायत्रेण ।

---

वदितुं समर्थो भूयासम् । 'किदाशिषि' इति किस्वात् 'वचि-स्वपि' इति संप्रसारणम् । मनुष्येभ्यः शुश्रूषेण्यां श्रवणीयां श्रुति-सुखहेतुं वाचं उद्यासमित्येव । उभयत्रापि षष्ठ्यर्थे चतुर्थी । सन-न्तादौणादिक एण्यप्रत्ययः । तं मामेवंगुणं देवा अवन्तु रक्षन्तु शोभायै यथा मया कृतं शोभते तथा अनुमदन्तु अनुमोदन्ताम्, उत्कृष्टत्वेन समीचीनं करोतीति शोभार्थं पितरश्च अनुमोदन्तु । माद्यतेर्व्यत्ययेन शप् ॥

इति तृतीये तृतीये द्वितीयोऽनुवाकः.

---

[1–3]उपनद्धस्य राज्ञस्त्रीनंशून्प्रवृहति—वसव इति ॥ वसवस्त्वा प्रवृहन्तु पृथक्कुर्वन्तु । वृहू उद्यमने । गायत्रेण छन्दसा कर-

न्दसाऽग्नेः प्रियं पाथ उपेहि रुद्रा-
स्त्वा प्र वृहन्तु त्रैष्टुभेन छन्दसेन्द्रस्य
प्रियं पाथ उपेह्यादित्यास्त्वा प्र वृ-
हन्तु जागतेन छन्दसा विश्वेषां दे-
वानां प्रियं पाथ उपेहि मान्दासु ते

छन्दसा । अग्नेः । प्रियम् । पाथः । उपेति । इहि । [2]रुद्राः । त्वा । प्रेति । वृहन्तु । त्रैष्टुभेन । छन्दसा । इन्द्रस्य । प्रियम् । पाथः । उपेति । इहि । [3]आदित्याः । त्वा । प्रेति । वृहन्तु । जागतेन । छन्दसा । विश्वेषाम् । देवानाम् । प्रियम् । पाथः । उपेति । इहि । [4]मान्दासु । ते । शुक्र । शुक्रम् । एति । धू-

णेन । गायत्र्येव गायत्रम् । 'छन्दसि नपुंसके स्वार्थ उपसंख्यानम्' इत्यण् । स त्वं अग्नेः प्रियं पाथः अन्नं तद्भावं अपीहि उपगच्छ । एवं रुद्रास्त्वा, आदित्यास्त्वा । उभे अपि गते । त्रिष्टुब्जगतीशब्दात् उत्सादित्वादञ् ॥

[4]होतृचमसेन वसतीवरीभ्यो निष्षिच्य द्वादशभिराधावैराधूनोति—मान्दासु ते इत्यादिभिः ॥ आधूयते एभिरित्याधावाः । मान्दादीन्यपां नामानि द्वादश । 'एतद्वा अपां नामधेयं गुह्यं यदाधावाः'* इत्यादि च ब्राह्मणम् । मन्दं वहन्तीति मान्दाः । छान्दसस्स्वरः । मदकर्यो वा । मन्दतेर्वा

*सं. ३-३-४.[1]

शुक्र शुक्रमा धूनोमि भन्दनासु
कोतंनासु नूतंनासु रेशींषु मेषीं
षु वाशींषु विश्वभृत्सु माध्वींषु

नोमि । [5]भन्दनांसु । [6]कोतंनासु । [7]नूतंनासु । [8]रे-
शींषु । [9]मेषींषु । [10]वाशींषु । [11]विश्वभृत्स्विति विश्व-
भृत्—सु । [12]माध्वींषु । [13]ककुहासुं । [14]शार्करीषु ॥५॥

---

मान्दाः, पचाद्यचि स एव विकारः । तास्वप्सु हे शुक्र सोम ते तव शुक्रं रस*माधूनोमि चालयामि 'ते शुक्र' इत्यादि सर्वत्र भन्दनास्वादिष्वनुषज्यते ॥

[5]भन्दनासु कल्याणकरीषु । भदि कल्याणे, 'अनुदात्तेतश्च हलादेः' इति युच्प्रत्यये कृते उदात्तत्वम् ॥

[6]कोतनासु । छान्दसस्स्वरविकारः । कित ज्ञाने, नन्द्यादित्वाल्ल्युः । ज्ञानकरीषु ॥

[7]नूतनासु प्रत्यग्रासु । नवस्य नू आदेशः, तनच्प्रत्ययः ॥

[8]रेशीषु शीघ्रगमनेन भुवो हिंसिकासु । रुश रिश हिंसायां, पचाद्यच्, शार्ङ्गरवादिषु द्रष्टव्यः ॥

[9]मेषीषु स्पर्धिकासु । ततीषु† वा । मिष स्पर्धायाम् ॥

[10]वाशीषु शब्दवतीषु । वाशृ शब्दे, उभयत्रापि तावेव प्रत्ययौ ॥

[11]विश्वभृत्सु विश्वस्य धारिकासु ॥

[12]माध्वीषु मधुरसवतीषु । 'मधोर्ञ च' इति मत्वर्थे ञः, 'ऋत्व्यवास्तु' इत्यत्र गुणाभावो यणादेशो निपात्यते, पूर्ववत् ङीप्प्रत्ययः ॥

---

*अ—रूप. †अ—स्पर्धिकादिषु.

ककुहासु शक्करीषु ॥ ५ ॥ शुक्रासु ते शुक्र शुक्रमा धूनोमि शुक्रं ते शुक्रेण गृह्णाम्यह्नो रूपेण सूर्यस्य रश्मिभिः । आऽस्मिन्नुग्रा

[15]शुक्रासु । ते । शुक्र । शुक्रम् । एति । धूनोमि । [16]शुक्रम् । ते । शुक्रेण । गृह्णामि । अह्नः । रूपेण । सूर्यस्य । रश्मिभिरिति रश्मि—भिः । एति । अस्मिन् । उग्राः । अचुच्यवुः । दिवः । धाराः ।

---

[13]ककुहासु ककुभासु । वर्णव्यत्ययः, शब्दान्तरं वा ॥

[14]शक्करीषु शक्तिमतीषु । शक्नोतेः क्वनिपि 'वनोर च' इति ङीब्रेफौ ॥

[15]शुक्रासु निर्मलासु वीर्यवतीषु वा । 'ते शुक्र' इत्यादि पुनराम्नायते अनुषङ्गसमाप्तिसूचनार्थम् ॥

[16]अथादाभ्यपात्रे अंशूनुपसंगृह्णाति—शुक्रं ते इति । 'आस्मिन्नुग्राः' इत्यादि द्विपदा गायत्री ॥ हे सोम तव शुक्रं वीर्यं शुक्रेण वीर्यवता सोमेन शुक्रात्मना सह गृह्णामि अंशुभिरन्तर्हितमित्यर्थः । अह्नो रूपेण रूपहेतुभिस्सूर्यस्य रश्मिभिः अंशुत्वसामान्याद्रूप्यते । अस्मिन्नुग्राः उद्गूर्णधाराः दिवः द्युलोकात् आचुच्यवुः आच्यवन्ताम् । छान्दसो लुङ्, शपः श्लुः, 'जुसि च' इति गुणः । किंच—असश्चत सश्चतां च पृथिवी । सश्चतिर्गतिकर्मा

अचुच्यवुर्दिवो धारा असश्चत । क-
कुह॒ꣳ रूपं वृषभस्य रोचते बृहत्सो-
मस्सोमस्य पुरोगाश्शुक्रश्शुक्रस्य
पुरो गाः । यत्ते सोमादाभ्यं नाम जा-
गृवि तस्मै ते सोम सोमाय स्वाहो-

असश्चत । [17]ककुहम् । रूपम् । वृषभस्य । रोचते ।
बृहत् । सोमः । सोमस्य । पुरोगा इति पुरः—गाः ।
शुक्रः । शुक्रस्य । पुरोगा इति पुरः—गाः । [18]यत् ।
ते । सोम । अदाभ्यम् । नाम । जागृवि । तस्मै ।

---

स एव लुङ्, शपो लुक्, 'आत्मनेपदेष्वनतः' इत्यदादेशः ॥

[17]अथैनमादायोत्तिष्ठति—ककुहमिति परोष्णिहा स्वराजा; प्रथमस्य द्वादशाक्षरत्वात्, द्व्यक्षराधिक्याच्च ॥ ककुहं रूपं प्रधानं रूपं वृषभस्य वर्षितुरिन्द्रस्य रोचते शोभते बृहत् महत् । 'एतद्वा अस्य ककुहं रूपं यद्वृष्टिः' इति ब्राह्मणम्* । उत्तराभ्यां पादाभ्यामिति—अयं सोमः सोमस्य राज्ञः पुरोगाः पुरस्ताद्गच्छतीति पुरोगाः शुक्रः रसात्मा शुक्रस्य सोमस्य इन्द्रस्य वा पुरोगाः प्रथमगामी । 'जनसनखन' इति विट् 'विड्वनोः' इत्यात्वम् ॥

[18]आहवनीये जुहोत्यन्वारब्धे यजमाने—यत्ते सोमेति द्विपदा जगती विराड्वा ॥ ग्रहेषु व्याख्याता† । हे सोम यत्ते अदा-

---

*सं. ३-३-४. †सं. १-४-१.[12]

शिक्त्वं देव सोम गायत्रेण छन्द-
साऽग्नेः ॥ ६ ॥ प्रियं पाथो अपी-
हि वशी त्वं देव सोम त्रैष्टुभेन
छन्दसेन्द्रस्य प्रियं पाथो अपीह्य-

ते । सोम । सोमाय । स्वाहा । [19]उशिक् । त्वम् ।
देव । सोम । गायत्रेण । छन्दसा । अग्नेः ॥ ६ ॥
प्रियम् । पाथः । अपीति । इहि । [20]वशी । त्वम् ।
देव । सोम । त्रैष्टुभेन । छन्दसा । इन्द्रस्य । प्रियम् ।
पाथः । अपीति । इहि । [21]अस्मत्सखेत्यस्मत्-

---

भ्यमनुपहिंसितं जागृवि जागरणशीलं नाम, तस्मै सोमनाम्ने स्वाहेति ॥

[19]अथ प्रदक्षिणमावृत्य राजन्येवांशूनपिसृजति—उशिगिति ॥ हे देव द्योतनवन् सोम उशिक् कान्तस्त्वं सर्वेषां स्थिति*हेतुत्वात्सर्वैः कमनीयः । वशेरिक्प्रत्ययः । स त्वं गायत्रेण छन्दसा अग्नेः प्रियं पाथः अन्नं अपीहि यतस्त्वां प्रवृहन्तमेव सोममपीहि अनुप्रविश । एवमुत्तरयोरपि ॥

[20—21]वशी विधेयीकृतविश्वः अस्मत्सखा वयं सखायो यस्य, उपकारप्रत्युपकारभावेन समानाख्यानः तादृशस्त्वम् । त्रिष्टुब्जगतीशब्दयोरुत्सादित्वमुक्तम् । गतमन्यत् ॥

---

* ग—स्मृति.

स्मत्सखा त्वं देव सोम जागतेन
छन्दसा विश्वेषां देवानां प्रियं पाथो अ-
पीह्या नः प्राण एतु परावत आऽन्त-
रिक्षाद्दिवस्परि। आयुः पृथिव्या अ-
ध्यमृतमसि प्राणाय त्वा । इन्द्राग्नी

सखा । त्वम् । देव । सोम । जागतेन । छन्दसा । विश्वेषाम् । देवानाम् । प्रियम् । पाथः । अपीति । इहि । [22]एति। नः । प्राण इति प्र—अनः । एतु । परावत इति परा—वतः । एति । अन्तरिक्षात् । दिवः । परि । आयुः । पृथिव्याः । अधीति । अमृतम् । असि । प्राणायेति प्र—अनाय । त्वा । [23]इन्द्राग्नी

---

[22]अंशुं हुत्वा हिरण्यमभिव्यनक्ति—आ न इत्यनुष्टुभा ॥ नोस्मान् प्राण एतु आगच्छतु परावतः दूरादपि । 'उपसर्गाच्छन्दसि' इति वतिः । अन्तरिक्षात् अन्तरिक्षादप्युपरिस्थितः प्राण आगच्छतु। दिवः द्युलोकादप्युपरिष्टात् स्थितः प्राण एत्वित्येव । 'पञ्चम्याः पराध्यर्थे' इति सत्वम् । हे हिरण्य पृथिव्या अधि उपरि आयुः आयुर्हेतुः अमृतं अमृतत्वहेतुश्च त्वमसि । 'नञो जरमर' इत्युत्तरपदान्तोदात्तत्वत् । 'उदात्तयणः' इति पृथिव्या विभक्तेरुदात्तत्वम्, तादृशं त्वां प्राणाय प्राणस्थितये अवजिघ्रामीति ॥

[23]वेद्यन्तरद्भिर्मार्जयते—इन्द्राग्नी इत्यनुष्टुब्भ्याम् । तत्र प्रथमा ॥ इन्द्राग्नी मे वर्चः बलं दीप्तिं वा कृणुताम् । 'धिन्विकृण्व्योर च'

मे वर्चः कृणुतां वर्चस्सोमो बृहस्प-
तिः । वर्चो मे विश्वे देवा वर्चो मे
धत्तमश्विना । दधन्वे वा यदीमनु

इतीन्द्र—अग्नी । मे । वर्चः । कृणुताम् । वर्चः ।
सोमः । बृहस्पतिः । वर्चः । मे । विश्वे । देवाः ।
वर्चः । मे । धत्तम् । अश्विना । [24]दधन्वे । वा ।
यत् । ईम् । अन्विति । वोचत् । ब्रह्माणि । वेः ।

---

इत्युप्रत्ययः, अकारश्चान्तादेशः, अतो लोपः । तथा सोमो बृहस्पतिश्च वर्चः कृणुतामित्येव । विश्वे च देवाः वर्चः कृण्वन्तु । हे अश्विना अश्विनौ युवामपि मे वर्चो धत्तं दत्तम् । 'सुपां सुलुक्' इत्याकारः ॥

[24]अथ द्वितीया—दधन्व इति ॥ 'अनु' इति प्रथमपादान्तः । वाशब्दस्समुच्चये । इन्द्राग्न्यादयो मे वर्चः कृण्वन्तु, अहमपि तदर्थमेवं करोमीति पूर्वापेक्षया समुच्चयः । 'ईम्' इति पादपूरणे । दधन्वे अवगच्छामि धारयामि । धवि गतौ, इदित्वान्नुम्, छान्दसो लिट् । यत् यानि वचनानि । व्यत्ययेनैकवचनम् । अनुवोचत् अनुब्रवीति अनुशास्ति सामर्थ्यात् ऋषिः । छान्दसो लुङ्, 'बहुलं छन्दस्यमाङ्योगेऽपि, इत्यडभावः । ब्रह्माणि परिबृढानि कर्माणि ज्योतिष्टोमादीनि । कस्याधिकारिणः? वेः गृहस्थस्योक्तानि । वेतेः प्रजननकर्मणः औणादिको डिप्रत्ययः । यद्वा—गतिकर्मणः—वेतव्यस्य गन्तव्यस्य यज्ञस्य यानि

वोचद्ब्रह्माणि वेरु तत् । परि विश्वा-
नि काव्या नेमिश्चक्रमिवाभवत् ॥
एतद्वा अपां नामधेयं गुह्यं यदाधा-

उ । तत् । परीति । विश्वानि । काव्या । नेमिः ।
चक्रम् । इव । अभवत् ॥ ७ ॥

शर्करीष्वग्नेर्बृहस्पतिः पञ्चविंशतिश्च ॥ ३ ॥

[1]एतत् । वै । अपाम् । नामधेयमिति नाम–

---

कर्माणि दीक्षादीनि कर्तव्यानि तत् तानि । पूर्ववद्वचनव्यत्ययः । तानि सर्वाण्यनुक्रमेण दधन्वे तेषामेवेन्द्राग्न्यादीनां प्रसादेन इति । [उ इति] पादपूरणे अवधारणे वा । तान्येवेति । यद्वा— 'वेतेः' इति वेतेर्विचि गुणे वेरिति पुरुषार्थानां वेदयिता वेद उच्यते । वेदो यानि कर्माण्यनुशास्तीति स एवार्थः । अधुना वेदो विशेष्यते—विश्वानि काव्या कवनीयानि कार्याणि विधेयानि कर्माणि कर्मसाध्यानि वा फलानि पर्यभवत् परिभवति कात्स्न्र्येन प्राप्नोति श्रेयोर्थिभ्यः प्रकाशयति । नेमिश्चक्रमिव यथा नेमिश्चक्रं सर्वतः प्राप्य धारयति तथेति । पूर्ववच्छान्दसो लङ् । कु शब्दे, 'ओरावश्यके' इति ण्यप्रत्ययः ॥

इति तृतीये तृतीये तृतीयोनुवाकः.

---

[1]अथैतेषां मन्त्राणां ब्राह्मणम्—एतद्वा इत्यादि ॥ सामान्य

वा मान्दासु ते शुक्र शुक्रमा धूनो-
मीत्याहापामेव नामधेयेन गुह्येन
दिवो वृष्टिमव रुन्धे शुक्रं ते शुक्रेण
गृह्णामीत्याहैतद्वा अह्नो रूपं यद्रात्रि-
स्सूर्यस्य रश्मयो वृष्ट्या ईशतेऽह्न

धेयम् । गुह्यम् । यत् । आधावा इत्या—धावाः । मान्दासु । ते । शुक्र । शुक्रम् । एति । धूनोमि । इति । आह । अपाम् । एव । नामधेयेनेति नाम—धेयेन । गुह्येन । दिवः । वृष्टिम् । अवेति । रुन्धे । [2]शुक्रम् । ते । शुक्रेण । गृह्णामि । इति । आह । एतत् । वै । अह्नः । रूपम् । यत् । रात्रिः । सूर्यस्य । रश्मयः । वृष्ट्याः । ईशते । अह्नः । एव ।

विवक्षया एकवचनम् । अपामेतानि गुह्यानि गोपनीयानि यदाधावानां मान्दादीनि द्वादशानामाधावानाम् । यथोक्तमाचार्येण—'द्वादशभिराधावैराधावनामकैराधूनोति' इति । तस्मादेतैर्नामभिराधावने क्रियमाणे आपस्तृप्ता दिवो वृष्टिमुत्पादयन्ति; सर्वस्थितिहेतुत्वादस्य ॥

[2]शुक्रं ते इत्यदाभ्यग्रहणमन्त्रः ॥ 'अह्नो रूपेण सूर्यस्य रश्मिभिः'* इति यद्द्वयमुपात्तं, तदभिप्रायमाह—एतद्वा इति । विशेषणोपादानसामर्थ्याद्विशिष्टमह्नो रूपं गृह्यते यद्वृष्टेरुत्पादकं भवति । सूर्यरश्मीनां च वृष्टिकारणतया पृथगुपादानात् तद्विरहितं यद्रात्रि-

*सं. ३-२-३.16

एव रूपेण सूर्यस्य रश्मिभिर्दिवो
वृष्टिं च्यावयत्याऽस्मिन्नुग्राः ॥ ८ ॥
अचुच्यवुरित्याह यथायजुरेवैतत्क-
कुहꣳ रूपं वृषभस्य रोचते बृहदि-
त्याहैतद्वा अस्य ककुहꣳ रूपं यद्वृष्टी
रूपेणैव वृष्टिमव रुन्धे यत्ते सोमा-

रूपेण । सूर्यस्य । रश्मिभिरिति रश्मि–भिः । दि-
वः । वृष्टिम् । च्यावयति । एति । अस्मिन्न् । उ-
ग्राः ॥ ८ ॥ अचुच्यवुः । इति । आह । यथायजु-
रिति यथा–यजुः । एव । एतत् । [3]ककुहम् । रू-
पम् । वृषभस्य । रोचते । बृहत् । इति । आह ।
एतत् । वै । अस्य । ककुहम् । रूपम् । यत् । वृ-

प्रायमह्नो रूपं तेन सूर्यरश्मिभिश्च शुक्रं रसं गृह्णामीति वदन् दिवो वृष्टिं च्यावयति पातयतीति । तत्रैव मन्त्रे 'आस्मिन्नुग्राः'* इति यदाह एतद्यथा यजुषाऽभिहितं तथा भवत्येव । यजुरिति मन्त्रनाम, यजुर्वेदाम्नातो वा मन्त्रो यजुरित्युच्यते ॥

[3]ककुहमिति आदायोत्थानमन्त्रः ॥ एतद्वा इति । सर्व-लोकस्थितिहेतुत्वात् इन्द्रस्य प्रधानं रूपं वृष्टिरिति । ततश्च संकीर्तनाद्यदृष्टेः स्वरूपं वृष्टिं लभते ॥

*सं. ३-३-३.[16]

दाभ्यं नाम जागृवीत्याहैष ह वै ह-
विषा हविर्यजति योऽदाभ्यं गृहीत्वा
सोमाय जुहोति परा वा एतस्यायुः
प्राण एति ॥ १ ॥ योऽꣳशुं गृह्णा-
त्या नः प्राण एतु परावत इत्याहा-
युरेव प्राणमात्मन्धत्तेऽमृतमसि प्रा-

ष्टिः । रूपेण । एव । वृष्टिम् । अवेति । रुन्धे । [4]यत् ।
ते । सोम । अदाभ्यम् । नाम । जागृवि । इति ।
आह । एषः । ह । वै । हविषा । हविः । यजति । यः ।
अदाभ्यम् । गृहीत्वा । सोमाय । जुहोति । परेति ।
वै । एतस्य । आयुः । प्राण इति प्र-अनः । एति
॥ १ ॥ यः । अꣳशुम् । गृह्णाति । एति । नः ।
प्राण इति प्र-अनः । एतु । परावत इति परा-वतः ।
इति । आह । आयुः । एव । प्राणमिति प्र-अनम् ।
आत्मन् । धत्ते । अमृतम् । असि । प्राणायेति प्र-

---

[4]यत्ते सोममिति होममन्त्रः ॥ एष खलु हविषा हविर्यजति योदाभ्यं गृहीत्वा सोमाय जुहोतीति मन्त्रो वदतीति भावः ।

णाय त्वेति हिरंण्यमभि व्यंनित्यमृ-
तं वै हिरंण्यमायुः प्राणोंऽमृतेनैवा-
युंरात्मन्धंत्ते शतमांनं भवति शता-
युः पुरुंषश्शतेन्द्रिंय आयुंष्येवेन्द्रिये
प्रतिं तिष्ठत्यप उपं स्पृशति भेषजं

अनायं । त्वा । इतिं । हिरंण्यम् । अभि । वीतिं ।
अनितिं । अमृतंम् । वै । हिरंण्यम् । आयुंः । प्रा-
ण इतिं प्र—अनः । अमृतेंन । एव । आयुंः । आत्मन्न् ।
धत्ते । शतमांनमितिं शत—मानम् । भवति । शता-
युरितिं शत—आयुः । पुरुंषः । शतेंन्द्रिय इतिं शत—
इन्द्रियः । आयुंषि । एव । इन्द्रिये । प्रतीतिं । ति-
ष्ठति । [5]अपः । उपेतिं । स्पृशति । भेषजम् । वै ।

परा वा इत्यादि । परैति विनश्यत्यायुश्च प्राणश्च । तस्मादंशुं हुत्वा 'आ नः प्राणः'* इति हिरण्यमभिव्यनन्नाह । आयुः प्राणं चात्मनि स्थापयति । अमृतमसीति । तत्रैव मन्त्रे 'अमृतमासि'* इति यदाह, यच्च हिरण्यमभिव्यनिति तेनामृतात्मना हिरण्येन आत्मन्यायुर्धत्ते । शतमानमित्यादि । व्याख्यातम्† । आयुषीन्द्रिये वीर्यं च प्रतिष्ठितो भवति ॥

[5]अप उपस्पृशतीत्यादि ॥ गतम् । 'इन्द्राग्नी मे'* इत्यादिभिः

*सं. ३-३-३.[22—23] †सं. २-३-११.[7]

वा आपो भेषजमेव कुरुते ॥१०॥
वायुरसि प्राणो नाम सवितुराधि-

आपः । भेषजम् । एव । कुरुते ॥ १० ॥
उग्रा एत्यापस्त्रीणि च ॥४॥

[1]वायुः । असि । प्राण इति प्र—अनः । नाम । सवितुः । आधिपत्य इत्याधि—पत्ये । अपानमि-

अन्तर्वेद्यद्भिर्मार्जयन्ते इति ॥

इति तृतीये तृतीये चतुर्थोनुवाकः.

---

[1]अथ पृश्नीनां ग्रहणं—संतृप्तं राजानं दशधा व्यूह्याभिमृशति—वायुरसि प्राणो नामेत्यादिभिः दश भागान्, ते एते संवत्सरसाक्षीये[ध्ये]ष्वहस्सु गृह्यन्ते । यत्र क्वचैवैतान् गृह्णीयादित्येतदपरम् । तत्रादितः पञ्च यजूंषि, उत्तराः पञ्च एकपदा गायत्र्यः 'ऋतस्य त्वा व्योमने'* इत्यादयः ॥ हे सोम वायुरसि बहिः प्राणो नामासि पीतस्त्वमेव । यज्ञद्वारेण वृष्ट्यादिक्रमेण च सर्वं त्वया प्रेर्यते । स त्वं सवितुराधिपत्ये स्थित्वा अपानं अपानादिं मे मह्यं दाः देहि । सर्वप्राणवृत्तीनामुपलक्षणतया प्रधानयोरुपादानम् । ब्राह्मणं च भवति 'प्राणापानावेवावरुन्धे'† इति । पीतः स त्वं मम प्राणादीन् सम्यक्प्रेरयसि । ददातेर्लेटि शपो लुक् । अधिपतिशब्दाद्ब्राह्मणादित्वात् ष्यञ् ॥

*सं. ३-३-५.[5] †सं. -३-३-५.[11]

पत्येऽपानं मे दाश्चक्षुरसि श्रोत्रं
नाम धातुराधिपत्य आयुर्मे दा रू-
पमसि वर्णो नाम बृहस्पतेराधिपत्ये
प्रजां मे दा ऋतमसि सत्यं नामे-

त्यप–अनम् । मे । दाः । [2]चक्षुः । असि । श्रो-
त्रम् । नाम । धातुः । आधिपत्य इत्याधि–पत्ये ।
आयुः । मे । दाः । [3]रूपम् । असि । वर्णः । ना-
म । बृहस्पतेः । आधिपत्य इत्याधि–पत्ये । प्रजा-
मिति प्र–जाम् । मे । दाः । [4]ऋतम् । असि ।
सत्यम् । नाम । इन्द्रस्य । आधिपत्य इत्याधि–प-

---

[2]चक्षुरसि, श्रोत्रादिकं च त्वमेव नामासि पीतः तत्सामर्थ्यो-त्पादनात् । स त्वं धातुः सर्वस्य विधातुराधिपत्ये स्थित्वा आ-युर्मे मह्यं देहि सर्वेन्द्रियसामर्थ्योपेतं दीर्घमायुर्मे देहि ॥

[3]रूपमसि शोभनं वर्णो मृजा च त्वमेवासि पीतः । स त्वं रूपादिसमृद्धिकारिणः बृहस्पतेराधिपत्ये स्थित्वा प्रजां प्रजननशक्तिं रूपादिसमृद्धिं पुत्रादिपोषं मे देहि ॥

[4]ऋतमसि सत्यं त्वमेवासि । मानसं तथ्यमृतं, वाचिकं सत्यं, तदुभयमपि त्वत्पानाद्भवति । स त्वमिन्द्रस्य सत्यात्मनः आधिपत्ये स्थित्वा क्षत्रं बलं सत्यहेतुकं मे देहि ॥

न्द्रस्याधिपत्ये क्षत्रं मे दा भूतमसि
भव्यं नाम पितॄणामाधिपत्येऽपा-
मोषधीनां गर्भं धा ऋतस्य त्वा
व्योमन ऋतस्य ॥ ११ ॥ त्वा वि-

त्ये । क्षत्रम् । मे । दाः । [5]भूतम् । असि । भ-
व्यम् । नाम । पितॄणाम् । आधिपत्य इत्याधि—प-
त्ये । अपाम् । ओषधीनाम् । गर्भम् । धाः । [9]ऋ-
तस्य । त्वा । व्योमन इति वि—ओमने । [7]ऋतस्य ।

---

[5]भूतमसि, भव्यं वर्तमानं, उपलक्षणत्वाच्च भविष्यच्च त्वमेवासि त्रैकाल्यवर्ती त्वमेव सः यज्ञद्वारेण जनयसि, स त्वं पितॄणां जनयितॄणाम् ॥

[6]ऋतस्य व्योम पृथिवी । ब्राह्मणं च भवति 'द्यावापृथिव्योर्हि यज्ञः'* इति, 'इयं वा ऋतस्य व्योम'† इति च । पृथिवीजयार्थं त्वां गृह्णामीति । तादर्थ्ये चतुर्थी । अवतेर्मनिन्प्रत्यये 'ज्वरत्वर' इत्यादिना ऊठि गुणः, उपधालोपाभावश्छान्दसः, विविधं ओम व्योम इति प्रादिसमासे अव्ययपूर्वपदप्रकृतिस्वरत्वम्; 'उदात्तस्वरितयोर्यणः' इत्योकारस्स्वर्यते ॥

[7]ऋतस्य विभूम विविधं भावयितृ अवकाशप्रदानादिना अन्तरिक्षम्, ब्राह्मणं च—'अन्तरिक्षं वा ऋतस्य विभूम'† इति, 'अन्तरिक्षे हि यज्ञः'* इति च । अन्तरिक्षस्य जयार्थं त्वां गृह्णामीति । सर्वत्र पूर्ववत्प्रत्ययस्स्वरश्च, गुणाभावश्छान्दसः ॥

---

*सं. ६-१-२. †सं. ३-३-५[16—17]

भूमन ऋतस्य त्वा विधर्मण ऋत-
स्य त्वा सत्यायर्तस्य त्वा ज्योतिषे
प्रजापतिर्विराजमपश्यत्तया भूतं च
भव्यं चासृजत तामृषिभ्यस्ति-

११॥ त्वा । विभूमन इति वि-भूमने । [8]ऋतस्य ।
त्वा । विधर्मण इति वि-धर्मणे । [9]ऋतस्य । त्वा ।
सत्याय । [10]ऋतस्य । त्वा । ज्योतिषे । [11]प्रजापति-
रिति प्रजा-पतिः । विराजमिति वि-राजम् ।
अपश्यत् । तया । भूतम् । च । भव्यम् । च ।
असृजत । ताम् । ऋषिभ्य इत्यृषि-भ्यः । तिरः ।

[8]ऋतस्य विधर्म विविधं धारयितृ वृष्ट्यादिना द्यौः देवलोकः ।
'द्यौर्वा ऋतस्य विधर्म'* इत्यादि ब्राह्मणम् । प्रत्ययादि पूर्ववत् ॥

[9]ऋतस्य सत्यं अविनाशित्वं, तत्कारिण्यो दिशः । दिक्षु हि
विस्तीर्णे नश्यतीति । यद्वा—ऋतस्य सत्यं सद्भावः तच्च प्रागा-
दिदिशाम् । ब्राह्मणं च—'दिशो वा ऋतस्य सत्यम्'† इति ॥

[10]ऋतस्य ज्योतिः सुवर्गः सुखैकरूपः, तत्र हि यज्ञो द्यो-
तते फलसंपत्त्या विराजते । ब्राह्मणं च 'सुवर्गो वै लोक
ऋतस्य ज्योतिः'‡ इति ॥

[11]अथैतेषां एश्नीनामेव ब्राह्मणं—प्रजापतिरित्यादि ॥ विरा-
ड्दशाक्षरा, गौर्वा । ऋषिभ्यस्तिरोदधात् तिरोहितामकरोत् । जम-

*सं. ३-३-५.[18] †सं. ३-३-५.[19] ‡सं.-३-३-५.[20]

रोऽदधात्तां जमदग्निस्तपसाऽपश्यत्त-
या वै स पृश्नीन्कामानसृजत तत्पृ-
श्नीनां पृश्नित्वं यत्पृश्नयो गृह्यन्ते
पृश्नीनेव तैः कामान् यजमानोऽव
रुन्धे वायुरसि प्राणः ॥ १२ ॥ ना-
मेत्याह प्राणापानावेवाव रुन्धे च-

अदधात् । ताम् । जमदग्निः । तपसा । अपश्यत् ।
तया । वै । सः । पृश्नीन् । कामान् । असृजत ।
तत् । पृश्नीनाम् । पृश्नित्वमिति पृश्नि—त्वम् । यत् ।
पृश्नयः । गृह्यन्ते । पृश्नीन् । एव । तैः । कामान् ।
यजमानः । अवेति । रुन्धे । वायुः । असि । प्रा-
ण इति प्र—अनः ॥ १२ ॥ नाम । इति । आह ।
प्राणापानाविति प्राण—अपानौ । एव । अवेति ।

---

दग्निस्तां दृष्ट्वा विराजं पृश्नीन् कामहेतुभूतान् अत एव कामान् सर्वैः काम्यमानान् प्राणादिकामधुक्त्वात् 'वायुरसि प्राणो नाम'* इत्यादिकान् ग्रहान् असृजत, तत्पृश्निग्रहाणां पृश्नित्वम्, पृश्निस्थान्कामान् प्राणादीन् दश यजमानोवरुन्धे । अधुना ग्रहान् तांश्च क्रमेण दर्शयति—वायुरसीत्यादि । सर्वप्राणतृप्त्युपलक्षणं प्राणापानग्रहणम् ॥

---

*सं. ३-३-५.[1]

क्षुरसि श्रोत्रं नामेत्याहायु रेवावं
रुन्धे रूपमसि वर्णो नामेत्याह प्र-
जामेवाव रुन्ध ऋतमसि सत्यं ना-
मेत्याह क्षत्रमेवाव रुन्धे भूतमसि
भव्यं नामेत्याह पशवो वा अपा-
मोषधीनां गर्भः पशू नेव ॥ १३ ॥

रुन्धे । [12]चक्षुः । असि । श्रोत्रम् । नाम । इति । आह । आयुः । एव । अवेति । रुन्धे । [13]रूपम् । असि । वर्णः । नाम । इति । आह । प्रजामिति प्र—जाम् । एव । अवेति । रुन्धे । [14]ऋतम् । असि । सत्यम् । नाम । इति । आह । क्षत्रम् । एव । अवेति । रुन्धे । [15]भूतम् । असि । भव्यम् । नाम । इति । आह । पशवः । वै । अपाम् । ओषधीनाम् । गर्भः । पशून् । एव ॥ १३ ॥ अवेति ।

[12]आयुरेवेति चक्षुराद्युपेतम् ॥

[13]रूपं प्रजां रूपवर्णोपेतम् ॥

[14]क्षत्रमिति ॥ बलं सत्यहेतुकम् ॥

[15]पशवो वा इति ॥ परम्परया अबादिप्रभवत्वात् । एतावदिति । पुरुषस्य परिकरवत् प्रत्यासज्ज्य स्थितं एतावत्प्राणादि पश्वन्त-मेतत्सर्वमवरुन्धे एभिः प्रश्निभिः दशभिः । 'अभितःपरितः' इति द्वितीया ॥

अवं रुन्ध एतावद्वै पुरुषं परितस्तदे-
वावं रुन्ध ऋतस्यं त्वा व्योमन्
इत्याहेयं वा ऋतस्य व्योमेमामेवा-
भि जंयत्यृतस्यं त्वा विभूमन् इत्या-
हान्तरिक्षं वा ऋतस्य विभूमान्तरि-
क्षमेवाभि जंयत्यृतस्यं त्वा विधर्मण

रुन्धे । एतावंत् । वै । पुरुषम् । परितः । तत् । एव । अवेति । रुन्धे । [16]ऋतस्यं । त्वा । व्योमन् इति वि-ओमने । इति । आह । इयम् । वै । ऋतस्यं । व्योमेति वि-ओम । इमाम् । एव । अभीति । जयति । [17]ऋतस्यं । त्वा । विभूमन् इति वि-भूमने । इति । आह । अन्तरिक्षम् । वै । ऋतस्यं । विभूमेति वि-भूम । अन्तरिक्षम् । एव । अभीति । जयति । [18]ऋतस्यं । त्वा । विधर्मण-इति वि-धर्मणे । इति । आह । द्यौः । वै । ऋ-

---

[16—18]इयं वा इति ॥ पृथिवी यज्ञश्च विविधं रक्षितौ 'द्यावापृथिव्योर्हि यज्ञः'* इति । तस्मात् षष्ठेन पृश्निना पृथिवीमेवाभिजयति । एवमुत्तरेषु द्रष्टव्यम् ॥

---

*सं. २-६-९.1

इत्याह द्यौर्वा ऋतस्य विधर्म दिवं-
मेवाभि जयत्यृतस्य ॥ १४ ॥ त्वा
सत्यायेत्याह दिशो वा ऋतस्य स-
त्यं दिश एवाभि जयत्यृतस्य त्वा
ज्योतिष इत्याह सुवर्गो वै लोक
ऋतस्य ज्योतिस्सुवर्गमेव लोक-

तस्य । विधर्मेति वि–धर्म । दिवम् । एव । अभी-
ति । जयति । [19]ऋतस्य ॥ १४ ॥ त्वा । सत्याय ।
इति । आह । दिशः । वै । ऋतस्य । सत्यम् ।
दिशः । एव । अभीति । जयति । [20]ऋतस्य । त्वा ।
ज्योतिषे । इति । आह । सुवर्ग इति सुवः–गः ।
वै । लोकः । ऋतस्य । ज्योतिः । सुवर्गमिति सु-
वः–गम् । एव । लोकम् । अभीति । जयति ।
एतावन्तः । वै । देवलोका इति देव–लोकाः । तान् ।

---

[19]दिशो वा इति ॥ यज्ञस्य सत्यत्वस्य दिगधीनत्वाद्दिक्षु हि विस्तीर्णं अनपायं भवतीति ॥

[20]सुवर्ग इति ॥ यज्ञस्य द्योतनस्थानं स्वर्गः, तत्र हि यज्ञो द्योतते फलाविर्भावेन । एतावन्त इत्यादि । पृथिव्यादिस्वर्गान्ता देवलोकाः यज्ञाधिकरणत्वेन देवस्थानानि, तान् सर्वानभिजयत्येतेन

मभि जयत्येतावन्तो वै देवलोका-
स्तानेवाभि जयति दश सं पद्यन्ते
दशाक्षरा विराडन्नं विराड्विराज्येवा-
न्नाद्ये प्रति तिष्ठति ॥ १५ ॥
देवा वै यद्यज्ञेन नावारुन्धत तत्प-

एव । अभीति । जयति । दश । समिति । पद्य-
न्ते । दशाक्षरेति दश-अक्षरा । विराडिति वि-
राट् । अन्नम् । विराडिति वि-राट् । विराजीति
वि-राजि । एव । अन्नाद्य इत्यन्न-अद्ये । प्रतीति ।
तिष्ठति ॥ १५ ॥

व्योमन ऋतस्य प्राणः पशूनेव विधर्म दिवमे-
वाभि जयत्यृतस्य षट्चत्वारिंशच्च॥५॥

[1]देवाः । वै । यत् । यज्ञेन । न । अवारुन्धते-

पञ्चभिः पृश्निभिः । दश सम्पद्यन्ते इत्यादि । गतम्* । विरा-
जमानेऽन्नाद्ये प्रतितिष्ठति । अन्नस्यादनमन्नाद्यं, छान्दसो यत् ॥

इति तृतीये तृतीये पञ्चमोनुवाकः.

---

[1]अथ परस्साम्नां ग्रहणं विधास्यन् तत्स्तुतिं तावदाह—देवा
वा इत्यादि ॥ यज्ञेन केवलेन परस्सामरहितेन यदभिमतं तन्ना-

*सं. २-६-१.[5]

रैरेवारुन्धत तत्पराणां परत्वं यत्परे
गृह्यन्ते यदेव यज्ञेन नावरुन्धे त-
स्यावरुध्यै यं प्रथमं गृह्णातीममेव
तेनं लोकमभि जयति यं द्वितीयम-
न्तरिक्षं तेन यं तृतीयममुमेव तेन

त्यंव–अरुन्धत। तत्। परैः। अवेति। अरुन्धत।
तत्। पराणाम्। परत्वमिति पर–त्वम्। यत्।
परे। गृह्यन्ते। यत्। एव। यज्ञेन। न। अवरुन्ध-
इत्यव–रुन्धे। तस्य। अवरुध्या इत्यव–रुध्यै। यम्।
प्रथमम्। गृह्णाति। इमम्। एव। तेन। लोकम्।
अभीति। जयति। यम्। द्वितीयम्। अन्तरिक्षम्।
तेन। यम्। तृतीयम्। अमुम्। एव। तेन। लो-

---

वारुन्धत नालभन्त। तत्परैः परस्सामभिः अवारुन्धत। तत्प-
राणां परत्वम्। पारयन्ति पूरयन्त्यभीष्टमिति पराः, 'ऋदो-
रप्' इति अप्। यत्परे। असर्वनामत्वाद्व्यत्ययेन शीभावः।
यदेव तेन यज्ञेन नावारुन्धत तस्यावरुद्ध्यै भवति एतेषां ग्रह-
णम्। यं प्रथममित्यादि। इमं मनुष्यलोकमभिजयति। यं
द्वितीयमिति। गृह्णातीत्येव। अन्तरिक्षं तेनाभिजयतीत्येव।
यं तृतीयमिति। गृह्णातीत्येव। यदेते इति। एते सर्वेऽपि
यद्गृह्यन्ते एतेषां सर्वेषां लोकानामभिजयाय भवति। 'तादौ च'
इति गतेः प्रकृतिस्वरत्वम्, 'ऊडिदम्' इति षष्ठ्या उदात्तत्वम्॥

लोकमभि जंयति यदेते गृह्यन्तं एषां लोकानांमभिजित्यै ॥ १६ ॥ उत्तरेष्वहंस्स्वमुतोर्वाञ्चो गृह्यन्तेऽभिजित्यैवेमाल्लोकान्पुनंरिमं लोकं प्रत्यवंरोहन्ति यत्पूर्वेष्वहंस्स्वतः प-

कम् । अभीति । जयति । यत् । एते । गृह्यन्तें । एषाम् । लोकानांम् । अभिजित्या इत्यभि-जित्यै ॥ १६ ॥ [2]उत्तरेष्वित्युत्-तरेषु । अहस्स्वित्यहंः-सु । अमुतंः । अर्वाञ्चंः । गृह्यन्ते । अभिजित्येत्यंभि-जित्यं । एव । इमान् । लोकान् । पुनंः । इमम् । लोकम् । प्रत्यवंरोहन्तीति प्रति-अवंरोहन्ति ।

---

[2]उत्तरेष्वित्यादि ॥ वैषुवतादह्न उत्तरेषु त्रिष्वहस्सु अन्वहं अमुतः तृतीयदिनप्रभृति अर्वाञ्चः आवृत्ताः प्रतिलोमगतयो गृह्यन्ते । यथा—प्रथमेऽह्नि तृतीयः, द्वितीये द्वितीयः, तृतीये प्रथम इति । एवमिति । इमान् लोकान् अभिजित्य, इममेव लोकं पुनः प्रत्यवरोहन्ति । यत्पूर्वेष्विति । वैषुवतात्पूर्वेषु त्रिष्वहस्सु इतः प्रथमदिनप्रभृति पराञ्चः अनुलोमगतयः प्रथमादितृतीयान्ता गृह्यन्ते । तस्मादितो मनुष्यलोकादारम्य पराञ्च इमे लोकाः, भूरिति प्रथमलोकः, अन्तरिक्षं द्वितीयलोकः, द्यौस्तृतीय इति । यदुत्तरेष्वित्यादि । ततो द्युलोकादर्वाञ्चो लोका भवन्ति तत्रस्थानां हि द्यौः प्रथमो लोकः, अन्तरिक्षं द्वितीयः, भूस्तृतीय इति । तस्मा-

रांञ्चो गृह्यन्ते तस्मादितः पराञ्च इमे
लोका यदुत्तरेष्वहस्स्वमुतोर्वाञ्चो गृ-
ह्यन्ते तस्मादमुतोर्वाञ्च इमे लोका-
स्तस्मादयातयाम्नो लोकान्मनुष्या
उप जीवन्ति ब्रह्मवादिनो वदन्ति
कस्मात्सत्यादद्भ्य ओषधयस्सं भव-

यत् । पूर्वेषु । अहस्स्वित्यहः—सु । इतः । पराञ्चः ।
गृह्यन्ते । तस्मात् । इतः । पराञ्चः । इमे । लोकाः ।
यत् । उत्तरेष्वित्युत्—तरेषु । अहस्स्वित्यहः—सु ।
अमुतः । अर्वाञ्चः । गृह्यन्ते । तस्मात् । अमुतः ।
अर्वाञ्चः । इमे । लोकाः । तस्मात् । अयातयाम्न
इत्ययात—याम्नः । लोकान् । मनुष्याः । उपेति ।
जीवन्ति । [3]ब्रह्मवादिन इति ब्रह्म—वादिनः । वद-
न्ति । कस्मात् । सत्यात् । अद्भ्य इत्यत्—भ्यः । ओ-

---

दिति । अयातयाम्नोऽगतरसान् अपुनर्मुक्तसारान् लोकान् मनु-
ष्यादय उपजीवन्ति । 'वैषुवतेषु हि पराञ्चश्च अर्वाञ्चश्च गृह्यन्ते'
इत्याचार्योक्तम् ॥

[3]ब्रह्मवादिन इत्यादि ॥ कस्मात्सत्यात् कारणात् अद्भ्य ओ-
षधयस्सम्भवन्ति उत्पद्यन्ते? कस्माच्च कारणात्ता ओषधयः मनुष्या-
णामन्नं भवति? कस्माच्च पुनः कारणात् अन्नस्य दात्र्यः प्रजाः प्रजा-

न्त्योषधयः ॥ १७ ॥ मनुष्याणामन्नं प्रजापतिं प्रजा अनु प्र जायन्त इति परानन्विति ब्रूयाद्यद्गृह्णात्यद्भ्यस्त्वौषधीभ्यो गृह्णामीति तस्माद्द्भ्य ओषधयस्सं भवन्ति यद्गृह्णात्योषधी-

षधयः । समिति । भवन्ति । ओषधयः ॥ १७ ॥ मनुष्याणाम् । अन्नम् । प्रजापतिमिति प्रजा–पतिम् । प्रजा इति प्र–जाः । अनु । प्रेति । जायन्ते । इति । परान् । अन्विति । इति । ब्रूयात् । यत् । गृह्णाति । अद्भ्य इत्यत्–भ्यः । त्वा । ओषधीभ्य इत्योषधि–भ्यः । गृह्णामि । इति । तस्मात् । अद्भ्य इत्यत्–भ्यः । ओषधयः । समिति । भवन्ति ।

---

पतिमनुप्रजायन्ते? । लक्षणेऽनोः कर्मप्रवचनीयत्वम् । प्रजापतिहेतुका उत्पद्यन्ते । इति ब्रह्मवादिनः प्रश्नं वदन्ति । परानिति । परान् परस्साम्नो ग्रहान् अनु एतत्त्रितयं ब्रूयात् उत्तरम् । पूर्ववत्कर्मप्रवचनीयत्वम् ॥

[4]एवं सामान्येनोक्त्वा एकैकत्वेनाचष्टे—यदित्यादि ॥ अद्भ्यस्त्वौषधीभ्यो गृह्णामीति प्रथमो गृह्यते । अद्भ्यस्त्वा गृह्णामीति किमर्थम्? (प्रजाभ्यः प्रजार्थं) ओषधीभ्यः ओषध्यर्थम् । अद्भ्य ओषधयस्संभवन्तीति । यद्वा—अद्भ्यस्त्वौषधीभ्यश्च त्वामिति किमर्थम्? उत्पाद्योत्पादकभावोस्त्वासामिति । तस्मादिति । गतम् ॥

भ्यस्त्वा प्रजाभ्यो गृह्णामीति तस्मा-
दोषधयो मनुष्याणामन्नं यद्गृह्णाति प्र-
जाभ्यस्त्वा प्रजापतये गृह्णामीति त-
स्मात्प्रजापतिं प्रजा अनु प्र जायन्ते॥

[5]यत् । गृह्णाति । ओषधीभ्य इत्योषधि–भ्यः । त्वा । प्रजाभ्य इति प्र–जाभ्यः । गृह्णामि । इति । तस्मात् । ओषधयः । मनुष्याणाम् । अन्नम् । [6]यत् । गृह्णाति । प्रजाभ्य इति प्र–जाभ्यः । त्वा । प्रजापतय इति प्रजा–पतये । गृह्णामि । इति । तस्मात् । प्रजापतिमिति प्रजा–पतिम् । प्रजा इति प्र–जाः । अनु । प्रेति । जायन्ते ॥ १८ ॥

अभिजित्या ओषधयोष्टाचत्वारिंशच्च ॥ ६ ॥

[5]ओषधीभ्यस्त्वा प्रजाभ्यो गृह्णामीति द्वितीयो गृह्यते । ओषधीभ्यस्त्वा गृह्णामीति किमर्थम्? प्रजाभ्यः प्रजार्थं प्रजानामन्नं ओषधयो भवन्त्विति । तस्मादिति । गतम् । उभयीभ्यो वा ग्रहणं, पूर्ववदुत्पाद्योत्पादकभावो भवत्वासामिति ॥

[6]प्रजाभ्यस्त्वा प्रजापतये गृह्णामीति तृतीयो गृह्यते । प्रजाभ्यस्त्वा गृह्णामीति किमर्थम्? प्रजापतये प्रजापत्यर्थं प्रजानां हेतुभावमापद्यतामिति, प्रजापतिमनुप्रजायन्तामित्यर्थः । तस्मादिति । गतम् । सहग्रहणं वा वाच्यं उभयोर्हेतुहेतुमद्भावो भवत्विति ॥

इति तृतीये तृतीये षष्ठोऽनुवाकः.

प्रजापतिर्देवासुरानसृजत तदनु य-
ज्ञोऽसृज्यत यज्ञं छन्दाꣳसि ते वि-
ष्वञ्चो व्यक्रामन्त्सोसुराननु यज्ञोपा-
क्रामद्यज्ञं छन्दाꣳसि ते देवा अम-
न्यन्तामी वा इदमभूवन् यद्वयꣳ
स्म इति ते प्रजापतिमुपाधावन्त्सो-

[1]प्रजापतिरिति प्रजा—पतिः । देवासुरानिति-
देव—असुरान् । असृजत । तत् । अन्विति । यज्ञः ।
असृज्यत । यज्ञम् । छन्दाꣳसि । ते । विष्वञ्चः ।
वीति । अक्रामन् । सः । असुरान् । अन्विति । यज्ञः ।
अपेति । अक्रामत् । यज्ञम् । छन्दाꣳसि । ते । देवाः ।
अमन्यन्त । अमी इति । वै । इदम् । अभूवन् ।
यत् । वयम् । स्मः । इति । ते । प्रजापतिमिति प्रजा—

---

[1]प्रजापतिर्देवासुरानित्यादि ॥ देवासुरसृष्ट्यनन्तरं यज्ञोसृज्यत । यज्ञमनु छन्दांस्यसृजत । ततस्ते देवासुराः प्रथमसृष्टाः विष्वञ्चो नान्य[ना]गतयो व्यक्रामन् विशिष्टा आगच्छन् । यज्ञोसुरपक्षसमाश्रयेण प्रजापतिसकाशादपाक्रामत्, यज्ञमनु छन्दांस्यपाक्रामन् । ते तादृशाः यज्ञेन छन्दोनिश्चयविरहिता देवाः अमन्यन्त अमी असुरा यज्ञवन्तः, छन्दस्वन्तश्च । एते इदं विश्वमभूवन् यद्विश्वं वयं स्मः, विश्वस्य वयमीशितारस्स्मः । इदानीं त्वसुराः विश्वस्येशितारोभूवन् । ते देवाः तथाविधं परिभवमसहमानाः प्रजा-

ब्रवीत्प्रजापतिश्छन्दसां वीर्यमादाय तद्वः प्र दास्यामीति स छन्दसां वीर्यम् ॥ १९ ॥ आदाय तदेभ्यः प्रायच्छत्तदनु छन्दाꣳस्यपाक्रामञ्छन्दाꣳसि यज्ञस्ततो देवा अभवन्परा ऽसुरा य

पतिम् । उपेति । अधावन्न् । सः । अब्रवीत् । प्रजापतिरिति प्रजा–पतिः । छन्दसाम् । वीर्यम् । आदायेत्या–दाय । तत् । वः । प्रेति । दास्यामि । इति । सः । छन्दसाम् । वीर्यम् ॥ १९ ॥ आदायेत्या–दाय । तत् । एभ्यः । प्रेति । अयच्छत् । तत् । अन्विति । छन्दाꣳसि । अपेति । अक्रामन्न् । छन्दाꣳसि । यज्ञः । ततः । देवाः । अभवन्न् । परेति ।

---

पतिमुपाधावन् ईदृशाः स्म इति वदन्तः । अथ देवैरुपाश्रितस्स प्रजापतिरब्रवीत्—छन्दसां वीर्यं बलमादाय वो युष्मभ्यं तत्प्रदास्यामीति । स तथोक्तवान् तथैवाकरोत् । तच्च वीर्यमाश्रावणादिरूपं इदानीमेव वक्ष्यते । अथ यदैव छन्दोभ्यो वीर्यमादाय देवेभ्यो दत्तं तदनन्तरमेव छन्दांस्यसुरेभ्योऽपाक्रामन्, छन्दांस्यनु यज्ञोपाक्रामत्, ततोपक्रमाद्देवानुपागच्छत् छन्दांसि यज्ञश्च, यत्र छन्दसां वीर्यमवस्थितमिति सामर्थ्याद्गम्यते, ततो देवा अभवन् भूतिमन्तस्संपन्नाः, असुराश्च पराभूताः ॥

एवं छन्दसां वीर्यं वेदा श्रावयास्तु
श्रौषड्यज ये यजामहे वषट्कारो
भवत्यात्मना पराऽस्य भ्रातृव्यो भ-
वति ब्रह्मवादिनो वदन्ति कस्मै क-

असुराः । [2]यः । एवम् । छन्दसाम् । वीर्यम् । वेद ।
एति । श्रावय । अस्तु । श्रौषट् । यज । ये । यजा-
महे । वषट्कार इति वषट्-कारः । भवति । आत्मना ।
परेति । अस्य । भ्रातृव्यः । भवति । [3]ब्रह्मवादिन
इति ब्रह्म-वादिनः । वदन्ति । कस्मै । कम् ।

---

[2]अथ य एवं छन्दसां वीर्यं वेदेत्युक्ते किं पुनस्तच्छन्दसां वीर्यमित्याह—आश्रावयेत्यादि ॥ 'आश्रावय' इत्याश्रवणार्थं चतुरक्षरमध्वर्योः, इदं तुभ्यं दास्यामीति हविर्याज....[यागदेवतायै आभिमुख्येन श्रावयेति] । 'अस्तु श्रौषट्' इति प्रत्याश्रवणं चतुरक्षरं अग्नीधः । अस्तु प्रत्याश्रुतं हविर्देवतायै दातुमिति । 'यज' इति याज्यां ब्रूहीति द्व्यक्षरम् । 'ये यजामहे इति आरोहणार्थं पञ्चाक्षरं यष्टुमर्हन्तीति । वषट्कारो वौषट्छन्दः । एवमेतानि छन्दसामक्षरसंख्याविशेषाणां वीर्याणि समुद्धृत्य प्रजापतिना देवेभ्यो दत्तानीति यो वेद स भवत्यात्मना भूतिमान् स्वयं संपद्यते; अस्य तु भ्रातृव्यः शत्रुः पराभवति नश्यति ॥

[3]ब्रह्मवादिन इति ॥ कस्मै खलु कामायाध्वर्युराश्रावयतीति । किमिति वितर्के । सुखवाचीति केचित् । 'कस्मै कमग्निश्चीयते'*

---

*सं. ५-५-२.

मध्वर्युरा श्रावयतीति छन्दसां वी-
र्यायेति ब्रूयादेतद्वै ॥ २० ॥ छन्दसां
वीर्यमा श्रावयास्तु श्रौषड्यज ये
यजामहे वषट्कारो य एवं वेद स-
वीर्यैरेव छन्दोभिरर्चति यत्किं चार्च-

अध्वर्युः । एति । श्रावयति । इति । छन्दसाम् ।
वीर्याय । इति । ब्रूयात् । एतत् । वै ॥ २० ॥
छन्दसाम् । वीर्यम् । एति । श्रावय । अस्तु ।
श्रौषट् । यज । ये । यजामहे । वषट्कार इति-
वषट्-कारः । [4]यः । एवम् । वेद । सवीर्यैरिति स-
वीर्यैः । एव । छन्दोभिरिति छन्दः-भिः । अर्चति ।

---

इत्यादि च द्रष्टव्यम् । उपलक्षणं चेदं 'अध्वर्युराश्रावयति' इति—अध्व-र्य्वादयः प्रचरन्तः कस्मै प्रयोजनायाश्रावणादीनि कुर्वन्ति छन्द-सामिति । छन्दसां वीर्याय वीर्यवत्त्वाय पूर्वं प्रजापतिनोद्धृतवी-र्याणि छन्दांसि, तानीदानीं यागार्थं वीर्यवन्ति कर्तुं आश्रावणा-दीनि कुर्वन्तीति ब्रूयात् उत्तरम् । एतद्वा इत्यादि । गतम् ॥

[4]य एवं वेदेति ॥ विदित्वा कुर्वन्नेव सर्वार्यैश्छन्दोभिरर्चति देवतादिकमाराधयति यत्किंचिदस्यार्चनीयं अयज्ञसंयुक्तमपि ॥

ति यदिन्द्रो वृत्रमहन्नमेध्यं तद्यद्य-
तीनपावपदमेध्यं तदथ कस्मादैन्द्रो
यज्ञ आ सꣳस्थातोरित्याहुरिन्द्रस्य
वा एषा यज्ञिया तनूर्यद्यज्ञस्तामेव

यत्। किम्। च। अर्चति। [5]यत्। इन्द्रः। वृत्रम्। अहन्न्।
अमेध्यम्। तत्। यत्। यतीन्। अपावपदित्यप–
अवपत्। अमेध्यम्। तत्। अथ। कस्मात्।
ऐन्द्रः। यज्ञः। एति। सꣳस्थातोरिति सं–स्थातोः।
इति। आहुः। [6]इन्द्रस्य। वै। एषा। यज्ञिया।
तनूः। यत्। यज्ञः। ताम्। एव। तत्। यजन्ति।

---

[5]यदिन्द्र इत्यादि ॥ वृत्रस्य हननं यदिन्द्रेण कृतं तदमेध्यं अयज्ञार्हं चरितं, यच्च यतीनसुरविशेषानपावपत् अनाशयत् 'इन्द्रो यतीन् सालावृकेभ्यः प्रायच्छत्'* इत्याह तदप्ययज्ञार्हमस्य चरितम्। एवमयज्ञार्हं खल्वाचरितवानिन्द्रः। अथवेदानीं कस्मात्कारणात् ऐन्द्रो यज्ञ आ संस्थातोरा समाप्तेः, कथं वा इन्द्रोर्चनीयो भवतीत्याहुः ब्रह्मवादिनः। 'भावलक्षणे' इति तोसुन्, 'ययतोश्चातदर्थे' इत्युत्तरपदान्तोदात्तत्वम् ॥

[6]उत्तरमाह—इन्द्रस्य वा इत्यादि ॥ इन्द्रस्य द्वे तनू। काचित् वृत्रवधादि करोति, काचित् यज्ञात्मिका यष्टृभिरर्च्यते। तत्र

---

*सं. ६–२–७.

तद्यजन्ति य एवं वेदोपैनं यज्ञो न-
मति ॥ २१ ॥
आयुर्दा अग्ने हविषो जुषाणो घृत-
प्रतीको घृतयोनिरेधि । घृतं पीत्वा

यः । एवम् । वेद । उपेति । एनम् । यज्ञः । नम-
ति ॥ २१ ॥

छन्दसां वीर्यं वा एव तदष्टौ च ॥ ७ ॥

[1]आयुर्दा इत्यायुः-दाः । अग्ने । हविषः । जुषाणः ।
घृतप्रतीक इति घृत-प्रतीकः । घृतयोनिरिति घृत-
योनिः । एधि । घृतम् । पीत्वा । मधु । चारु । ग-

---

येयं यज्ञात्मिका एषा यज्ञिया यजनार्हा । यजनं यज्ञः ।
यजमानायैवेयं इन्द्रस्य तनूः तामिव यां तनुमेतैस्सवीर्यैः छन्दोभिः
यजन्ति अर्चयन्तीति । य एवमिति । गतम् ॥

इति तृतीये तृतीये सप्तमोनुवाकः.

---

[1]अवभृथमवैष्यन् आयुर्दा इति जुहोति त्रिष्टुभा ॥ व्याख्या-
ता चेयं 'त्वमग्ने रुद्रः'* इत्यत्र । हे अग्ने त्वमायुर्दाः, त्वमस्य

---

*सं. १-३-१४.[12]

मधु चारु गव्यं पितेव पुत्रमभि र-
क्षतादिमम् । आ वृश्चयते वा एतद्य-
जमानोग्निभ्यां यदेनयोश्शृतंकृत्या-
थान्यत्रावभृथमवैत्यायुर्दा अग्ने हवि-
षो जुषाण इत्यवभृथमवैष्यञ्जुहुया-
दाहुत्यैवैनौ शमयति नार्तिमार्छति

व्यम् । पिता । इव । पुत्रम् । अभीति । रक्षतात् । इमम् । [2]एति । वृश्चयते । वै । एतत् । यजमानः । अग्निभ्यामित्यग्नि–भ्याम् । यत् । एनयोः । शृत-कृत्येति शृत–कृत्य । अथ । अन्यत्र । अवभृथमित्यव–भृथम् । अवैतीत्यव–एति । आयुर्दा इत्यायुः –दाः । अग्ने । हविषः । जुषाणः । इति । अवभृथमित्यव–भृथम् । अवैष्यन्नित्यव–एष्यन् । जुहुयात् । आहुत्येत्या–हुत्या । एव । एनौ । शमयति ।

---

हविषः जुषाणः सेवमानः घृतप्रतीकः घृतारम्भः घृतस्योदकस्य योनिः कारणं भव । किं च—मधुरं गव्यं चारु घृतमिदं पीत्वा पितेव पुत्रमिमं यजमानं अभिरक्षतादिति ॥

[2]अथैतस्य मन्त्रस्य ब्राह्मणं—आवृश्च्यते इत्यादि ॥ यदेनयोः अग्न्योः शृतंकृत्य हविः अथान्यत्र गत्वा अवभृथमवैति

यजमानो यत्कुसीदम् ॥ २२ ॥
अप्रतीत्तं मयि येन यमस्य बलिना
चरामि । इहैव सन्निरवदये तदेतत्त-

न । आर्तिम् । एति । ऋच्छति । यजमानः । [3]यत् ।
कुसीदम् ॥ २२ ॥ अप्रतीत्तमित्यप्रति–इत्तम् ।
मयि । येन । यमस्य । बलिना । चरामि । इह ।
एव । सन्न् । निरवदय इति निः–अवदये । तत् ।

अवभृथेन प्रचरति । एतद्यजमानोग्निभ्यामावृश्च्यते विच्छिद्यते । तस्मादवभृथमवैष्यन् आयुर्दा जुहुयात् । आहुत्याऽनया एनौ अग्नी शमयत्येव । 'एत्येधत्यूठ्सु' इति वृद्धिः । ततश्च यजमानो नार्तिं गच्छति । 'उपसर्गादृतिधातौ' इति वृद्धिः ॥

[3]औपयजिरे अग्नौ बर्हिरुपोषयति—यत्कुसीदमिति त्रिष्टुभा ॥ 'मयि' इति प्रथमपादान्तः । 'तत्' इति तृतीयपादान्तः । यत् कुसीदं ऋणं अप्रतीत्तं अप्रत्यर्पितं वेदिस्तरणार्थं दर्भग्रहणेनोपलक्षितोहं चरामि बलित्वेनावश्यदेयत्वं लक्ष्यते यमः अग्निः, 'अग्निर्वाव यमः'* इति । तस्याग्नेः स्वभूतेन ऋणेन । यद्वा— अग्न्यर्थेन ऋणेन चरामि । तदेतत् ऋणमिहैव जन्मनि सन् वर्तमानः निरवदये अपाकरोमि । देङ् रक्षणे । यन्मया गृहीतं तस्यास्य बर्हिषो दहनेनेति भावः । हे अग्ने तत् तेनाहमनृणो भवामि भूयासम् । प्रतिपूर्वाद्ददातेः निष्ठायां 'अच उपसर्गात्तः' इति तादेशे 'दास्ति' इत्युपसर्गस्य दीर्घत्वम् । इत्तमिति इका-

*सं. ३-३-८.[8]

दंग्ने अनृणो भवामि। विश्वंलोप विश्वदावस्यं त्वाऽऽसञ्जुहोम्यग्धादेकोऽहुतादेकंस्समसनादेकंः । ते नंः कृ-

एतत् । तत् । अग्ने । अनृणः । भवामि । [4]विश्वंलोपेति विश्वं-लोप । विश्वदावस्येति विश्व-दावस्यं । त्वा । आसन्न् । जुहोमि । अग्घादित्यंग्ध-अत् । एकंः । अहुतादित्यंहुत-अत् । एकंः । समसनादिति समसन-अत् । एकंः । ते । नः । कृण्व-

रोपजनं पदकारा मन्यन्ते । इदन्तेर्वा [इन्दतेर्वा] छान्दसमित्तेति रूपम्॥

[4]यदि मिश्रमिव पापेन संसृष्टमिव चरेत् स्नातकः सः उपोषमाणे अरण्ये दाव्यं दहन्तमग्निमुपगम्याञ्जलिनोपस्तीर्णेनाभिघारितेन सक्तून् प्रदाव्ये तस्मिन् दाव्याग्नौ जुहोति—विश्वलोपेति यजुरादिकयाऽनुष्टुभा । 'अग्धादेकोहुतादेकः' इति प्रथमपादन्तः ॥ हे अग्ने विश्वलोप विश्व लुम्पति दहति । कर्मण्यण् । विश्वदावस्य विश्वस्य पापस्य दावस्य वनदहनस्य त्वा तव । वचन[विभक्ति] व्यत्ययः । आसन् आस्ये जुहोमि सक्तून् । यद्वा—विश्वस्य पापस्य लोप्तः हे सक्त्वञ्जले त्वां विश्वदावस्याग्नेरास्ये जुहोमि । 'पद्दन्' इत्यादिना आसन्भावः, 'सुपां सुलुक्' इति सप्तम्या लुक् । ध्वंसयते—अग्धात् । अत्तेः गतिकर्मणः निष्ठायां धत्वे अग्धम्, अहोमेनागतं हविः, तदत्तीति अग्धात् एकोग्निः । 'अदोनन्ने' इति विट् । अहुतस्यात्ता एकः । समसनस्य संक्षिप्तस्य

ण्वन्तु भेषजꣳ सदस्सहो वरेण्यम्।
अयं नो नभसा पुरस्सꣳस्फानो
अभि रक्षतु। गृहाणामसमर्त्यै बहवो
नो गृहा असन्। स त्वं नः ॥२३॥

न्तु । भेषजम् । सदः । सहः । वरेण्यम् । [5]अयम् । नः । नभसा । पुरः । सꣳस्फान इति सं–स्फानः । अभीति । रक्षतु । गृहाणाम् । असमर्त्या इत्यसं–ऋत्यै । बहवः । नः । गृहाः । असन् । [6]सः । त्वं । नः ॥ २३ ॥ नभसः । पते । ऊर्जम् । नः । धेहि ।

---

वा अत्ता एकः । एवं त एते त्रयोप्यग्नयः नोस्माकं भेषजं अनुपद्रवत्वं सदः स्थानं प्रशस्तं सहः बलं वरेण्यं वरणीयं अन्यदपि यच्छ्रेष्ठं तच्च कृण्वन्तु कुर्वन्तु । प्रचयात्समुच्चयो गम्यते ॥

[5]अयं न इत्यादयः अग्निवाय्वादित्यानामुपस्थानमन्त्राः । आद्ये अनुष्टुभौ, तृतीया पुरस्ताद्बृहती; प्रथमस्य द्वादशाक्षरत्वात् ॥ अयं नभसा नित्यबद्धेन तेजसा पुरः अग्रतः सर्वस्य वर्तते श्रेष्ठ इत्यर्थः । संस्फानः सम्यक् स्फावयिता सर्वेषाम् । स्फावयतेर्ल्युटि छान्दसो यलोपः । नोस्मानभिरक्षतु गृहाणामसमर्त्यै अविनाशार्थम् । ऋ गतौ, संपूर्वो विनाशे वर्तते, उपसर्गस्याकारोपजनः छान्दसस्सांहितिकः । ततश्च नोस्माकं बहवः गृहाः असन् सन्तु ॥

[6]अथ वायोः—हे नभसस्पते आकाशस्य पते हे वात 'षष्ठ्याः पतिपुत्र' इत्यादिना सत्वम्, 'सुबामन्त्रिते' इति परा-

नभसस्पत ऊर्जं नो धेहि भद्रयां ।
पुनर्नो नष्टमा कृधि पुनर्नो रयिमा
कृधि । देवं सꣳस्फान सहस्रपोष-
स्येशिषे स नो रास्वाज्यानिꣳ रा-
यस्पोषꣳ सुवीर्यꣳसंवत्सरीणाꣳ स्व-

भद्रयां । पुनः । नः । नष्टम् । एति । कृधि । पुनः ।
नः । रयिम् । एति । कृधि । [7]देवं । सꣳस्फानेति
सं–स्फान । सहस्रपोषस्येति सहस्र–पोषस्य । ई-
शिषे । सः । नः । रास्व । अज्यानिम् । रायः ।
पोषम् । सुवीर्यमिति सु–वीर्यम् । संवथ्सरीणामि-

---

ङ्ग्वद्भावः । स त्वमूर्जमन्नादिरसं अस्मभ्यमेव धेहि भद्रया वाचा ।
किंच—नोस्माकं नष्टं पुनराकृधि आनीय देहि, रयिं धनं च
प्रेप्सितं पुनःपुनः अजस्रमानीय देहि । करोतेर्लोटि शपो लुक्,
‘श्रुशृणुपॄकृ’ इति धिभावः ॥

[7]अथादित्यस्य—हे देव आदित्य संस्फान । गतम्* । सहस्र-
पोषस्य पश्वादिबहुपुष्टेः त्वमेवेशिषे । ‘ईशस्से’ इतीडागमः । स
त्वं नोस्मभ्यं रास्व देहि । व्यत्ययेनात्मनेपदम् । अज्यानिं अक्षी-
णत्वं अदारिद्र्यम् । ‘ग्लाम्लाज्याहाभ्यो निः’ । रायो धनस्य
पोषं पुष्टिम् । पूर्ववत्सत्वम् । सुवीर्यं शोभनवीर्यं संवत्सरीणां संव-
त्सरभाविनीं स्वस्तिं अविनाशं च देहि । ‘संपरिपूर्वात्ख च’ इति खः ॥

---

*सं. ३-३-८.[5]

स्तिम्। अग्निर्वाव यम इयं यमी कुसीदं वा एतद्यमस्य यजमान आ दत्ते यदोषधीभिर्वेदिꣳ स्तृणाति यदनुपौष्य प्रयायाद्ग्रीवबद्धमेनम्॥२४॥ अमुष्मिँल्लोके नेनीयेरन् यत्कुसीं-

तिं सं-वत्सरीणाम् । स्वस्तिम् । [8]अग्निः । वाव । यमः । इयम् । यमी । कुसीदम् । वै । एतत् । यमस्य । यजमानः । एति । दत्ते । यत् । ओषधीभिरित्योषधि-भिः । वेदिम् । स्तृणाति । यत् । अनुपौष्येत्यनुप-ओष्य । प्रयायादिति प्र-यायात् । ग्रीवबद्धमिति ग्रीव-बद्धम् । एनम् ॥२४॥ अमुष्मिन्न्। लोके । नेनीयेरन्न् । यत् । कुसीदम् । अप्रतीत्तमि-

[8]अथ 'यत्कुसीदम्'* इत्यादीनां मन्त्राणां ब्राह्मणम्—अग्निर्वावेत्यादि ॥ अग्निः यमः यदर्थमृणं गृह्णाति । इयं पृथिवी यमी यस्या ऋणं गृह्यते । यमस्य स्त्री यमी । अस्याः मन्त्रे श्रुताया अप्युपादानमुत्तमर्णप्रदर्शनार्थम् । कुसीदमेतत् अस्यास्सकाशात् यज्ञं निर्वर्तयितुं यजमानो गृह्णाति । यदोषधीभिरस्यास्स्वभूताभिः वेदिं स्तृणातीति । अस्याः सकाशादृणमिव गृहीत्वा । तस्मादस्यै धारयति ऋणमिति । अपरा योजना—यमोग्निरुत्तमर्णः । यम्या उपादानं प्रासङ्गिकं, धनसम्बन्धप्रदर्शि-

*सं. ३-३-८.[3]

दमप्रतीत्तं मयीत्युपौषतीहैव सन्
यमं कुसीदं निरवदायानृणस्सुवर्गं
लोकमेति यदि मिश्रमिव चरेदञ्ज-

त्यप्रति-इत्तम् । मयि । इति । उपेति । ओषति । इह । एव । सन् । यमम् । कुसीदम् । निरवदायेति निः-अवदाय । अनृणः । सुवर्गमिति सुवः-गम् । लोकम् । एति । [9]यदि । मिश्रम् । इव ।

---

नार्थं वा । यज्ञार्थमग्नेस्सकाशात् कुसीदं गृह्णाति यदोषधीभिः यमीद्वारेण अग्नेस्स्वभूताभिः वेदिं स्तृणाति तस्मादग्नये धारयति ऋणमिति । तस्मादेतद्बहिः यदनुपौष्य अदाहयित्वाऽध्वर्युणा यः प्रयायात् इतो लोकाद्यजमानः । उष दाहे, ण्यन्ताल्ल्यप् । एङि पररूपं प्राप्तं, प्रातिशाख्यकर्तां मते 'वृद्धिरेचि' इति वृद्धिर्लक्ष्यते । एनमृणिनं ग्रीवबद्धं ग्रीवायामृणपाशेन बद्धं अमुष्मिन् लोके परलोके नेनीयेरन् या*तयेयुः । 'ङ्यापोस्संज्ञाछन्दसोः' इति ह्रस्वत्वम् । यस्मादेवं तस्मात् 'यत्कुसीदम्' इति बर्हिरुपौषति दहत्यध्वर्युः । पूर्ववद्वृद्धिः । इहैव सन् यम यमार्थं ऋणं यमस्वभूतं वा निरवदाय अपाकृत्य अनृणो भूत्वा स्वर्गं लोकं गच्छतीति ॥

[9]अथ 'विश्वलोप'† इत्यादेर्ब्राह्मणं—यदीत्यादि ॥ यदि मिश्रमिव पापसंसृष्टमिव आचरेत् अभोज्यसंसृष्टमिवाश्नीयात् तच्छुद्ध्यर्थं

---

*क—घा. †सं. ३-३-८.[4]

लिना सक्तून्प्रदाव्ये जुहुयादेष वा
अग्निर्वैश्वानरो यत्प्रदाव्यस्स एवै-
नꣳस्वदयत्यह्नां विधान्यामेकाष्टका-
यामपूपं चतुश्शरावं पक्त्वा प्रातरे-

चरेत् । अञ्जलिना । सक्तून् । प्रदाव्य इति प्र–दा-
व्ये । जुहुयात् । एषः । वै । अग्निः । वैश्वानरः ।
यत् । प्रदाव्य इति प्र–दाव्यः । सः । एव । एनम् ।
स्वदयति । [10]अह्नाम् । विधान्यामिति वि–धान्याम् ।
एकाष्टकायामित्येक–अष्टकायाम् । अपूपम् । चतु-
श्शरावमिति चतुः–शरावम् । पक्त्वा । प्रातः ।

अञ्जलिना सक्तून् प्रदाव्ये दवाग्नौ ज्वलति 'विश्वलोप'* इति जुहुयात् । एष वा इत्यादि । वैश्वानरत्वेन प्रदाव्यस्तुतिः । एवैनं यजमानं स्वर्गं लोकं नयतीति । निवृत्तपापं स्वदयति स्वाघून्याशयति ॥

[10]अथात्र प्रयोगान्तरमाह—अह्नामित्यादि ॥ अह्नां विधानी एकाष्टका या संवत्सरस्य पत्नी । यथोक्तं—'एषा वै संवत्स-रस्य पत्नी यदेकाष्टका'† इति । विशेषणोपादानं अहस्सु कृतानां तदधीनत्वख्यापनार्थम् । यद्वा—अह्नामेकाहादीनां क्रतूनां विधानी संवत्सरस्य वा क्रतोः गवामयनस्य अवयवानामह्नां विधानी । तत्रारम्भात् 'संवत्सराय दीक्षिष्यमाणा एकाष्टकायां दीक्षेरन्'† इति

* सं ३-३-८[4]  † सं. ७-४-८.

तेन कक्षमुपौषेद्यदि ॥ २५ ॥ दहति पुण्यसमं भवति यदि न दहति पापसममेतेन ह स्म वा ऋषयः पुरा

एतेन । कक्षम् । उपेति । ओषेत् । यदि ॥ २५ ॥ दहति । पुण्यसममिति पुण्य-समम् । भवति । यदि । न । दहति । पापसममिति पाप-समम् । एतेन । ह । स्म । वै । ऋषयः । पुरा । विज्ञानेनेति

---

माघकृष्णाष्टमी एकाष्टका । 'अष्टका पितृदैवत्ये' इतीत्वाभावः । अस्यां अहोरात्रे अपूपं चतुश्शरावं चतुश्शरावपरिमाणम् । द्विप्रस्थः शरावः । 'अध्यर्धपूर्वात्' इति अर्हीयस्य लुक्, 'इगन्तकाल' इति पूर्वपदप्रकृतिस्वरत्वम् । पक्त्वा प्रातः उदिते आदित्ये अरण्ये अग्निमुपसमाधाय तत्र दीप्ते पूतीतृणसहितेन अपूपेन कक्षं वनं गहनमुपोषेत् दहेत् । अथैनमुद्गृह्णाति, विज्ञानमुपैति— यदि दहति सोऽग्निः कक्षं पुण्यसमं पुण्यानुरूपं भवति । यद्वा— आरभ्यमाणास्समास्संवत्सराः पुण्या अनुपद्रवाः अस्य भवन्ति । पुण्यत्वं समास्वासूचयतीति पुण्यसमम्, 'तिष्ठद्गुप्रभृतीनि च', 'कूलतीर' इत्यादिनोत्तरपदाद्युदात्तत्वम् । अनेन पुण्यतां ज्ञात्वा कर्मारभेतेति । यदि न दहति पापसममेतद्भवति । तदा तूष्णीमासीतेति । पूर्ववत्समासः, उत्तरपदाद्युदात्तत्वं च । 'निपातैर्यद्यदि' इति दहतीत्याख्यातं न निहन्यते । एतेन हि विज्ञानेन पुण्यापुण्यज्ञानोपायेन पुण्यतां सम्यग्ज्ञात्वा दीर्घसत्रं वर्षश-

विज्ञानेन दीर्घसत्रमुप यन्ति यो वा
उपद्रष्टारमुपश्रोतारमनुख्यातारं वि-
द्वान् यजते सममुष्मिंल्लोक इष्टा-
पूर्तेन गच्छतेऽग्निर्वा उपद्रष्टा वायुरु-
पश्रोताऽऽदित्योनुख्याता तान् य
एवं विद्वान् यजते सममुष्मिंल्लोक

वि-ज्ञानेन । दीर्घसत्रमिति दीर्घ-सत्रम् । उपेति ।
यन्ति । [11]यः । वै । उपद्रष्टारमित्युप-द्रष्टारम् । उ-
पश्रोतारमित्युप-श्रोतारम् । अनुख्यातारमित्यनु-
ख्यातारम् । विद्वान् । यजते । समिति । अमुष्मिन् ।
लोके । इष्टापूर्तेनेतीष्ट-पूर्तेन । गच्छते । अग्निः ।
वै । उपद्रष्टेत्युप-द्रष्टा । वायुः । उपश्रोतेत्युप-
श्रोता । आदित्यः । अनुख्यातेत्यनु-ख्याता । तान् ।
यः । एवम् । विद्वान् । यजते । समिति । अमु-
ष्मिन् । लोके । इष्टापूर्तेनेतीष्ट-पूर्तेन । गच्छते ।

---

तिकं वर्षसाहस्रिकं च ऋषयो वा ह स्म पुरा उपयन्ति उपायन् । 'लट् स्मे' इति लट् ॥

[11]अथोपस्थानमन्त्राणां ब्राह्मणं—यो वा इत्यादि ॥ उपद्रष्ट्रा-दीन् विद्वान् यो यजते सोमुष्मिन् लोके इष्टापूर्तेन इष्टापूर्तफलेन संगच्छते अविनष्टेन संयुज्यते । 'समो गमृच्छि' इत्यात्मनेपदम् ।

इष्टापूर्तेन गच्छतेऽयं नो नभसा
पुरः ॥ २६ ॥ इत्याहाग्निर्वै नभसा
पुरोऽग्निमेव तदाहैतन्मे गोपायेति स
त्वं नो नभसस्पत इत्याह वायुर्वै
नभसस्पतिर्वायुमेव तदाहैतन्मे गो-
पायेति देवं सꣳस्फानेत्याहासौ वा

अयम् । नः । नभसा । पुरः ॥ २६ ॥ इति ।
आह । अग्निः । वै । नभसा । पुरः । अग्निम् । ए-
व । तत् । आह । एतत् । मे । गोपाय । इति ।
[12]सः । त्वम् । नः । नभसः । पते । इति । आह ।
वायुः । वै । नभसः । पतिः । वायुम् । एव । तत् ।
आह । एतत् । मे । गोपाय । इति । [13]देवं । सꣳ-

---

इष्टं च पूर्तं चेष्टापूर्तं दैव्यं पित्र्यं च कर्म । सांहितिकं पूर्व-पदस्य दीर्घत्वम्, गवाश्वप्रभृतित्वादेकवद्भावः । अग्निर्वा इत्यादि । गतम् । इदानीं पदानि व्याचष्टे—अयं न इत्यादि । अग्निर्वै नभसा तेजसा पुरः अग्रेसरः सर्वस्य, तस्मादग्निमाह—एतद्गृहान् मे गोपायेति रक्षेति अनेन मन्त्रेण प्रार्थयते; अग्नेर्गृहपतित्वात् ॥

[12]वायुर्वै नभसस्पतिः आकाशस्य पालयिता, तस्माद्वायुमाह—एतदन्नं मे गोपाय नष्टमप्यानयेति प्रार्थयते ॥

[13]असौ वा आदित्यो देवः संस्फानः सम्यग्वर्धयिता प्रजानां

आदित्यो देवस्सꣳस्फानं आदित्य-
मेव तदांहैतन्मे गोपायेति॥ २७ ॥
एतं युवानं परि वो ददामि तेन

स्फानेति सं—स्फान । इति । आह । असौ । वै । आदित्यः । देवः । सꣳस्फान इति सं—स्फानः । आदित्यम् । एव । तत् । आह । एतत् । मे । गोपाय । इति ॥ २७ ॥

कुसीदं त्वं न एनमोषेद्यदि पुर आदित्यमेव
तदांहैतन्मे गोपायेति ॥ ८ ॥

[1]एतम् । युवानम् । परीति । वः । ददामि ।

---

धनानां च तस्मादादित्यमाह—एतन्मे प्रजादिकं गोपायेति भूयश्च पोषयेति प्रार्थयते । 'गुपूधूप' इत्यायप्रत्ययः ॥

इति तृतीये तृतीये अष्टमोनुवाकः.

---

[1]अथर्षभे जीर्णे गोष्वन्यं जीर्णाद्वृषभमपिसृजति—एतं युवानमिति त्रिष्टुभा ॥ हे गावः एतं युवानं जीर्णादन्यमृषभं वो युष्मभ्यं परिददामि, तेनानेन क्रीडन्तीः क्रीडन्त्यः चरत वर्तध्वम्, प्रियेण इष्टेन युवत्वात् नः अस्मान् मा शाप्त, अपि त्वनुगृह्णीत तरुणं

क्रीडन्तीश्चरत प्रियेण । मा नश्शाप्त
जनुषा सुभागा रायस्पोषेण समि-
षा मदेम । नमो महिम्न उत चक्षु-
षे ते मरुतां पितस्तदहं गृणामि ।
अनु मन्यस्व सुयजा यजाम जुष्टं

तेन । क्रीडन्तीः । चरत । प्रियेण । मा । नः ।
शाप्त । जनुषा । सुभागा इति सु-भागाः । रायः ।
पोषेण । समितिं । इषा । मदेम । [2]नमः । महिम्ने ।
उत । चक्षुषे । ते । मरुताम् । पितः । तत् । अ-
हम् । गृणामि । अन्विति । मन्यस्व । सुयजेति
सु-यजा । यजाम । जुष्टम् । देवानाम् । इदम् ।

---

ददातीति । हे जनुषा सुभागाः कल्याण्यः । यद्वा—सुभगाः सुष्ठु भाग्यवत्यः । प्रकृत्यादितृतीया, तेनाकारकत्वात्पराङ्गवद्भावाभावः; 'षष्ठ्यामन्त्रितकारकवचनम्' इत्युक्तत्वात् । ततश्च युष्मत्प्रसादात् रायो धनस्य पोषेण पुष्ट्या इषा अन्नेन च वयं संमदेम मोदेमहि । माद्यतेः व्यत्ययेन शप् । रायष्षष्ठ्यास्सत्वोदात्तत्वे उक्ते ॥

[2]इतरं त्वाष्ट्रं वैन्द्रं वा प्राजापत्यं वा पशुमालभते एतानि साङ्गस्य*देवताः । तस्योपाकरणमन्त्रः—नमो महिम्न इति त्रिष्टुप् ॥ आदित्यात्मना स्तूयते—नमो महिम्ने महते उत अपि च चक्षुषे सर्वेषां दर्शनभूताय हे मरुतां रश्मीनां पितः पाल-

---

*क. साण्डस्य.

देवानामिदमस्तु हव्यम् । देवाना-
मेष उपनाह आसीदपां गर्भ ओष-
धीषु न्यक्तः । सोमस्य द्रप्समवृणीत

अस्तु । हव्यम् । [3]देवानाम् । एषः । उपनाह इत्युप-नाहः । आसीत् । अपाम् । गर्भः । ओषधीषु । न्यक्त इति नि-अक्तः । सोमस्य । द्रप्सम् । अवृणी-

---

यितः । षष्ठ्यामन्त्रितसमुदायस्य पराङ्गवद्भावात् षाष्ठिकमामन्त्रिताद्युदात्तत्वम् । नमस्कृत्य त्वां तदहं गृणामि तत्तुभ्यं ब्रवीमि, तच्च त्वमनुमन्यस्व अनुजानीहि । किं ब्रवीषीति चेदाह—सुयजा शोभनयागस्य कर्त्राऽनेन प्रवृद्धेन यजाम इदमाशास्महे । सुपूर्वाद्यजतेर्विचि कृदुत्तरपदप्रकृतिस्वरत्वम् । सुयट् शोभनयष्टृकः, 'सुयजोर्ङ्वनिप्' इति बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । कीदृशमस्य सुयट्त्वम्? यत्त्वया प्रार्थ्यते इति चेत् जुष्टं प्रियं देवानामिदमस्तु हव्यम्, एतत्ते ब्रवीमीति, एतदनुमन्यस्व, एतस्मै प्रयोजनाय नमस्कुर्म इति । नित्यं मन्त्रे' इति जुष्टशब्द आद्युदात्तः । हवमर्हतीति, 'छन्दसि च' इति यः ॥

[3]वपां जुहोति—देवानामिति त्रिष्टुभा ॥ देवानां इन्द्रादीनां इन्द्रियाणां वा एषः गौः उपनाहः उपनह्यते अनेनेत्युपनाहः बन्धनः । घञ्, थाथादिनोत्तरपदान्तोदात्तत्वम् । उपकारको देवानामासीत् अस्तु । छान्दसो लङ् । कथमित्याह—अपां गर्भः आदित्यरश्मिषु गर्भीभूतः अपां राशिः ओषधीषु ओ-

पूषा ॥ २८ ॥ बृहन्नद्रिरभवत्तदेषाम्।
पिता वत्सानां पतिरघ्नियानामथो
पिता महतां गर्गराणाम् । वत्सो
जरायु प्रतिधुक्पीयूष आमिक्षा मस्तु

तु । पूषा ॥ २८ ॥ बृहन् । अद्रिः । अभवत् । तत् । एषाम् । [4]पिता । वत्सानाम् । पतिः । अघ्नियानाम् । अथो इति । पिता । महताम् । गर्गराणाम् । वत्सः । जरायु । प्रतिधुगिति प्रति–धुक् । पीयूषः ।

---

षधिनिमित्तं न्यक्तः वृष्ट्या न्यक्पातितः सम्यग्यागनिवृत्तिहेतुत्वादयं वृष्ट्युत्पादनेन ओषधीनामभिप्रवृत्तिनिमित्तत्वात् देवानामुपनाहो भवतीति। कथं पुनरपां गर्भभाव इत्याह—सोमस्यान्नस्य पृथिव्यां द्रप्सं रसं अवृणीत पूषा सविता रश्मिभिरात्तवान् । यद्वा—सोमस्य सलिलात्मनः चन्द्रस्य द्रप्समेकदेशं पार्थिवं बलमाप्तवान् पूषा । तत एषां द्रप्सानां रसानां तद्बृन्दं गर्भीभूय रश्मिषु चिरं स्थितं बृहत् महान् अद्रिर्मेघोभवत् भवति । स एव लङ् । स एव वृष्ट्या पृथिवीं प्राप्नोति, तत ओषधयस्संपद्यन्ते ताश्च देवता धारयन्तीति ॥

[4]अथास्य हविर्जुहोति—पिता वत्सानामिति त्रिष्टुभा ॥ पिता जनको वत्सानामर्भकाणामयमृषभः अघ्नियानां गवां पतिः पाता जनयिता रमयिता च । अथो अपि च महतां गर्गराणां महाशब्दानां महोक्षाणाम् । यद्वा—दध्नः पूर्णानां मथ्यमानानां महार-

घृतमस्य रेतः । त्वां गावोऽवृणत
राज्याय त्वाꣳ हवन्त मरुतस्स्वर्काः ।
वर्ष्मन्क्षत्रस्य ककुभि शिश्रियाण-

आमिक्षा । मस्तु । घृतम् । अस्य । रेतः । [5]त्वाम् ।
गावः । अवृणत । राज्याय । त्वाम् । हवन्त ।
मरुतः । स्वर्का इति सु-अर्काः । वर्ष्मन्न् । क्षत्रस्य ।

---

वाणां भाजनानां पिता उत्पादयिता । गृणातेर्यङ्लुगन्तात्पचाद्याचि छान्दसमाद्युदात्तत्वम् । किंच—वत्सो गर्भस्थः, जरायु तदाधारं, प्रतिधुक् दोहनस्थं दुग्धं, पीयूष ऊधस्स्थं, आमिक्षा आतञ्चनवत्, मस्तु नवनीतं, घृतं तदेवाग्निपाकवत्, एतानि सर्वाण्यस्य रेतः रेतसः परिणामः उपलक्षणत्वाद्दधितक्रादीन्यपि । एवं महाभागोयं देवांस्तर्पयत्विति ॥

[5]गोष्वपिसृष्टमपियन्तमनुमन्त्रयते—त्वां गाव इति त्रिष्टुभा । अपिसर्जनादनन्तरमिदं द्रष्टव्यम् ॥ हे वृषभ त्वां गावोऽवृणत वृतवत्यः राज्याय राजभावाय राजा भूयादयं न इति । पुरोहितादित्वाद्यक् । किञ्च—त्वां हवन्त ह्वयन्ते इत आरभ्य त्वामेवाह्वयन्ति मरुतः स्वर्काः शोभनगमनाः शोभनस्तुतयो वा । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । यद्वा—मरुतः देवाः स्वर्काः सुपूजनाः त्वया वृष्ट्युत्पादनाय षडावृत्त्याऽऽह्वयन्ते । छान्दसे लङि 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावः । स त्वं क्षत्रस्य बलस्य वर्ष्मन् वर्ष्मणि उच्छ्राये ककुभि प्रधाने शिश्रियाणः श्रयमाणः स्थितः । शपः श्लुः । यद्वा—क्षत्रस्य राजन्यस्य वर्ष्मन् महति ककुभि

स्ततो न उग्रो वि भंजा वसूनि ।
व्यृद्धेन वा एष पशुना यजते यस्यै-
तानि न क्रियन्ते एष ह त्वै समृद्धेन
यजते यस्यैतानि क्रियन्ते ॥ २९ ॥

ककुभि । शिश्रियाणः । ततः । नः । उग्रः । वीति । भज । वसूनि । [6]व्यृद्धेनेति वि-ऋद्धेन । वै । एषः । पशुना । यजते । यस्य । एतानि । न । क्रियन्ते । एषः । ह । तु । वै । समृद्धेनेति सं-ऋद्धेन । यजते । यस्य । एतानि । क्रियन्ते ॥ २९ ॥

पूषा क्रियन्त एषोऽष्टौ च ॥ ९ ॥

---

प्रधाने । किंपुनस्तत्? बलं रक्षकत्वं वा, तत्र स्थितो ह्यसि त्वम् । यत एवं ततो नोस्माकं उग्रः उद्गूर्णस्त्वं वसूनि धनानि गोरूपाणि विभज विविधं भज रक्षकभावेन गोषु वर्तस्वेत्यर्थः । 'द्व्यचोतस्तिङः' इति दीर्घत्वम् ॥

[6]अथात्रैव ब्राह्मणम्—व्यृद्धेनेति ॥ यस्य यजमानस्यैतानि कर्माणि 'एतं युवानम्'* इति मन्त्रसाध्यानि न क्रियन्ते, एषः व्यृद्धेन ऋद्धिहीनेन पशुना यजते । तत्करणे तु पशुयागस्समृद्धिहेतुरिति । उभयत्रापि 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरत्वम् । पूर्वत्र 'उदात्तस्वरितयोर्यणः' इति संहितायामृकारस्स्वर्यते । संहितायां तुशब्दस्यान्त्यलोपश्छान्दसः । ततःपरस्य वा वैशब्दस्यादिलोपः ॥

इति तृतीये तृतीये नवमोनुवाकः.

---

*सं. ३-३-९.1

सूर्यो देवो दिविषद्भ्यो धाता क्षत्रा-
यं वायुः प्रजाभ्यः। बृहस्पतिस्त्वा
प्रजापतये ज्योतिष्मतीं जुहोतु।
यस्यास्ते हरितो गर्भोथो योनिर्

[1]सूर्यः। देवः। दिविषद्भ्य इति दिविषत्–भ्यः। धाता। क्षत्राय। वायुः। प्रजाभ्य इति प्र–जा-भ्यः। बृहस्पतिः। त्वा। प्रजापतय इति प्रजा–पतये। ज्योतिष्मतीम्। जुहोतु। [2]यस्याः। ते। हरितः। गर्भः। अथो इति। योनिः। हिरण्ययी।

---

[1]वशायाश्चेद्गर्भं पश्यति तस्यां जुहोति—सूर्यो देव इति बृहत्या त्रिपदया विवृद्धतृतीयपादया ॥ दिवि सीदन्तीति दिविषदो देवाः। 'तत्पुरुषे कृतिबहुलम्' इत्यलुक्। तेभ्यः तेषामभिवृद्ध्यर्थम्। त्वां सूर्यो देवो जुहोतु। धाता सर्वस्य विधाता क्षत्राय क्षत्राभिवृद्धये, सर्वेषां वा बलाभिवृद्धये त्वां जुहोतु। वायुः प्रजाभ्यः प्रजानामभिवृद्धये त्वां जुहोतु। प्रजापतये तासां प्रजानां पात्रे तदभिवृद्ध्यर्थं यजमानाभिवृद्ध्यर्थं वा त्वां जुहोतु। बृहस्पतिः ज्योतिष्मतीं दीप्तिमतीं दीप्तिसमृद्धिहेतुम्। बृहस्पतिप्रजापतिशब्दावुक्तस्वरौ ॥

[2]वशामष्टापदीमनुमन्त्रयते—यस्यास्ते इत्यनुष्टुभा ॥ 'यस्यै' इति तृतीयपादान्तः। यस्यास्ते हरितः गर्भः हृतसारो गर्भः

हिरण्ययीं। अङ्गान्यह्रुता यस्यै तां दे-
वैस्समंजीगमम् । आ वर्तन वर्तय
नि निवर्तन वर्तयेन्द्र नर्दबुद। भूम्या-
श्चतस्रः प्रदिशस्ताभिरा वर्तया पुनः।

अङ्गानि । अह्रुता । यस्यै । ताम् । देवैः । समिति । अजीगमम् । [3]एति । वर्तन । वर्तय । नीति । निवर्तनेति नि—वर्तन । वर्तय । इन्द्र । नर्दबुद । भूम्याः । चतस्रः । प्रदिश इति प्र—दिशः । ताभिः।

---

हरितवर्णो वा; असारत्वात् । अथो अपि च यस्यास्ते योनिः हिरण्ययी हिरण्यवर्णा भरण* शीला वा । 'ऋत्व्य वास्तु' इति निपात्यते । किं च—यस्यै यस्यास्ते अङ्गानि अह्रुता अह्वतानि अपीडितानि । ह्रु कौटिल्ये, 'ह्रुह्वरेश्छन्दसि' इति ह्रुभावः । तां त्वा देवैस्समजीगमं संगमयामि । ण्यन्ताच्छान्दसो लङ् ॥

[3]गर्भ निवर्त्यमानमनुमन्त्रयते—आ वर्तनेति बृहत्या पञ्चपदया ॥ हे वर्तन वर्तयितः आवर्तय भूतसङ्घान् प्रवर्तय । किंच—हे निवर्तन निष्कासक निवर्तय निष्कासय । हे इन्द्र ईश्वर नर्दबुद; शब्दायमान बाणवत्त्वात् । यद्वा—नर्तितबुद्बुद वृष्टिहेतुत्वात्। वर्णलोपश्छान्दसः । नर्द शब्दे, पचाद्यच्, बुदिर् निशामने, इगुपधत्वात्कः । इदं च कुरु भूम्याश्चतस्रस्सन्ति प्रदिशः प्रधानदिशः, ताभिरेनं आवर्तय जनय । चतसृभिः वा दिग्भिरेनमावर्त-

---

*ग—हरण.

**वि ते भिनद्मि तकरीं वि योनिं वि गवीन्यौ । वि ॥ ३० ॥ मातरं च पुत्रं च वि गर्भं च जरायु च । बहिस्ते**

**एति । वर्तय । पुनः । [4]वीति । ते । भिनद्मि । तकरीम् । वीति । योनिम् । वीति । गवीन्यौ । वीति । ॥ ३० ॥ मातरम् । च । पुत्रम् । च । वीति । गर्भम् । च । जरायु । च । बहिः । ते । अस्तु ।**

---

य विश्वव्यापिनं कुरु । यद्वा—भूमिसंबन्धिभिः चतुर्भिर्भागैः भूतैः अस्य जन्मान्तरे शरीरं साधय । सांहितिकमाख्यातस्य दीर्घत्वम् ॥

[4]उल्वाद्गर्भं प्रस्रंस्यमान*मनुमन्त्रयते—वि ते इत्यनुष्टुभा, बहिस्ते इत्येकपदया गायत्र्या च ॥ हे वशे ते तव तकरीं विभिनद्मि विश्लेषयामि विश्लथयामि जीवप्रदेशम् । कित ज्ञाने, औणादिके रिप्रत्यये वर्णव्यत्ययविपर्यासः । तकेः वासकर्मणस्स एव प्रत्ययः, 'कृदिकारादक्तिनः' इति ङीष् । योनिं च तव विभिनद्मि । गौः गतिविशेषः, तस्य नेतारौ गविन्यौ वृषणस्थानीयौ योन्यन्तरगतौ†गतिविशेषनिमित्तभूतौ । प्रवृत्तिविकार ईकारः, अत एव नावग्रहः । 'उदात्तस्वरितयोर्यणः' इति विभक्तेः स्वरितत्वम् । 'उदात्तयणः' इति विभक्त्युदात्तत्वस्य 'नोङ्धात्वोः' इति प्रतिषेधः । मातरं च पुत्रं च विभिनद्मि विश्लेषयामि । गर्भं च जरायु च विश्लेषयामि । किमर्थम्?

---

*क—विमुच्यमान.

†अ—यावन्तर्गतौ,

अस्तु बालिति। उरुद्रप्सो विश्वरूप
इन्दुः पवमानो धीर आनञ्ज गर्भम्।
एकपदी द्विपदी त्रिपदी चतुष्पदी
पञ्चपदी षट्पदी सप्तपद्यष्टापदी भुव-

बाल्। इति। [5]उरुद्रप्स इत्युरु-द्रप्सः। विश्वरूप
इति विश्व-रूपः। इन्दुः। पवमानः। धीरः।
आनञ्ज। गर्भम्। एकपदीत्येक-पदी। द्विपदीति
द्वि-पदी। त्रिपदीति त्रि-पदी। चतुष्पदीति चतुः-
पदी। पञ्चपदीति पञ्च-पदी। षट्पदीति षट्-पदी।
सप्तपदीति सप्त-पदी। अष्टापदीत्यष्टा-पदी।

---

बहिस्ते अस्तु बालिति। बल प्राणने, ण्यन्तात् क्विप्। बल-
हेतुः प्राणवृत्तिरूपः आत्मा सर्वव्यापी भवत्विति॥

[5]पुरस्तान्नाभ्यां गर्भस्यावदाय तद्वषट्कृते जुहोति—उरुद्रप्स इति
द्विपदया त्रिष्टुभा यजुरन्तरया॥ उरुद्रप्सः उरुश्चासौ
द्रप्सश्च उरुद्रप्सः रसः रसवानवयवसंघातः विश्वरूपः
नानारूपः इन्दुः शुक्रः पवमानः शुद्धरूपः धीरः स्थिरः ईदृ-
शोयं प्रजापशुरूपावयवसंघातः आनञ्ज गच्छतु गर्भं जननान्त-
रमित्यर्थः। किञ्च—एकपदी एकः पादो यस्याः, 'संख्या
सुपूर्वस्य' इति पादस्य लोपः समासान्तः, 'पादोन्यतरस्याम्'
इति ङीप्, 'पादः पत्' इति पद्भावः। सर्वत्र एकपद्यादयश्चा-

नाऽनुं प्रथताꣳ स्वाहां । मही द्यौः
पृथिवी चं न इमं यज्ञं मिंमिक्षताम्।
पिपृतां नो भरींमभिः ॥ ३१ ॥

भुवंना । अन्विति । प्रथताम् । स्वाहां । [6]मही । द्यौः । पृथिवी । च । नः । इमम् । यज्ञम् । मिमिक्षताम् । पिपृताम् । नः । भरींमभिरिति भरीं-म–भिः ॥ ३१ ॥

गर्वीन्यौ वि चतुंश्चत्वारिꣳशच्च ॥ १० ॥

ष्टापद्या अवयुत्य निर्देशाः । द्वितीयतृतीययोः 'द्वित्रिभ्यां पद्दन्' इत्युत्तरपदान्तोदात्तत्वम् । छान्दसमष्टन आत्वम् । एषा भुवना भुवनानि भूतजातानि सर्वाण्यनुप्रथतां अनुक्रमेण प्रथताम् । नवेतु अष्टापदी सावमाता* । स्वाहेति प्रदानार्थः ॥

[6]अथैनं गर्भमुत्तरार्धमाहवनीयस्य प्रत्यञ्चमासाद्य भस्मना अभिवासयति—मही द्यौरिति गायत्रचा ॥ मही महती द्यौः पृथिवी च महती नोस्माकं इमं यज्ञं मिमिक्षतां सिञ्चतां आगमनेन । मिहेर्व्यत्ययेन शपः श्लुः, द्विविकरणता, सनि वा द्विर्वचनम् । तथा कृत्वा नः अस्मान् भरीमभिः भरणप्रकारैः पिपृतां पालयतां पूरयतां वा । पॄ पालनपूरणयोः, जौहोत्यादिकः, 'अर्तिपिपर्त्योश्च' इत्यभ्यासस्येत्वम् । बिभर्तेरौणादिक इमनिचि छान्दसं दीर्घत्वम् ॥

इति तृतीये तृतीये शदमोनुवाकः.

---

*अ—प्रथताम् ।..........अष्टापदी सोदमानत्वा........मही.

इदं वामास्ये हविः प्रियमिन्द्राबृह-
स्पती। उक्थं मदश्च शस्यते। अयं
वां परिषिच्यते सोमं इन्द्राबृहस्पती।

[1]इदम्। वाम्। आस्ये। हविः। प्रियम्। इ-
न्द्राबृहस्पती इतीन्द्रा—बृहस्पती। उक्थम्। मदः।
च। शस्यते। [2]अयम्। वाम्। परीति। सिच्यते।
सोमः। इन्द्राबृहस्पती इतीन्द्रा—बृहस्पती। चारुः।

---

[1]अथ याज्याकाण्डं वैश्वदेवं 'यं कामयेत राजन्यमनपोब्धो जायेत वृत्रान् घ्नश्चरेदिति तस्मा एतमैन्द्राबार्हस्पत्यं चरुं निर्वपेत्'* इत्यस्य पुरोनुवाक्या—इदं वामिति गायत्री ॥ हे इन्द्राबृहस्पती वां युवयोरास्ये इदं प्रियं हविः आस्यस्थमेवेदं मन्तव्यम्, न यत्नसाध्यम्। यद्वा—इदं हविः युवयोरास्ये जुहोमीति शेषः। उक्थं शस्त्रं, तदपि होत्रा शस्यते युवयोः प्रियम्। मदश्च मदहेतुश्च युवयोः। यद्वा—उक्थं शस्त्रं, मदः प्रतिगरः, तदुभयमपि युवयोः प्रियत्वात् शस्यते एव इदं हविरपि युवयोः प्रियत्वान् मया हूयते इति। यद्वा—उक्थं मदश्च शस्यते, यदर्थं स सोम एवेदं हविः। याभ्यां वोक्थं मदश्च शस्यते तयोर्युवयोरिदं हविरिति ॥

[2]अथ तत्रैव पुरोनुवाक्या विकल्प्यते—अयं वामिति गायत्री ॥ हे इन्द्राबृहस्पती अयं सोमः सोमसदृशं हविः चारुः दीप्तिमान् मदनसमर्थो वा। वां युवयोः मदाय मदार्थं पीतये पानाय परिषिच्यते सर्वतः पूर्यते। 'क्तिच्क्तौ च' इति क्तिच् ॥

---

*सं. २-४-१३.1

चारुर्मदाय पीतये । अस्मे इन्द्राबृह-
स्पती रयिं धत्त शतग्विनम् । अश्वा-
वन्तं सहस्रिणम् । बृहस्पतिर्नः

मदाय । पीतये । [3]अस्मे इति । इन्द्राबृहस्पती इ-
तीन्द्रा–बृहस्पती । रयिम् । धत्तम् । शतग्विनमि-
ति शत–ग्विनम् । अश्वावन्तमित्यश्व–वन्तम् । स-
हस्रिणम् । [4]बृहस्पतिः । नः । परीति । पातु । प-

[3]पुनश्च विकल्पः—अस्मे इति गायत्री ॥ हे इन्द्राबृहस्पते अस्मे अस्मभ्यम् । 'सुपां सुलुक्' इति शेआदेशः, 'शे' इति प्रगृह्यत्वम् । रयिं धनं धत्तं दत्तम् । रयिर्विशेष्यते—शतग्विनं शतसंख्याकानां बहूनां गवां समाहारश्शतगवं, 'गोरतद्धितलुकि' इति टच्समासान्तः, तद्वन्तं शतग्विनं, अकारलोपश्छान्दसः । अश्वावन्तं अश्वैस्तद्वन्तम् । 'मन्त्रे सोमाश्व' इति दीर्घत्वम् । कियद्भिरश्वैस्तद्वन्तम्? सहस्रिणं सहस्रसङ्ख्यैः गोभ्योपि बहुतरैरश्वैः अन्यैर्वा गजादिभिस्तद्वन्तम् । ईदृशं रयिं अस्मभ्यं धत्तं अस्मासु स्थापयतम् ॥

[4]अथ याज्या—बृहस्पतिर्न इति त्रिष्टुप् ॥ बृहस्पतिः नः अस्मान् परिपातु सर्वैः प्रकारैः रक्षतु । पश्चादपरस्यां दिशि अवस्थितात् अघायोः अघं पापं योस्मभ्यमिच्छति तस्मात् पुरुषान्नः पातु । 'छन्दसि परेच्छायामपि' इति क्यच्, 'न छन्दसि' इतीत्वाभावः । उत अपि च उत्तरस्मादुत्तरदिगवस्थितात् अघायोर्नः पातु । अधरात् दक्षिणदिगवस्थिताच्चाघायोर्नः

परि पातु पश्चादुतोत्तरस्मादधराद-
घायोः । इन्द्रः पुरस्तादुत मध्यतो न-
स्सखा सखिभ्यो वरिवः कृणोतु ।
वि ते विष्वग्वातजूतासो अग्ने भा-

श्चात् । उत । उत्तरस्मादित्युत्–तरस्मात् । अध-
रात् । अघायोरित्यघ–योः । इन्द्रः । पुरस्तात् ।
उत । मध्यतः । नः । सखा । सखिभ्य इति स-
खि–भ्यः । वरिवः । कृणोतु । [5]वीति । ते । वि-
ष्वक् । वातजूतास इति वात–जूतासः । अग्ने ।

---

पातु, भूगोळे दक्षिणस्याधरत्वात् । इन्द्रश्च नोस्मान्पुरस्तात्पूर्वतः पातु पूर्वस्यां दिश्यवस्थितात् अघायोः नः पातु । उत अपि च मध्यतः मध्यदिग्व्यवस्थिताच्च । किंच—सखा समानख्यानः सखिभ्यः समानख्यानेभ्यः यजमानेभ्यः वरिवः धनं कृणोतु ददातु । कः? आनन्तर्यादिन्द्रः ॥

[5]'मेध्या च वा एतस्यामेध्या च तनुवौ संसृज्येते । यस्याहिताग्नेरन्यैरग्निभिरग्नयस्संसृज्यन्ते । अग्नये विविचये पुरोडाशमष्टाकपालं निर्वपेत्'* इत्यस्य पुरोनुवाक्या—वि ते इति त्रिष्टुप् ॥ हे अग्ने ते तव विष्वक् नानागतिः वातजूतासः वातेन जूताः प्रेरिताः वातजूतासः । जु इति सौत्रो धातुः, जुवः कर्मणि निष्ठायां छान्दसं दीर्घत्वम्, 'आज्जसेरसुक्,' 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । यद्वा—वातस्येव जूतं वेगो येषामिति

---

*तै. ब्रा. ३-७-३.

मासः ॥ ३२॥ शुचे शुचयश्चरन्ति।
तुविम्रक्षासो दिव्या नवग्वा वना
वनन्ति धृषता रुजन्तः । त्वामग्ने

भामासः ॥ ३२ ॥ शुचे । शुचयः । चरन्ति । तुविम्रक्षास इति तुवि-म्रक्षासः । दिव्याः । नवग्वाः । वना । वनन्ति । धृषता । रुजन्तः । [6]त्वाम् । अ-

---

वातजूतासः । भामासः भासनशीलाः क्रूररूपा वा हे शुचे दीप्त शुचयः दीप्तयः तव विचरन्ति विष्वग्गमनाः । किंच—तुविम्रक्षासः बहुशुद्धयः बहूनां वा शोधनाः । मृजेरौणादिके सप्रत्यये अमागमः, पूर्ववदसुक् । सेचनार्थात्स एव प्रत्ययः, अमागमश्च, बहुसेचकाः वृष्ट्या बहुविकारत्वादवग्रहश्च* बहुव्रीहित्वे त्रिचक्रादित्वादुत्तरपदान्तोदात्तत्वम् । दिव्याः दिवमर्हतीति दण्डादिभ्यो यत् । नवग्वाः नवगतयः नित्याभिनवाः । अनवग्रह एव । गमेः क्विप्, 'ऊङ्च गमादीनामिति वक्तव्यम्' इत्यूकारः, जसि छान्दसं दीर्घत्वम् । वना वनानि उदकानि वनन्ति संभवन्ति धृषता धर्षणेन प्रसहनेन रुजन्तः वैगुण्यं भजन्तः । तया समृद्ध्या वृष्टिमुत्पादयन्तु तव शुचय इति ॥

[6]अथ याज्या—त्वामग्ने मानुषीरिति त्रिष्टुप् ॥ हे अग्ने त्वां मानुषीः मनुष्याः विशः प्रजाः ईडते स्तुवन्ति । 'मनोर्जातौ' इत्यञ्, 'टिड्ढाणञ्' इत्यादिना ङीप्, 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । होत्राविदं वाग्विशेषज्ञं विविचिं विवेचकं

---

*ग-विकारत्वादनवग्रहश्च.

मानुषीरीडते विशो होत्राविदं वि-
विंचिꣳ रत्नधातमम् । गुहा सन्तꣳ
सुभग विश्वदर्शतं तुविष्मणसꣳ
सुयजं घृतश्रियम् । धाता ददातु

ग्ने । मानुषीः । ईडते । विशः । होत्राविदमिति होत्रा–विदम् । विविंचिमिति वि–विचिम् । रत्नधातममिति रत्न–धातमम् । गुहा । सन्तम् । सुभगेति सु–भग । विश्वदर्शतमिति विश्व–दर्शतम् । तुविष्मणसम् । सुयजमिति सु–यजम् । घृतश्रियमिति घृत–श्रियम् । [7]धाता । ददातु ।

---

मिश्रितानां शोधकम् । विपूर्वाद्विचेः 'इक्कृष्यादिभ्यः' इतीक् । रत्नधातमं रमणीयानां धनानां धातृतमं दातृतमं गुहा गुहायां सन्तं गुह्यम् । सप्तम्या आकारः । हे सुभग सर्वस्य प्रिय । यद्वा—शोभनधन विश्वदर्शतं विश्वस्य दर्शयितारं, विश्वं दर्शनमस्येति बहुव्रीहिः । तुविष्मणसं प्रवृद्धमनसं, महाबलमित्येके, बहूनां मन्तारमित्यन्ये । छान्दसस्सुट्, णत्वं च, बहुव्रीहित्वे त्वन्तोदात्तत्वं त्रिचक्रादित्वाद्द्रष्टव्यम्, बहुविकारत्वादनवग्रहः । सुयजं सुष्ठु यष्टारं वैगुण्यापनोदनं घृतश्रियं घृतस्य श्रयितारम् । 'क्विब्वचि' इत्यादिना क्विप्दीर्घौ । ईदृशं त्वामीडते प्रजाः । त्वं च अभिप्रेतैर्योजय सर्वतोस्मदभिप्रेतमपि साधयसि ॥

[7]सन्ति देविकाहवींषि 'धात्रे पुरोडाशं द्वादशकपालं निर्वपति',* 'देविका निर्वपेत्प्रजाकामः'† इति च विहितानि । तत्र

---

*सं. १-८-८[1]. †सं. ३-४-९[1].

नो र॒यिमीशा॑नो॒ जग॑त॒स्पति॑ः । स
न॑ः पू॒र्णेन॑ वावनत् । धा॒ता प्र॒जाया॑
उ॒त रा॒य ई॑शे धा॒तेदं विश्वं॒ भुव॑नं
जजान । धा॒ता पु॒त्रं यज॑माना॒य
दाता॑ ॥३३॥ तस्मा॑ उ ह॒व्यं घृ॒तव॑द्वि-

न॒ः । र॒यिम् । ईशा॑नः । जग॑तः । पति॑ः । सः ।
न॒ः । पू॒र्णेन॑ । वा॒व॒न॒त् । [8]धा॒ता । प्र॒जाया॒ इति॑
प्र-जाया॑ः । उ॒त । रा॒यः । ई॒शे॒ । धा॒ता । इ॒दम् ।
विश्व॑म् । भुव॑नम् । ज॒जा॒न॒ । धा॒ता । पु॒त्रम् । य-
ज॑मानाय । दाता॑ ॥ ३३ ॥ तस्मै॑ । उ॒ । ह॒व्यम् ।

---

धातुः पुरोनुवाक्या—धातेति गायत्री ॥ धाता विश्वस्य धारयिता नोस्मभ्यं धनं ददातु । ईशानः सर्वार्थसाधनशक्तः । अनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वम् । जगतः पतिः पालयिता । 'षष्ठ्याः पतिपुत्र' इति सत्वम् । किञ्च—स देवोस्मान् पूर्णेन पूरणाय वावनत् संभजताम्, अत्यर्थं परिगृह्णात्वस्मानिति । यद्वा—पूर्णेन आप्यायितेन नोस्मान्योजयतु । वनतेर्लेटि शपः श्लुः, लेटोडागमः, तुजादित्वादभ्यासस्य दीर्घत्वम् ॥

[8]याज्या—धाता प्रजाया इति त्रिष्टुप् ॥ धाता प्रजायाः पुत्रादेः उत अपि च रायो धनस्य च ईशे ईष्टे । 'लोपस्त आत्मनेपदेषु' इति तल्लोपः । इदं विश्वं भुवनं भूतजातं धाता जजान जनयामास । ण्यन्ताल्लिटि 'बहुलमन्यत्रापि' इति

धेम । धाता ददातु नो रयिं प्राचीं
जीवातुमक्षिताम् । वयं देवस्य धी-
महि सुमतिꣳ सत्यराधसः । धाता

घृतवदिति घृत-वत् । विधेम । [9]धाता । ददातु ।
नः । रयिम् । प्राचीम् । जीवातुम् । अक्षिताम् ।
वयम् । देवस्य । धीमहि । सुमतिमिति सु-मतिम् ।
सत्यराधस इति सत्य-राधसः । [10]धाता । ददातु ।

---

णिलुक् । धातेव पुत्रं यजमानाय दाता ताच्छील्येन ददाति ।
तस्मा उ तस्मा एव देवाय हव्यमिदं घृतवत् घृतयुक्तं विधेम
दद्मः । विध विधाने, तौदादिकः ॥

[9]तत्रैव याज्यानुवाक्ये विकल्प्येते—धातेत्यनुष्टुप् ॥ धाता
ददातु नो रयिम् । गतम्* । प्राचीं प्रकृष्टगमनां अनुगुणां
जीवातुं जीवनार्थं जीवनाय पर्याप्तम् । जीवेरातुप्रत्ययः । अ-
क्षितां अक्षीणां, ततश्च तेनैव धनेन वयं देवस्य सवितुः सत्य-
राधसः सत्यधनस्य सुमतिं शोभनमतिं, कम्? यागम् । धीम-
हि धारयामः तं यजेमहीत्यर्थः । धीङ् आधारे, शपो लुक् ।
यद्वा—देवस्य धातुः कल्याणीं मतिं तद्विषयां कल्याणीं बुद्धिं
तां धीमहि कुर्मः ॥

[10]याज्या—धातेति त्रिष्टुप् ॥ धाता हवींषि दाशुषे हविर्द-
त्तवते यजमानाय वसूनि धनानि प्रजार्थानि ददातु प्रजाका-

---

*सं. -३-३-११,7

ददातु दाशुषे वसूनि प्रजाकामाय
मीढुषे दुरोणे । तस्मै देवा अमृता-
स्सं व्ययन्तां विश्वे देवासो अदिति-
स्सजोषाः । अनु नोद्यानुमति-
र्यज्ञं देवेषु मन्यताम् । अग्निश्च हव्य-

दाशुषे । वसूनि । प्रजाकामायेति प्रजा—कामाय ।
मीढुषे । दुरोण इति दुः—ओने । तस्मै । देवाः ।
अमृताः । सम् इति । व्ययन्ताम् । विश्वे । देवासः ।
अदितिः । सजोषा इति स—जोषाः । [11]अन्विति ।
नः । अद्य । अनुमतिरित्यनु—मतिः । यज्ञम् ।
देवेषु । मन्यताम् । अग्निः । च । हव्यवाहन इति

---

माय प्रजानां कामयमानाय । 'शीलिकामि' इत्यादिना णः, पूर्वपदप्रकृतिस्वरत्वं च । मीढुषे मेहनसमर्थाय दुरोणे दुःखेनापयितव्ये गृहे वर्तमानाय गृहस्थाय । यद्वा—दुरोणे यज्ञगृहे मीढुषे हविस्सिक्तवते तस्मै देवा अमृता अमरणाः संव्ययन्तां संहत्य वसूनि ददातु, विश्वेदेवाश्च गणाः सजोषाः, अदितिश्च सजोषा समानप्रीतिः । 'परादिश्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् ॥

[11]अनुमतेः पुरोनुवाक्या—अनु न इत्यनुष्टुप् ॥ नोस्माकमिमं यज्ञं अनुमतिर्देवी अद्येदानीं देवेषु अनुमन्यतां देवान् प्रापयतु देवनिमित्तं वा अनुजानातु । ऊनचन्द्रा पौर्णमासी अनुमतिः । अग्निश्च हव्यवाहनः हविषां वोढा देवेष्वनुमन्यतामित्येव । 'हव्ये-

वाहनो भवतां दाशुषे मयः । अ-
न्विदनुमते त्वम् ॥ ३४ ॥ मन्यासै
शं च नः कृधि । क्रत्वे दक्षाय नो हिनु
प्रण आयूꣳषि तारिषः । अनु मन्य-

हव्य—वाहनः । भवताम् । दाशुषे । मयः । [12]अ-
न्विति । इत् । अनुमत इत्यनु—मते । त्वम् ॥ ३४ ॥
मन्यासै । शम् । च । नः । कृधि । क्रत्वे । दक्षा-
य । नः । हिनु । प्रेति । नः । आयूꣳषि । तारिषः ।
[13]अन्विति । मन्यताम् । अनुमन्यमानेत्यनु—मन्य-

---

न्तः पादम्' इति ङ्युट्, किंच—तौ अनुमतिहव्यवाहनौ दाशुषे हविर्दत्तवते अस्मै यजमानाय मयः सुखहेतुः भवताम् ॥

[12]याज्या—अन्वित्यनुष्टुप् ॥ अनुमते त्वं मन्यासै अनुमन्यस्व लोटि 'वैतोन्यत्र' इत्यैकारः । किंच—नोस्माकं शं सुखं च कृधि कुरु । करोतेर्लोटि शपो लुक्, 'श्रुशृणुपॄकृवृभ्यः' इति धिभावः । किं पुनरनुमन्तव्यमित्याह—क्रत्वे क्रतवे यागाय प्रत्ययाय वा दक्षाय समर्थाय शीघ्रकरणाय क्रत्वर्थं वा यद्दक्षमन्नं तदर्थं नः अस्मान् हिनु प्रेरय । 'जसादिषु वा वचनम् प्राङ्णौ चङ्युपधायाः' इति दीर्घे ङितीति गुणो न प्रवर्तते । तदर्थं चास्माकं आयूंषि प्रतारिषः प्रवर्तय । तरतेर्ण्यन्ताल्लेटि 'सिब्बहुलं लेटि' इति सिप् 'लेटोडाटौ' इत्यडागमः, 'उपसर्गाद्बहुलम्' इति नसो णत्वम् ॥

[13]अथ विकल्पार्थे अनुमन्यतामिति त्रिष्टुप् ॥ अनुमन्यमाना अनुमतिर्देवी संगत्या रयिमनुमन्यताम् । कीदृशम्? प्रजावन्तं प्र-

तामनुमन्यमाना प्रजावन्तꣳ रयि-
मक्षीयमाणम् । तस्यै वयꣳ हेडसि
माऽपि भूम सा नो देवी सुहवा
शर्म यच्छतु । यस्यामिदं प्रदिशि
यद्विरोचतेऽनुमतिं प्रति भूषन्त्यायवः ।
यस्या उपस्थ उर्वन्तरिक्षꣳ सा नो

माना । प्रजावन्तमिति प्रजा—वन्तम् । रयिम् । अ-
क्षीयमाणम् । तस्यै । वयम् । हेडसि । मा । अपी-
ति । भूम । सा । नः । देवी । सुहवेति सु—हवा ।
शर्म । यच्छतु । [14]यस्याम् । इदम् । प्रदिशीति
प्र—दिशि । यत् । विरोचत इति वि—रोचते । अ-
नुमतिमित्यनु—मतिम् । प्रतीति । भूषन्ति । आ-
यवः । यस्याः । उपस्थ इत्युप—स्थः । उरु । अ-

---

जायुक्तं अक्षीयमाणं च । किंच—तस्यै तस्या अनुमतिदेव्याः
हेडसि क्रोधेऽपि मा भूम, किन्तु अनुग्रह एव भूयास्म । सा च
देवी नोऽस्मभ्यं शर्म सुखं यच्छतु ददातु सुहवा स्वाह्वाना ।
'बहुलं छन्दसि' इति प्रागेव प्रत्ययोत्पत्तेस्संप्रसारणे कृते आ-
कारान्तत्वाभावात्तलेव प्रवर्तते ॥

[14][याज्या]यस्यामिति जगती ॥ यस्यां देव्यां [प्रदिशि
प्रकर्षेण दिशन्त्यामाज्ञापयन्त्यां] यद्विरोचते विविधं भासते
जगदिदं विश्वं आज्ञाविधेयं वर्तते इति । किंच—यामनुमतिं

देवी सुहवा शर्म यच्छतु ॥ ३५ ॥
राकामहꣳ सुहवाꣳ सुष्टुती हुवे
शृणोतु नस्सुभगा बोधतु त्मना ।
सीव्यत्वपस्सूच्याऽच्छिद्यमानया द-

न्तरिक्षम् । सा । नः । देवी । सुहवेति सु-हवा । शर्म । यच्छतु ॥ ३५ ॥ [15]राकाम् । अहम् । सुहवामिति सु-हवाम् । सुष्टुतीति सु-स्तुती । हुवे । शृणोतु । नः । सुभगेति सु-भगा । बोधतु । त्मना । सीव्यतु । अपः । सूच्या । अच्छिद्यमानया ।

अनुमन्यमानां, भावो लक्ष्यते मद्भावे भावात्, अभावे चाभावात् *। किंच—यस्या उपस्थः तत्स्थानीयं उर्वन्तरिक्षं महदिदमाकाशं विश्वं व्याप्य स्थितत्वात् । सा नः इति । गतम् ॥

[15]राकायाः पुरोनुवाक्या—राकामिति जगती ॥ संपूर्णचन्द्रा पौर्णमासी राका, राकां देवीं सुहवां स्वाह्वानां आह्वानप्रयोजनकारिणीं सुष्टुती शोभनया स्तुत्या अहं हुवे आह्वयामि । पूर्ववच्छपो लुक्, संप्रसारणं च । सुष्टुतिशब्दात्तृतीयैकवचनस्य 'सुपां सुलुक्' इति पूर्वसवर्ण ईकारः, 'मन्क्तिन् व्याख्यान' इत्युत्तरपदान्तोदात्तत्वम् । सा च सुभगा सुज्ञानादिका नोस्माकं शृणोतु, आह्वानं श्रुत्वा च बोधतु बुध्यतामस्मदभिप्रायं त्मना आत्मना स्वयमेव । 'मन्त्रेष्वाङ्यादेः' इति लोपः । बुद्ध्वा च अपः कर्म प्रजननाख्यं

* अत्र ग्रन्थो गलित इव भाति. माधवीये—'अनुमतिं प्रति आयवः गन्तारः यजमाना भूषन्ति हविर्भिरलंकुर्वन्ति' इति व्याख्यातम्.

दातु वीरꣳ शतदायमुक्थ्यम् । यास्ते राके सुमतयस्सुपेशसो याभिर्ददासि दाशुषे वसूनि। ताभिर्नो अद्य सुम-

ददातु । वीरम् । शतदायमिति शत—दायम् । उ-क्थ्यम् । [16]याः । ते । राके । सुमतय इति सु—म-तयः । सुपेशस इति सु—पेशसः । याभिः । ददा-सि । दाशुषे । वसूनि । ताभिः । नः । अद्य ।

---

अस्मदभिप्रेतं सूच्या सूचीस्थानीयया अनुग्रहबुद्ध्या अच्छिद्यमानया अविच्छिन्नया सीव्यतु सन्तनोतु यथा वस्त्रादिकं सूच्या स्यूतं चिरं तिष्ठति, एवमिदं करोतु । तथा च कृत्वा वीरं विक्रान्तं पुत्रं शतदायं बहुधनं उक्थ्यं कर्मभिः प्रशस्यं स्तोत्रार्हं ददातु ॥

[16]याज्या—यास्ते इति जगती ॥ हे राके देवि यास्ते तव सुमतयः शोभनबुद्धयः अनुग्रहात्मिकाः सुपेशसः सुरूपाः शोभ-नविषया वा । 'मन्क्तिन्व्याख्यान' इत्यादिना पूर्वत्रोत्तरपदान्तो-दात्तत्वम् । उत्तरत्र 'सोर्मनसी' इत्युत्तरपदाद्युदात्तत्वम् । याभि-र्मतिभिः दाशुषे हविर्दत्तवते यजमानाय वसूनि धनानि ददासि ताभिर्मतिभिः उपलक्षिता तथाभूतसंकल्पा नोस्मान् अद्येदानीं सु-मना भूत्वा उपागहि उपागच्छ । व्यत्ययेन शपो लुक् । स-हस्रपोषं बहुनो धनस्य पुष्टिं रराणा ददती उपागच्छतीति । रातेर्व्यत्ययेन आत्मनेपदम् । शपः श्लुः । हे सुभगे कल्याणध-नप्रापिणि ॥

नाँ उपागँहि सहस्रपोषꣳ सुभगे
रराँणा। सिनीँवालि या सुपाणिः।
कुहूमहꣳ सुभगाँ विद्मनापँसम-

सुमना इतिं सु-मनाः। उपागहीत्युंप-आगँहि। सहस्रपोषमितिं सहस्र-पोषम्। सुभग इतिं सु-भगे। रराँणा। [17]सिनीँवालि। [18]या। सुपाणिरितिं सु-पाणिः। [19]कुहूम्। अहम्। सुभगामितिं सु-

[17]सिनीवाल्याः पुरोनुवाक्या याज्या च—सिनीवालि, या सुपाणिरित्युभे अनुष्टुभौ प्रतीकग्रहणं चेदम्* ॥ सिनीवालि पृथुष्टुके पृथुजघने या त्वं देवानामसि स्वसा सहोत्पन्नाऽसि। सा त्वमिदमाहुतं हव्यं जुषस्व। हे देवि प्रजां चास्मभ्यं दिदिड्ढि उपचितां कुरु ॥

[18]अथ द्वितीया—या सुपाणिः शोभनहस्ता स्वङ्गुरिः शोभनाङ्गुलिः सुषूमा शोभनप्रसूतिः बहुसूवरी बहूनामपत्यानां सवित्री। तस्यै विश्पत्नियै विशां पालयित्र्यै सिनीवाल्यै हविर्जुहोतनेति ॥

[19]कुह्वाः पुरोनुवाक्या—कुहूमहमिति त्रिष्टुप् ॥ नष्टचन्द्राऽमावास्या कुहूः, तां सुभगां शोभनधनादिकां विद्मनापसं विदितकर्माणं, वेदनं विद्मः, औणादिको मन्प्रत्ययः, तद्विद्मनं पामादिलक्षणो नप्रत्ययः, तादृशं अपः कर्म यस्या इति तादृशीं सुहवां स्वाह्वानां अस्मिन् यज्ञे जोहवीमि भृशमाह्वयामि, सा चाहूता अस्मभ्यं ददातु श्रवणं श्रुतिसुखं धनं यशो वा पितृणां

*सं. ३-१-११.[15—16]

स्मिन् यज्ञे सुहवां जोहवीमि। सा
नो ददातु श्रवणं पितॄणां तस्यांस्ते
देवि हविषा विधेम। कुहूर्देवानाम-
मृतस्य पत्नी हव्या नो अस्य हवि-
षश्चिकेतु। सं दाशुषे किरतु भूरि

भगाम्। विघ्ननापसमिति विघ्नन–अपसम्।
अस्मिन्। यज्ञे। सुहवामिति सु–हवाम्। जोह-
वीमि। सा। नः। ददातु। श्रवणम्। पितॄणाम्।
तस्याः। ते। देवि। हविषा। विधेम। [20]कुहूः।
देवानाम्। अमृतस्य। पत्नी। हव्या। नः। अस्य।
हविषः। चिकेतु। समिति। दाशुषे। किरतु।

---

पूर्वेषां संबन्धि पितॄणां वा श्रुतिसुखं यथा भवति तथा ददातु। इदानीं स्तुत्या अभिमुखीं देवतां प्रत्यक्षीकृत्याह—हे देवि कुहु तस्याः हविषा विधेम। 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी। तादृग्गुणां त्वां हविषा परिचरेमेत्यर्थः॥

[20]याज्या—कुहूरिति त्रिष्टुप्॥ देवानाम्मध्ये कुहूर्देवी अमृतस्य अमृतत्वस्य उदकस्य वा पत्नी पालयित्री। यद्वा—देवानामिति सर्वविकारोपलक्षणम्। सर्वेषां भूतजातानां अमृतस्य पत्नी हव्या आह्वानार्हा। यत्प्रत्यये पूर्ववत्संप्रसारणत्वम्। तादृशी देवी नोऽस्माकं अस्य हविषः चरोः दीयमानस्य चिकेतु जानातु।

वामꣳ रायस्पोषं चिकितुषे दधातु॥

भूरि। वामम्। रायः। पोषम्। चिकितुषे। दधातु॥३६

भामासो दाता त्वमन्तरिक्षꣳ सा नो देवी सुहवा शर्म यच्छतु श्रवणं चतुर्विꣳशतिश्च ॥ ११ ॥

अग्ने तेजस्विन्वायुर्वसंवस्त्वैतद्वा अपां नामधेयं वायुरसि प्राणो नाम देवा वै यद्यज्ञेन न प्रजापतिर्देवासुरानायुर्दा एतं युवानꣳ सूर्यो देव इदं वामेकादश ॥ ११ ॥

अग्ने तेजस्विन्वायुरसि छन्दसां वीर्यं मातरं च षट्त्रिꣳशत् ॥ ३६ ॥

अग्ने तेजस्विश्चिकितुषे दधातु ॥

हरिः ओं तत्सत् ॥

---

ज्ञात्वा च दाशुषे हविर्दत्तवते यजमानाय भूरि भूयिष्ठं वामं वननीयं धनं संकिरतु ददातु । 'दाश्वान्' इति निपातः । रायस्पोषं तस्य धनस्य पुष्टिं चिकितुषे ज्ञातवते यजमानाय ददातु । कित ज्ञाने, लिटः क्वसुः । रायः सत्वस्वरावुक्तौ ॥

इति भट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये तृतीयकाण्डे तृतीयप्रपाठके एकादशोनुवाकः.

प्रपाठकश्च समाप्तः.

वि वा एतस्य॑ य॒ज्ञ ऋ॑ध्यते॒ यस्य॑
ह॒विर॑ति॒रिच्य॑ते॒ सूर्यो॑ दे॒वो दि॑वि॒ष-
द्भ्य॒ इत्या॑ह॒ बृह॒स्पति॑ना चै॒वास्य॑
प्र॒जाप॑तिना च य॒ज्ञस्य॒ व्यृ॑द्धमपि॑

[1]वीति॑ । वै । ए॒तस्य॑ । य॒ज्ञः । ऋ॒ध्य॒ते॒ । यस्य॑ । ह॒विः । अ॒ति॒रिच्य॑त॒ इत्य॑ति–रिच्य॑ते । सूर्यः॑ । दे॒वः । दि॒वि॒षद्भ्य॒ इति॑ दि॒वि॒षत्–भ्य॒ः । इति॑ । आ॒ह॒ । बृह॒स्पति॑ना । च॒ । ए॒व । अ॒स्य॒ । प्र॒जाप॑ति॒नेति॑ प्र॒जा–प॒ति॒ना । च॒ । य॒ज्ञस्य॑ । व्यृ॑द्ध॒मिति॒ वि–ऋ॒द्धम् । अपीति॑ । व॒पा॒ति॒ ।

---

अथ चतुर्थः प्रपाठकः.

[1]अथ 'सूर्यो देवः'* इत्यादीनां मन्त्राणां ब्राह्मणम्—वि वा एतस्येत्यादि ॥ एतस्य यज्ञो व्यृद्ध्यते ऋद्ध्या विहीनः क्रियते यस्य हविरतिरिच्यते। देवताविशेषमुद्दिश्य उपाकृतस्य पशोः गर्भसंभवेन वपाद्याधिक्यमतिरेकः । अतिरेकाद्धविष्टहानिः, तां देवतामतिव्याप्यावस्थितत्वात् । तस्मात्तत्परिहारार्थं 'सूर्यो देवः'* इति मन्त्रेण तस्या गर्भवपावसां जुहोति । बृहस्पतिनेत्यादि। गतम् । व्यृद्धं विहीनं अपि वपति आपूरयति अतिरेकान्निवर्तयति। हविष इति । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वेन उदात्तत्वे 'उदात्तस्वरितयोः' इति ऋकारस्स्वर्यते ॥

---

*सं. १-३-११.

वपति रक्षाꣳसि वा एतत्पशुꣳ स-
चन्ते यदेकदेवत्य आलब्धो भूया-
न्भवति यस्यास्ते हरितो गर्भ इ-
त्याह देवत्रैवैनां गमयति रक्षसाम-
पहत्या आ वर्तन वर्तयेत्याह ॥१॥

[2]रक्षाꣳसि । वै । एतत् । पशुम् । सचन्ते । यत् ।
एकदेवत्य इत्येक–देवत्यः । आलब्ध इत्या–लब्धः ।
भूयान् । भवति । यस्याः । ते । हरितः । गर्भः ।
इति । आह । देवत्रेति देव–त्रा । एव । एनाम् ।
गमयति । रक्षसाम् । अपहत्या इत्यप–हत्यै ।[3] ए-
ति । वर्तन । वर्तय । इति । आह ॥ १ ॥ ब्रह्म-

---

[2]रक्षांसीत्यादि ॥ पशुं सचन्ते समवयन्ति समनुप्रविशन्ति एतत् एतेन हेतुना । केन? यत् येन एकदेवत्य आलब्धः एकस्यै देवतायै आलब्धः । देवतान्तात्तादर्थ्ये यत् । भूयान् भवति अतिरिच्यते, तस्मात् ‘यस्याः’ इत्यनुमन्त्रणेन एतां वशां देवत्रैव देवानिव गमयति । ‘देवैस्समजीगमम्’* इति दर्शनात् । ‘देवमनुष्य’ इत्यादिना त्रप्रत्ययः । तत् रक्षसामपहत्यै देवगतत्वात्पशौ निराशानि रक्षांसि भवन्ति ॥

[3]आवर्तनेत्यादि ॥ गर्भे विस्रस्यमाने अनुमन्त्रणमिदम्, यथा यजुर्वेदाति निवृत्तमानं तदनुमन्त्रणमन्त्रोऽयम् । एवं ब्रह्मणा पर-

---

* सं १–३–११.[2]

ब्रह्मणैवैनमा वर्तयति वि ते भिन-
द्मि तकरीमित्याह यथायजुरेवैतदु-
रुद्रप्सो विश्वरूप इन्दुरित्याह प्रजा
वै पशव इन्दुः प्रजयैवैनं पशुभि-

णा। एव। एनम्। एति। वर्तयति। [4]वीति। ते।
भिनद्मि। तकरीम्। इति। आह। यथायजुरिति
यथा–यजुः। एव। एतत्। [5]उरुद्रप्स इत्युरु–द्रप्सः।
विश्वरूप इति विश्व–रूपः। इन्दुः। इति। आह।
प्रजेति प्र–जा। वै। पशवः। इन्दुः। प्रजयेति
प्र–जया। एव। एनम्। पशुभिरिति पशु–भिः।

मात्मनैवैनमावर्तयति जन्मान्तरे। 'ताभिरावर्तय'* इति दर्शनात्। यद्वा—ब्रह्मणा मन्त्रेणैनं जनयति॥

[4]वि ते भिनद्मीत्यादि॥ उल्बाद्गर्भे विस्रस्यमानेऽनुमन्त्रणम्। यथा यजुर्वदति तदनुरूपमेवैतद्भवति। 'बहिस्ते अस्तु बालिति'* परमात्मभावेन पशुप्राणस्य संपत्तिरस्त्विति। यजुर्वेदाम्नातत्वात् यजुः, मन्त्रमात्राभिधानं वा॥

[5]उरुद्रप्स इत्यादि॥ उरु शुक्रं यतोयं गर्भस्संजातः। तत्प्रभवत्वात् प्रजाः पशवश्च इन्दुः। तस्मादनेन गर्भावदानहोमेन एनं यजमानं प्रजया पशुभिश्च समृद्धं करोति॥

*सं. ३-३-१०.[3-4]

स्समर्धयति दिवं वै यज्ञस्य व्यृद्धं
गच्छति पृथिवीमतिरिक्तं तद्यन्न श-
मयेदार्तिमार्च्छेद्यजमानो मही द्यौः
पृथिवी च न इति ॥ २ ॥ आह द्या-
वापृथिवीभ्यामेव यज्ञस्य व्यृद्धं चा-
तिरिक्तं च शमयति नार्तिमार्च्छति

समिति । अर्धयति । [6]दिवम् । वै । यज्ञस्य । व्यृद्ध-मिति वि-ऋद्धम् । गच्छति । पृथिवीम् । अतिरि-क्तमित्यति-रिक्तम् । तत् । यत् । न । शमयेत् । आर्तिम् । एति । ऋच्छेत् । यजमानः । मही । द्यौः । पृथिवी । च । नः । इति ॥ २ ॥ आह । द्यावापृथिवीभ्यामिति द्यावा-पृथिवीभ्याम् । एव । यज्ञस्य । व्यृद्धमिति वि-ऋद्धम् । च । अतिरिक्त-मित्यति-रिक्तम् । च । शमयति । न । आर्तिम् ।

---

[6]दिवमित्यादि ॥ यज्ञस्य व्यृद्धं व्यृद्धदोषः दिवं गच्छति दिविस्थान् पीडयति, अतिरिक्तदोषः पृथिवीस्थान् बाधते । पूर्ववद्गतेः स्वरः । तद्यदित्यादि । गतम् । आर्छेत् गच्छेत् । 'उपसर्गादृति धातौ' इति वृद्धिः । मही द्यौरित्यादि । आहवनीयस्योत्तरार्धे भस्मना गर्भस्य अभिवासनमन्त्रोयम् । अनेन मन्त्रेण अस्मिन् क्रियमाणे यज्ञस्य दोषद्वयं द्यावापृथिवीभ्यां शमयति ।

यजमानो भस्मनाऽभि समूहति
स्वगाकृत्या अथो अनयोर्वा एष ग-
र्भोऽनयोरेवैनं दधाति यदवद्येदति
तद्रेचयेद्यन्नावद्येत्पशोरालब्धस्य ना-

एति । ऋच्छति । यजमानः । भस्मना । अभि । समिति । ऊहति । स्वगाकृत्या इति स्वगा-कृत्यै । अथो इति । अनयोः । वै । एषः । गर्भः । अनयोः । एव । एनम् । दधाति । [8]यत् । अवद्येदित्यव-द्येत् । अतीति । तत् । रेचयेत् । यत् । न ।

---

'इमं यज्ञं मिमिक्षताम्'* इति सेचनाभिधानसामर्थ्यापादनम् । 'दिवो द्यावा' इति द्यावादेशः, 'देवताद्वन्द्वे च' इत्याद्युदात्तत्वम् । ततो न यजमान आर्तिं गच्छाति । पूर्ववद्वृद्धिः ॥

[7]भस्मनेत्यादि ॥ स्वगाकृत्यै कथं नाम द्यावापृथिवीभ्यां गर्भोय-मात्मसात्क्रियते इति भस्मना छादयति । स्वगा[ग]शब्दाच्छान्दसो डाच्, 'ऊर्यादिच्विडाचश्च' इति गतित्वात् 'तादौ च' इति गतेः प्रकृतिस्वरत्वत् । किंचेत्याह—अथो अपिच अनयोर्द्यावापृथिव्योरेष गर्भः यो वशायाः एतत्प्रभवत्वात् । तस्मादनयोरेवैनं स्थापयति अनेन अभिवासनेन ॥

[8]यदवद्येदित्यादि ॥ हृदयादि यदवद्येत् तद्धविरतिरेचयेत् । अतिरेकदोषप्रसंगतः ततो यज्ञः व्यृद्धस्स्यात्, तद्दोषपरिजिहीर्षया

---

*सं. ३-२-१०,६

वं द्येत्पुरस्तान्नाभ्या अन्यदवद्येदुप-
रिष्टादन्यत्पुरस्ताद्वै नाभ्यै ॥ ३ ॥
प्राण उपरिष्टादपानो यावानेव पशु-
स्तस्याव द्यति विष्णवे शिपिवि-

अवद्येदित्यव–द्येत् । पशोः । आलब्धस्येत्या–ल-
ब्धस्य । न । अवेति । द्येत् । पुरस्तात् । नाभ्याः ।
अन्यत् । अवद्येदित्यव–द्येत् । उपरिष्टात् । अन्य-
त् । पुरस्तात् । वै । नाभ्यै ॥ ३ ॥ प्राण इति प्र–
अनः । उपरिष्टात् । अपान इत्यप–अनः ।
यावान् । एव । पशुः । तस्य । अवेति । द्यति ।
[9]विष्णवे । शिपिविष्टायेति शिपि–विष्टाय । जुहो-

---

यत् नावद्येत् पशोरालब्धस्य हृदयाद्यवदानं न कृतं स्यात् ततो ह-
विरभावात् यज्ञ एव न निर्वर्त्यते । एवमुभयथाऽपि दोषसंभवे कथं
कर्तव्यमित्याह—पुरस्तादित्यादि । नाभ्याः पुरस्ताद्गर्भस्यैकस्यावदानमव-
द्येत्, उपरिष्टाच्चैकम् । 'एकान्याभ्याम्' इत्युपसंख्यानान्न निह-
न्यते । हेतुं चाह—पुरस्ताद्वा इत्यादि । तिरश्चां हि एवं प्राणा
पानौ वर्तेते । अन्येषां तु पुरस्तात् प्राणः अवाङपानः । तस्मादेवं
क्रियमाणे यावान् पशुर्भवति तस्यावद्यति प्राणापानवृत्त्याश्रय-
त्वात्पशोः । एवं ह्यवत्तं च भवति, हृदयाद्यवदानाभावादनवत्तं च ।
तस्माद्यथोक्तदोषाप्रसंग इति ॥

[9]विष्णव इत्यादि ॥ शिपयो रश्मयः, तत्र प्रविष्टः शिपि-

ष्टायं जुहोति यद्वै यज्ञस्यांति रिच्यं-
ते यः पशोर्भूमा या पुष्टिस्तद्विष्णुं-
श्शिपिविष्टोतिंरिक्त एवातिंरिक्तं द-
धात्यतिंरिक्तस्य शान्त्यां अष्टाप्रू-
द्धिरंण्यं दक्षिणाऽष्टापंदी ह्येषाऽऽत्मा

ति । यत् । वै । यज्ञस्यं । अतिरिच्यंत इत्यंति-
रिच्यंते । यः । पशोः । भूमा । या । पुष्टिः । तत् ।
विष्णुः । शिपिविष्ट इतिं शिपि-विष्टः । अतिं-
रिक्त इत्यतिं-रिक्ते । एव । अतिंरिक्तमित्यतिं-
रिक्तम् । दधाति । अतिंरिक्तस्येत्यतिं-रिक्तस्य ।
शान्त्यै । [10]अष्टाप्रूडित्यष्टा-प्रूट् । हिरंण्यम् । दक्षिं-
णा । अष्टापदीत्यष्टा-पदी । हि । एषा । आत्मा ।

---

विष्टः विष्णुरादित्यः, तस्मै हविर्जुहोति । गर्भावदाने हेतुमाह—यद्वा इत्यादि । यदेव यज्ञस्य हविरतिरिच्यते गर्भाधिक्यात् यो वा पशोर्भूमा बहुत्वं हविराधिक्यहेतुः, या च पुष्टिः पशोर्गर्भस्य चाभिवृद्धिः तत्सर्वमादित्याधीनमित्यर्थः; तद्गत्यधीनत्वात्सर्वप्रवृत्तीनाम् । तस्मादेवं क्रियमाणे अतिरेकहोमे अतिरिक्त एव अतिरिक्तं स्थापितं भवति, अतिरेकदोषस्य शान्त्यै भवतीति ॥

[10]अष्टाप्रूडित्यादि ॥ अष्टाप्रूडष्टफलकमित्याचार्याः । अष्टबिन्दुकमित्येके । अष्टौ निष्कमित्यपरे । अष्टापदी ह्येषा वशा

नवमः पशोराप्त्यां अन्तरकोश उ-
ष्णीषेणाविष्टितं भवत्येवमिव हि
पशुरुल्बमिव चर्मेव मा॑ꣳसमिवा-
स्थीव यावानेव पशुस्तमाप्त्वाऽवं रु-

नवमः । पशोः । आप्त्यै । अन्तरकोश इत्यन्तर–
कोशे । उष्णीषेण । आविष्टितमित्या–विष्टितम् ।
भवति । एवम् । इव । हि । पशुः । उल्बम् । इव ।
चर्म । इव । मा॑ꣳसम् । इव । अस्थि । इव । या-
वान् । एव । पशुः । तम् । आप्त्वा । अवेति । रु-

---

प्रजा पदैस्सह । तस्मादात्मना नवमेन सहायवान् पशुस्तस्य आप्त्यै भवति । अष्टाप्रूड्ढिरण्यम् । तच्चान्तरकोशे उष्णीषेणाविष्टितं भवति । छान्दसो वर्णविकारः । अत्रैवं कर्तव्यम्—इदमष्टाप्रूड्ढिरण्यं वाससा अपनह्य उष्णीषेण विगृध्येदभ्रे कोशे अवधाय महति कोशे अन्तर्दधाति । एतच्च कोशामिश्रमध्वर्यवे देयमिति । एवमिव हि पशुर्भवति । कथमिव? आह—उल्बमिवेत्यादि । कोशे चतुष्टयमुल्बादिचतुष्टयस्थानीयमस्येति । यावानित्यादि । यावानन्यूनानतिरिक्तः पशुः तमाप्त्वा वशायागफलमवरुन्धे । कः? यस्यैषा यज्ञे प्रायश्चित्तिः क्रियते । वशाया गर्भनिरीक्षणे इष्ट्वा च वसीयान् भवति वसुमत्तरो भवति, न केवलं वशायागफलभाग्येव, अपि तु वसीयांश्च भवतीति प्राय इति साकल्यस्य न्यूनत्वमुच्यते, चित्तिस्तद्विषयज्ञानं, तद्दोषाप-

न्धे यस्यैषा यज्ञे प्रायश्चित्तिः क्रियत
इष्ट्वा वसीयान्भवति ॥ ४ ॥
आ वायो भूष शुचिपा उप नस्स-
हस्रं ते नियुतो विश्ववार । उपो ते

न्धे । यस्य । एषा । यज्ञे । प्रायश्चित्तिः । क्रियते ।
इष्ट्वा । वसीयान् । भवति ॥ ४ ॥

वर्तयेत्याह न इति वै नाभ्या उल्बमिवैक-
विंशतिश्च ॥ १ ॥

[1]एति । वायो इति । भूष । शुचिपा इति
शुचि–पाः । उपेति । नः । सहस्रम् । ते । नियुत
इति नि–युतः । विश्ववारेति विश्व–वार । उपो इति ।

---

नोदनं यत्क्रियते तत्प्रायश्चित्तम् । दासीभारादिदं द्रष्टव्यम् । वसु-
मच्छब्दादीयसुनि 'विन्मतोः' इति लुक्, 'टेः' इति टिलोपः ॥

इति तृतीये चतुर्थे प्रथमोनुवाकः.

---

[1]अजावशाया उपाकरणेऽनुवर्तयति—आ वायो इति त्रिष्टुप् ॥
इयं व्याख्याता ग्रहेषु* । हे वायो शुचिपाः अस्मानुपेत्य

---

*सं. १-४-४.

अन्धो मद्यमयामि यस्य देव दधि-
षे पूर्वपेयम् । आकूत्यै त्वा कामा-
य त्वा समृधे त्वा किक्किटा ते

ते । अन्धः । मद्यम् । अयामि । यस्य । देव । दधिषे । पूर्वपेयमिति पूर्व-पेयम् । [2]आकूत्या इत्या-कूत्यै । त्वा । कामाय । त्वा । समृध इति सं-ऋधे । त्वा । [3]किक्किटा । ते । मनः । प्रजापत-

---

आभूषय हे विश्ववार यस्य ते सहस्रं नियुतं अश्वाः । तस्य ते अन्धः अन्नं मद्यं मदहेतुं उपायामि उपगच्छामि । हे देव यस्य च पूर्वपेयं दधिषे दधासि तत्संपादयामीति ॥

[2]नियोजने अनुवर्तयति ॥ आकूत्यै त्वेति यजुः—आकूतिः संकल्पलक्षणा देवी तस्यै हे वशे त्वां नियुनज्मि । कूङ् शब्दे, 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् । कामाय इच्छायै । समृधे समृद्ध्यै । संपदादिलक्षणः क्विप् ॥

[3]पर्यग्नौ क्रियमाणे किक्किटाकारं जुहोति—किक्किटा ते इत्यादिभिर्यजुर्भिः ॥ किक्किटेत्यनुकरणशब्दोयं छान्दसः डाजन्तः, पशूनां रतिजनितो ध्वनिविशेषः अनेनानुक्रियते । हे पशो त्वां किक्किटाकृत्य प्रीणयित्वा ते त्वदीयं मनः प्रजापतये स्वाहुतं करोमि ददामीत्यर्थः । पशूनां किक्किटाकाररतित्वात् तत्प्रीणनार्थं किक्किटाकृत्य ददामि न पुनः प्रतिकूलं तवाचरामीत्येवमर्थमिदमु-

मनः प्रजापतये स्वाहा किक्किटा
ते प्राणं वायवे स्वाहा किक्किटा ते
चक्षुस्सूर्याय स्वाहा किक्किटा ते
श्रोत्रं द्यावापृथिवीभ्याꣳ स्वाहा
किक्किटा ते वाचꣳ सरस्वत्यै स्वाहा
॥५॥ त्वं तुरीया वशिनी वशाऽ-

य इति प्रजा-पतये । स्वाहा । किक्किटा । ते । प्राणमिति प्र-अनम् । वायवे । स्वाहा । किक्किटा । ते । चक्षुः । सूर्याय । स्वाहा । किक्किटा । ते । श्रोत्रम् । द्यावापृथिवीभ्यामिति द्यावा-पृथिवीभ्याम् । स्वाहा । किक्किटा । ते । वाचम् । सरस्वत्यै । स्वाहा ॥ ५ ॥ [4]त्वम् । तुरीया । वशिनी । वशा । अ-

च्यते । ब्राह्मणं च भवति—'किक्किटाकारेण वै ग्राम्याः पशवो रमन्ते'* इत्यादि । एवं किक्किटाकृत्य तव प्राणं वायवे ददामि चक्षुस्सूर्याय ददामि । श्रोत्रं द्यावापृथिवीभ्यां ददामि । वाचं सरस्वत्यै ददामि । एवं यदुदानानि [नादीनि] मनआदीनि तत्रैव हूयन्ते ॥

[4]अथैनामन्तरेण चात्वालोत्करौ उदीचीं नीयमानामनुमन्त्रयते—त्वं तुरीयेति त्रिष्टुभा ॥ वशे त्वं तुरीया चतुर्थी लोकत्रये; उत्तरस्मिन् मन्त्रे लोकत्रयस्य वक्ष्यमाणत्वात् तैर्लोकैस्समत्वमापाद्येयं

*सं. ३-४-३.[10]

रिंसि सकृद्यत्त्वा मनसा गर्भ आऽशा-
यत् । वशा त्वं वशिनी गच्छ दे-
वान्त्सत्यास्सन्तु यजमानस्य का-
माः । अजाऽसि रयिष्ठा पृथिव्या॑ꣳ

सि । सकृत् । यत् । त्वा । मनसा । गर्भः । एति ।
अशयत् । वशा । त्वम् । वशिनी । गच्छ । देवान् ।
सत्याः । सन्तु । यजमानस्य । कामाः । [5]अजा ।
असि । रयिष्ठेति रयि–स्था । पृथिव्याम् । सीद ।

---

स्तूयते । 'चतुरश्छयतावाद्यक्षरलोपश्च' इति छयतौ । वशिनी वशावती वश इन्द्रियसंयमः, तद्वती; यस्माच्चिरं वृषस्यन्ती न भवति । वशा क*मनीया सकृत्प्रसूता वन्ध्या वशा दैवा [द] भवत् यस्मात्त्वां मनसा संकल्पेन सकृदेकवारं गर्भ आशयत् आगत्य त्वां त्वदुदरे शयितवान्, तस्माद्वशाऽसि, यस्मात्सकृदेव तस्माद्वशिनी चासि । द्वितीयादिप्रवृत्तौ मनःप्रवृत्तिरेव नास्तीति सा त्वं वशा च वशिनी च सती पुनःप्रसवरहिता देवान् गच्छ स्वर्गं गच्छ सत्यास्सन्तु यजमानस्य कामाः । 'एष वै कामो यजमानस्य यदनार्त उदृचं गच्छति '† इति ॥

[5]उपासने वर्तयति—अजाऽसीति यजुः ॥ अजा त्वमसि रयिष्ठा धने स्थिता धनहेतुभूता त्वं पृथिवीं सीद आस्व । ततः ऊर्ध्वा उन्नीता अन्तरिक्षमुपतिष्ठस्व दिवि ते तव बृहद्भाः महती दीप्तिः ।

---

*पु. का. †सं. ३-४-३.[12]

सीदोर्ध्वान्तरिक्षमुप तिष्ठस्व दिवि ते बृहद्भाः । तन्तुं तन्वन्रजसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष धिया कृतान् । अनुल्बणं वयत जोगुवामपो मनुर्भव जनया दैव्यं

ऊर्ध्वा । अन्तरिक्षम् । उपेति । तिष्ठस्व । दिवि । ते । बृहत् । भाः । [6]तन्तुम् । तन्वन् । रजसः । भानुम् । अन्विति । इहि । ज्योतिष्मतः । पथः । रक्ष । धिया । कृतान् । अनुल्बणम् । वयत । जोगुवाम् । अपः । मनुः । भव । जनय । दैव्यम् ।

---

भासेरसुनि भाः । यद्वा—'भ्राजभास' इति भासतेः क्विप् । बृहदिति लिङ्गव्यत्ययः । एवं त्रिष्वपि लोकेषु तिष्ठेति ॥

[6]अथास्यै वपां जुहोति—तन्तुं तन्वन्निति जगत्या ॥ तन्तुं विस्तारं तन्वन् कुर्वन् तस्य रजसः उदकस्य । हेतौ शता । वृष्ट्यर्थं भानुमादित्यं अन्विहि अनुगच्छ । किं च—ज्योतिष्मतः प्रकाशवतः पथः मार्गान् धिया कृतान् कर्मणा प्रज्ञया वा संपादितान् रक्ष यजमानार्थं पथस्संपादय । तदर्थमस्माकं जोगुवां कर्मसमाप्त्यर्थं त्वरमाणानाम् । पुरीषे गुशब्दः, अत्र तु वेगितायां गतौ वर्तते,* यङ्लुगन्तात् क्विप् । एवं कुर्वतां संभाव्यमानप्र-

---

*गु पुरीषोत्सर्गे, तुदादिः, गुङ् शब्दे, भ्वादिः.

जनम् । मनसो हविरसि प्रजापतेर्वर्णो गात्राणां ते गात्रभाजो भूयास्म ॥ ६ ॥

जनम् । [7]मनसः । हविः । असि । प्रजापतेरिति प्रजा–पतेः । वर्णः । [8]गात्राणाम् । ते । गात्रभाज इति गात्र–भाजः । भूयास्म ॥ ६ ॥

सरस्वत्यै स्वाहा मनुस्त्रयोदश च ॥ २ ॥

मादानामस्माकं अपः कर्म अनुल्बणं कर्म वयतेति । उत्पूर्वाद्धन्तेः पचाद्यच्, छान्दसो वर्णविकारः उल्बणमिति । किंच— हे वशे मनुः मन्त्री भव । कथं मन्तव्यं जनय उत्पादय दैव्यं अमानुषं जनम् । 'अन्येषामपि दृश्यते' इति दीर्घत्वम् । देवाद्यञ् । यजमानो वा उच्यते—मनुरिव स्रष्टा भव प्रजानाम् । अत्र ब्राह्मणं 'यदेव यज्ञ उल्बणं क्रियते तस्यैवैषा शान्तिः'* इति ॥

[7]हविर्जुहोति—मनस इति ॥ 'मनो वै प्रजापतिः' इति मनश्शब्देनाभेदात्प्रजापतिरुच्यते प्रजापतेर्हविस्त्वमसीति । तस्मात्प्रजापतेः वर्णः प्रजापतेस्सर्वदेवतामयत्वात् सर्वदेवतास्त्वमसीति स्तुतिः । वक्ष्यति हि 'सा वा एषा सर्वदेवत्या यदजा'† इति । यद्वा— या वक्ष्यमाणा अस्या देवता अग्न्यादयः तासां प्रजापतिरुपलक्षणः ॥

[8]अथास्या अवदानानि प्राश्नाति—गात्राणामिति ॥ त्वदीयानां गात्राणां संबन्धिनो वयं गात्रभाजो भूयास्म त्वत्संबन्धात् पुनरपि कर्मकृतो भूयास्म । यद्वा—अविकलाङ्गा भूयास्मेत्याशास्ते ॥

इति तृतीये चतुर्थे द्वितीयोनुवाकः.

---

*सं. ३-४-३.[14] †सं. ३-४-३.[3]

इमे वै सहास्तां ते वायुर्व्यवात्ते
गर्भमदधातां तꣳ सोमः प्राजनयद-
ग्निरग्रसत स एतं प्रजापतिराग्नेयम-
ष्टाकपालमपश्यत्तं निरवपत्तेनैवैना-
मग्नेरधि निरक्रीणात्तस्मादप्यन्यदेव-

[1]इमे इति । वै । सह । आस्ताम् । ते इति । वायुः । वीति । अवात् । ते इति । गर्भम् । अदधाताम् । तम् । सोमः । प्रेति । अजनयत् । अग्निः । अग्रसत । सः । एतम् । प्रजापतिरिति प्रजा–पतिः । आग्नेयम् । अष्टाकपालमित्यष्टा–क-पालम् । अपश्यत् । तम् । निरिति । अवपत् । तेन । एव । एनाम् । अग्नेः । अधि । निरिति । अक्रीणात् । [2]तस्मात् । अपीति । अन्यदेवत्यामि-

---

[1]अथाजावशाया ब्राह्मणमेव—इमे वा इत्यादि ॥ इयं चासौ च इमे, 'त्यदादीनां यद्यत्परं तच्छिष्यते' इतीदमश्शेषः । द्यावा-पृथिव्यौ पूर्वं सहास्तां अपृथगभूताम् । ते वायुः व्यवात् व्यग-मयत् पृथक्त्वेनोपर्यधश्च ईरितवान् । ते द्यावापृथिव्यौ वायुना संपरिष्वक्ते गर्भमदधाताम् । तं गर्भं सोमः प्राजनयत् जनया-मास । अग्निस्तमग्रसत । प्रजापतिराग्नेयेनाष्टाकपालेन एनां वशां अग्नेर्निष्क्रीतवान् । 'अधिपरी अनर्थकौ' इत्यधिशब्दोनर्थकः ॥

[2]तस्मादित्यादि ॥ या एता ब्राह्मणाभिहिता वाय्वादयो देव-

त्यांमालभंमान आग्नेयमष्टाकंपालं
पुरस्तान्निर्वंपेदग्नेरेवैनामधिं निष्क्री-
यालंभते यत् ॥ ७ ॥ वायुर्व्यंवात्त-
स्मांद्वायव्यां यदिमे गर्भमदंधातां

त्यंन्य-देवत्यांम् । आलभंमान इत्यां-लभंमानः ।
आग्नेयम् । अष्टाकंपालमित्यष्टा-कपालम् । पुर-
स्तांत् । निरितिं । वपेत् । अग्नेः । एव । एनाम् ।
अधीतिं । निष्क्रीयेतिं निः-क्रीयं । एतिं । लभते ।
[3]यत् ॥ ७ ॥ वायुः । व्यवादितिं वि-अवात् । त-
स्मांत् । वायव्यां । यत् । इमे इतिं । गर्भम् ।

---

तास्तासां अन्यतमदेवत्यामप्यालभमानः नाग्निदेवत्यामेव । देवतान्ता-
त्तादर्थ्ये यत् ॥

[3]इदानीं ता एवास्या देवता दर्शयति—यद्वायुरित्यादि ॥
वायोरपि त्रिस्थानीयत्वात् वायव्या वशा । 'वाय्वृतुपित्रुषसो
यत्'। यदिमे इति । द्यावापृथिव्यौ मातृस्थानीयत्वात् । द्यावा-
पृथिव्यादिना यत् । यत्सोम इत्यादि । प्रजननहेतुस्सोमः अग्निः
ग्रासकः अग्नेश्चेयं निष्क्रीता, तस्मादग्नीषोमीया । तेनैव छः ।
यदनयोरित्यादि । अनयोर्द्यावापृथिव्योः वियत्योः विगच्छन्त्योः
वागवदत् शब्दस्समजनि विपाटनजन्मा तस्मादियं सारस्वती ।
उदात्तनिवृत्तिस्वरेण दीर्घे उदात्तत्वम् । विपूर्वादेतेश्शतरि 'शतु-

तस्माद्द्यावापृथिव्या यत्सोमः प्राजनयदग्निरग्रसत तस्मादग्नीषोमीया यदनयोर्वियत्योर्वागवदत्तस्मात्सारस्वती यत्प्रजापतिरग्नेरधि निरक्रीणात्तस्मात्प्राजापत्या सा वा एषा सर्वदेवत्या यदजा वशा वायव्यामा

अदधाताम् । तस्मात् । द्यावापृथिव्येति द्यावा—पृथिव्या । यत् । सोमः । प्रेति । अजनयत् । अग्निः । अग्रसत । तस्मात् । अग्नीषोमीयेत्यग्नी—सोमीया । यत् । अनयोः । वियत्योरिति वि—यत्योः । वाक् । अवदत् । तस्मात् । सारस्वती । यत् । प्रजापतिरिति प्रजा—पतिः । अग्नेः । अधीति । निरक्रीणादिति निः—अक्रीणात् । तस्मात् । प्राजापत्येति प्राजा—पत्या । सा । वै । एषा । सर्वदेवत्येति सर्व—देवत्या । यत् । अजा । वशा । [4]वायव्याम् । एति ।

---

रनुमः' इति विभक्तेरुदात्तत्वम् । यत्प्रजापतिरित्यादि । पत्युत्तरपदलक्षणोण्यः । सा वा एषेत्यादि । तस्मात्सैषाऽजा वशा नैकदेवत्या ॥

[4]इदानीं काम्यदेवताविशेषं विदधाति—वायव्यामा लभेतेत्यादि ॥

लभेत भूतिकामो वायुर्वै क्षेपिष्ठा
देवता वायुमेव स्वेन ॥ ८ ॥ भाग-
धेयेनोप धावति स एवैनं भूतिं ग-
मयति द्यावापृथिव्यामा लभेत कृ-
षमाणः प्रतिष्ठाकामो दिव एवास्मै
पर्जन्यो वर्षति व्यस्यामोषधयो

लभेत । भूतिकाम इति भूति–कामः । वायुः ।
वै । क्षेपिष्ठा । देवता । वायुम् । एव । स्वेन ॥८॥
भागधेयेनेति भाग–धेयेन । उपेति । धावति । सः ।
एव । एनम् । भूतिम् । गमयति । [5]द्यावापृथिव्या-
मिति द्यावा–पृथिव्याम् । एति । लभेत । कृषमा-
णः । प्रतिष्ठाकाम इति प्रतिष्ठा–कामः । दिवः ।
एव । अस्मै । पर्जन्यः । वर्षति । वीति । अ-

---

वायुदेवत्यामिमामालभेत भूतिकामः भूष्णुताकामः । 'शीलिकामि' इत्यादिना णः, पूर्वपदप्रकृतिस्वरत्वं च । क्षेपिष्ठा क्षिप्रकारिका । 'स्थूलदूर' इति यणादिलोपो गुणश्च । स्वेनात्मीयेन भागधेयेन उपधावति उपसर्पति । स्वार्थिको धेयप्रत्ययः ॥

[5]द्यावापृथिव्यामित्यादि ॥ प्रतिष्ठा क्षेत्रसस्यसमृद्धिः । अस्मै एतदर्थमेव पर्जन्यो दिवः वृष्टिं पातयति । ओषधयश्चास्यां रोहन्ति

रोहन्ति समर्धुकमस्य सस्यं भवत्य-
ग्नीषोमीयामा लभेत यः कामयेता-
न्नवानन्नादस्स्यामित्यग्निनैवान्नमवरु-
न्धे सोमेनान्नाद्यमन्नवानेवान्नादो भ-
वति सारस्वतीमा लभेत यः ॥१॥
ईश्वरो वाचो वदितोस्सन्वाचं न व-

स्याम् । ओषधयः । रोहन्ति । समर्धुकमिति सं-अर्धुकम् । अस्य । सस्यम् । भवति । [6]अग्नीषोमीयामित्यग्नी-सोमीयाम् । एति । लभेत । यः । कामयेत । अन्नवानित्यन्न-वान् । अन्नाद इत्यन्न-अदः । स्याम् । इति । अग्निना । एव । अन्नम् । अवेति । रुन्धे । सोमेन । अन्नाद्यमित्यन्न-अद्यम् । अन्नवानित्यन्न-वान् । एव । अन्नाद इत्यन्न-अदः । भवति । [7]सारस्वतीम् । एति । लभेत । यः ॥ १ ॥ ईश्वरः । वाचः । वदितोः । सन् । वा-

---

विविधमुत्पद्यन्ते । समृद्धिशीलं चास्य सस्यं भवति । छान्दस उकञ् ॥

[6]अग्नीषोमीयामित्यादि ॥ अन्नवान् बह्वन्नः । अन्नादः अन्नादनसमर्थः । अन्नस्यादनमन्नाद्यं, छान्दसो भावे यत् ॥

[7]सारस्वतीमित्यादि.... ॥

देवाग्वै सरस्वती सरस्वतीमेव स्वेन
भागधेयेनोप धावति सैवास्मिन्वाचं
दधाति प्राजापत्यामा लभेत यः
कामयेतानभिजितमभि जयेयमिति
प्रजापतिस्सर्वा देवता देवताभिरेवा-
नभिजितमभि जयति वायव्ययोपा-

चम् । न । वदेत् । वाक् । वै । सरस्वती । सर-
स्वतीम् । एव । स्वेन । भागधेयेनेति भाग-धेये-
न । उपेति । धावति । सा । एव । अस्मिन्न् ।
वाचम् । दधाति । [8]प्राजापत्यामिति प्राजा-प-
त्याम् । एति । लभेत । यः । कामयेत । अनभि-
जितमित्यनभि-जितम् । अभीति । जयेयम् ।
इति । प्रजापतिरिति प्रजा-पतिः । सर्वाः । देव-
ताः । देवताभिः । एव । अनभिजितमित्यनभि-
जितम् । अभीति । जयति । वायव्यया । उपा-

---

[8] ....उपायान्तरेणानभिजितमभिजयेयमिति । प्रजापतेस्सर्वदेवता-
त्मकत्वात् सर्वाभिर्देवताभिरनभिजितं सर्वमभिजयति । वायव्ययेति ।
'आ वायो भूष'* इत्यनया वायुसकाशादेवैनां लब्ध्वा आलभते ॥

*सं. ३-४-२.[1]

करोति वायोरेवैनामवरुध्यालभत
आकूत्यै त्वा कामाय त्वा ॥ १० ॥
इत्याह यथायजुरेवैतत्किक्किटाकारं
जुहोति किक्किटाकारेण वै ग्राम्याः
पशवो रमन्ते प्रारण्याः पं-

करोतीत्युप–आकरोति । वायोः । एव । एनाम् । अवरुध्येत्यव–रुध्य । एति । लभते । [9]आकूत्या इत्या–कूत्यै । त्वा । कामाय । त्वा ॥ १० ॥ इति । आह । यथायजुरिति यथा–यजुः । एव । एतत् । [10]किक्किटाकारमिति किक्किटा–कारम् । जुहोति । किक्किटाकारेणेति किक्किटा–कारेण । वै । ग्राम्याः । पशवः । रमन्ते । प्रेति । आरण्याः ।

---

[9]आकूत्यै त्वेत्यादि नियोजनमन्त्रोयम् ॥ यथा यजुरेष मन्त्रो वदति एवमेतत्फलं भवत्याकूत्यादिकम् ॥

[10]किक्किटाकारमित्यादि ॥ अनुकरणशब्दोयमुक्तः । किक्किटाकारं किक्किटाकृत्य जुहोति किक्किटाकारेण प्रीणयित्वा 'किक्किटा ते मनः'* इत्यादिभिः पंचभिर्जुहोति । छान्दसो णमुल् । किक्किटाकारेण वा सुबोधश्च धमः? । रमन्ते प्रीणयन्ते प्रपतन्ति पलायन्ति । तत्र ग्राम्याः पशवः गोश्वाजाविकं पुरुषाऽश्वग-

*सं, ३-४-२.[3]

तन्ति यत्किंक्किटाकारं जुहोति ग्रा-
म्याणां पशूनां धृत्यै पर्यग्नौ क्रिय-
माणे जुहोति जीवन्तीमेवैनाꣳ सु-
वर्गं लोकं गमयति त्वं तुरीया व-
शिनी वशाऽसीत्याह देवत्रैवैनां ग-

पतन्ति । यत् । किंक्किटाकारमिति किंक्किटा–का-
रम् । जुहोति । ग्राम्याणाम् । पशूनाम् । धृत्यै ।
[11]पर्यग्नाविति परि–अग्नौ । क्रियमाणे । जुहोति ।
जीवन्तीम् । एव । एनाम् । सुवर्गमिति सुवः–गम् ।
लोकम् । गमयति । [12]त्वम् । तुरीया । वशिनी ।
वशा । असि । इति । आह । देवत्रेति देव–त्रा ।

---

दभोष्ट्रं चेति सप्त । अश्वतरमेके ब्रुवते । अथाऽऽरण्याः पशवः द्विखुराः, श्वापदानि, पक्षिणश्च, सरीसृपाः, हस्ती च, मर्कटश्च, नादेयाश्चेति सप्त ॥

[11]पर्यग्नावित्यादि ॥ पर्यग्निकरणे क्रियमाणे इत्यर्थः । जीवन्तीमित्यादि । जीवदवस्थायामेवास्यां मनआदीनां प्राजापत्यादिषु हुतत्वात् ॥

[12]त्वं तुरीयेत्यादि ॥ उदीचीं नीयमानामेतेनानुमन्त्रयमाणे देवान् गमयत्येनाम्, 'वशिनी गच्छ देवान्'* इति लिङ्गात् । 'देवमनुष्य'

---

*सं. ३-४-२,⁴

मयति सत्यास्सन्तु यजमानस्य
कामा इत्याहैष वै कामः ॥ ११ ॥
यजमानस्य यदनार्त उदृचं गच्छ-
ति तस्मादेवमाहाजाऽसि रयिष्ठे-
त्याहैष्वेवैनां लोकेषु प्रतिष्ठापयति
दिवि ते बृहद्भा इत्याह सुवर्ग एवा-

एव । एनाम् । गमयति । सत्याः । सन्तु । यज-
मानस्य । कामाः । इति । आह । एषः । वै ।
कामः ॥ ११ ॥ यजमानस्य । यत् । अनार्तः ।
उदृचमित्युत्—ऋचम् । गच्छति । तस्मात् । एवम् ।
आह । [13]अजा । असि । रयिष्ठेति रयि—स्था ।
इति । आह । एषु । एव । एनाम् । लोकेषु । प्र-
तीति । स्थापयति । दिवि । ते । बृहत् । भाः । इति ।
आह । सुवर्ग इति सुवः—गे । एव । अस्मै । लोके ।

इति त्राप्रत्ययः । सत्या इत्यादि । उदृचं समाप्तिम् । यज्ञस्य यदनार्तो गच्छति एष एव यजमानस्य कामः । तस्मादेवमाहाध्वर्युः 'सत्यास्सन्तु यजमानस्य कामाः'* इति, न काम्यान्तरमस्येति ॥

[13]अजाऽसीत्यादि ॥ उपासनमन्त्रोयम् । दिवीत्यादि । अस्मै यजमानाय स्वर्गे लोके ज्योतिर्दधाति ॥

* सं ३-४-२.4

स्मै लोके ज्योतिर्दधाति तन्तुं त-
न्वन्नजसो भानुमन्विहीत्याहेमाने-
वास्मै लोकाञ्ज्योतिष्मतः करोत्यनु-
ल्बणं वयत जोगुवामप इति॥१२॥
आह यदेव यज्ञ उल्बणं क्रियते त-
स्यैवैषा शान्तिर्मनुर्भव जनया दैव्यं
जनमित्याह मानव्यो वै प्रजास्ता

ज्योतिः । दधाति । [14]तन्तुम् । तन्वन् । रजसः । भानुम् । अन्विति । इहि । इति । आह । इमान् । एव । अस्मै । लोकान् । ज्योतिष्मतः । करोति । अनुल्बणम् । वयत । जोगुवाम् । अपः । इति ॥ १२ ॥ आह । यत् । एव । यज्ञे । उल्बणम् । क्रिय-ते । तस्य । एव । एषा । शान्तिः । मनुः । भव । जनय । दैव्यम् । जनम् । इति । आह । मानव्यः । वै । प्रजा इति प्र—जाः । ताः । एव । आद्याः ।

---

[14]तन्तुं तन्वन्नित्यादि ॥ गतम् ।* अयं च वपाहोममन्त्रः । उल्बणं मात्रातिरिक्तत्वं मातव्ये । उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वे 'उदात्तस्वरितयोर्यणः' इति विभक्तिस्स्वर्यते । सर्वाः प्रजाः आद्या भोक्तव्याः विधेयाः कुरुते यजमानः ॥

---

* सं. ३-४-२.6

एवाद्याः कुरुते मनसो हविरसी-
त्याह स्वगाकृत्यै गात्राणां ते गा-
त्रभाजोभूयास्मेत्याहाशिषमेवैतामा
शास्ते तस्यैवा एतस्या एकमेवा-
देवयजनं यदालब्धायामभ्रः ॥१३॥

कुरुते । [15]मनसः । हविः । असि । इति । आह । स्वगाकृत्या इति स्वगा–कृत्यै । [16]गात्राणाम् । ते । गात्रभाज इति गात्र–भाजः । भूयास्म । इति । आह । आशिषमित्या–शिषम् । एव । एताम् । एति । शास्ते । [17]तस्यै । वै । एतस्याः । एकम् । एव । अदेवयजनमित्यदेव–यजनम् । यत् । आलब्धायामित्या–लब्धायाम् । अभ्रः ॥ १३ ॥ भव-

---

[15]मनस इति हविर्होममन्त्रः—स्वगाकृत्यै आत्मीयदेवताया यत्स्वीकरणं तदर्थम् । 'ऊर्यादिच्विडाचश्च' इति डाच् । अस्य गतित्वात् 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् ॥

[16]गात्राणामित्यवदानप्राशनमन्त्रः ॥ भूयास्मेत्यादिकामाशिषमनेना शास्ते ॥

[17]तस्यै वा इत्यादि ॥ तस्या अजावशायाः एकमेवादेवयजनं अदेवयोग्यम्, आलम्भनकाले एकं परिहर्तव्यं, किम्? यत् आलब्धायामस्यां गगने अभ्रो भवति दुर्दिनं भवतीत्यर्थः । तत्र यान्य,

भवति यदालब्धायामभ्रस्स्यादप्सु
वा प्रवेशयेथ्सर्वां वा प्राश्नीयाद्यद-
प्सु प्रवेशयेद्यज्ञवेशसं कुर्याथ्सर्वामे-
व प्राश्नीयादिन्द्रियमेवात्मन्धत्ते सा
वा एषा त्रयाणामेवावरुद्धा संवथ्स-

ति । यत् । आलब्धायामित्या—लब्धायाम् । अ-
भ्रः । स्यात् । अप्स्वित्यप्—सु । वा । प्रवेशयेदिति
प्र—वेशयेत् । सर्वाम् । वा । प्रेति । अश्नीयात् ।
यत् । अप्स्वित्यप्—सु । प्रवेशयेदिति प्र—वेशयेत्।
यज्ञवेशसमिति यज्ञ—वेशसम् । कुर्यात् । सर्वाम्।
एव। प्रेति। अश्नीयात् । इन्द्रियम्।एव । आत्मन्न्।
धत्ते । [18]सा । वै । एषा । त्रयाणाम् । एव । अव-
रुद्धेत्यव—रुद्धा । संवत्सरसद इति संवत्सर—सदः।

हान्यमेघसंपन्नानि मन्यते तेषु तामालभेत । तत्र प्रमादात् यद्याल-
ब्धायामभ्रस्स्यात् अप्सु वैनां प्रवेशयेत्, सर्वां वा यजमान एव
अन्वहं प्राश्नीयात् । प्रथमं पक्षं दूषयति—यदप्स्वित्यादि । यज्ञवे-
शसं यज्ञमेव व्यापादयेत् । तस्मात् 'एतेनैवास्यामन्त्रणोपादानानां
प्रास्याथेतरावभ्रावनुप्रहरेत्' इति बोधायनः । 'निधायैनामाद्यात्'
इत्याजीगविः ॥

[18]सा वा एषेत्यादि ॥ गतम् ।* तस्मात्तेषामेवैकोनया यजेतेति ।

* सं ३-४-३,3

रसर्दस्सहस्रयाजिनो गृहमेधिनस्त
एवैतयां यजेरन्तेषामेवैषाऽऽप्ता॥१४
चित्तं च चित्तिश्चाकूतं चाकूतिश्च
विज्ञातं च विज्ञानं च मनश्च शक्क-

सहस्रयाजिन इति सहस्र-याजिनः । गृहमेधिन
इति गृह-मेधिनः । ते । एव । एतयां । यजेरन् ।
तेषाम् । एव । एषा । आप्ता ॥ १४ ॥

यत्स्वेन सारस्वतीमा लभेत यः कामाय
त्वा कामोप इत्यष्टौ द्विचत्वारिंशच्च ॥३॥

[1]चित्तम् । च । चित्तिः । च । आकूतमित्या-
कूतम् । च । आकूतिरित्या-कूतिः । च । विज्ञा-
तमिति वि-ज्ञातम् । च । विज्ञानमिति वि-ज्ञा-
नम् । च । मनः । च । शक्करीः । च । दर्शः ।

तेषामेवैषाप्ता एतत्फलावाप्तिरिति ॥

इति तृतीये चतुर्थे तृतीयोनुवाकः

---

[1]अथ जयाः स्पर्धमानस्य 'स्पर्धमानेनैते होतव्याः'* इति, सामा-
न्येन विहिताश्च 'येन कर्मणेर्त्सेत्'† इति । चित्तं चेत्यादयस्त्रुवा-

*सं. ३-४-४.[3] †सं. ३-४-६.

रीश्च दर्शश्च पूर्णमासश्च बृहच्च र-
थंतरं च प्रजापतिर्जयानिन्द्राय वृ-
ष्णे प्रायच्छदुग्रः पृतनाज्येषु तस्मै
विशस्समनमन्त सर्वास्स उग्रस्स

च । पूर्णमास इति पूर्ण—मासः । च । बृहत् । च ।
रथन्तरमिति रथं—तरम् । च । [2]प्रजापतिरिति प्र-
जा—पतिः । जयान् । इन्द्राय । वृष्णे । प्रेति ।
अयच्छत् । उग्रः । पृतनाज्येषु । तस्मै । विशः ।
समिति । अनमन्त । सर्वाः । सः । उग्रः । सः ।

---

हुतयः । चशब्दस्समुच्चयार्थः; वाक्यस्यापरिसमाप्तत्वात् । माऽस्त्विति शेषः । येन चेतयते तच्चित्तम् । चित्तिश्चेतना । आकूतं संकल्प्यो विषयः । आकूतिस्संकल्पः । विज्ञातं विविधं ज्ञातव्यम् । विज्ञानं विविधं वेदनम् । मनः अन्तःकरणम् । शक्वरी शक्वर्यः चक्षुरादि-बाह्येन्द्रियशक्तयः । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । आकू-त्यादिषु त्रिषु गतेः प्रकृतिस्वरत्वम् । दर्शपूर्णमासौ कालौ, कर्मणी वा । सर्वेषां कर्मकालानां कर्मणां च प्रधानयोरुपादानमुपलक्षणार्थम्। एवं बृहद्रथन्तरयोस्साम्नोर्वेदितव्यम् ॥

[2]अथ प्रजापतिर्जयानिति अत्र त्रयोदशी त्रिष्टुप् ॥ 'वृष्णे' इति प्रथमपादान्तः, 'सर्वाः' इति तृतीयपादान्तः । प्रजापतिर्जया-नेतानिन्द्राय वृष्णे वर्षित्रे प्रायच्छत् दत्तवान् । उग्रः उद्गीर्णः पृतनाज्येषु संग्रामाभिगमनेषु उद्गीर्णशक्तिः प्रजापतिः । यद्वा—

हि हव्यो बभूव देवासुरास्संयत्ता आसन्त्स इन्द्रः प्रजापतिमुपाधावत्त- स्मा एताञ्जयान्प्रायच्छत्तानजुहोत्त- तो वै देवा असुरानजयन् यदजय- न्तज्जयानां जयत्वꣳ स्पर्धमानेनैते

हि । हव्यः । बभूव । [3]देवासुरा इति देव-असु- राः । संयत्ता इति सं-यत्ताः । आसन् । सः । इन्द्रः । प्रजापतिमिति प्रजा-पतिम् । उपेति । अधावत् । तस्मै । एतान् । जयान् । प्रेति । अ- यच्छत् । तान् । अजुहोत् । ततः । वै । देवाः । असुरान् । अजयन् । यत् । अजयन् । तत् । जयानाम् । जयत्वमिति जय-त्वम् । स्पर्धमा-

---

जयान् लब्ध्वा इन्द्रः संग्रामेषूद्गीर्णो बभूव । अजः अञो वा भावे यंति छान्दसं रूपं, अत एवानवग्रहः । ततः प्रभृति तस्मै इन्द्राय सर्वा विशः प्रजास्समनमन्त प्रतिज्ञाविधेया अभवन् । स उग्रः स खलूग्रो भवति, यस्मै विशस्समनमन्त, याः पूर्वं स्पर्धिताः । यद्वा— यो जयान् जुहोति स खलूग्रो भवति स एव हव्यो यागार्हश्च इज्यश्च बभूव भवति । छान्दसो लिट् ॥

[3]अथ जयानां ब्राह्मणं—देवासुरा इत्यादि ॥ तज्जयानां जय-

होतव्या जयत्येव तां पृतनाम्॥१५
अग्निर्भूतानामधिपतिस्स माऽवत्वि-

नेन । एते । होतव्याः । जयति । एव । ताम् । पृतनाम् ॥ १५ ॥

उप पञ्चविंशतिश्च ॥ ४ ॥

[1]अग्निः । भूतानाम् । अधिपतिरित्यधि–पतिः । सः । मा । अवतु । [2]इन्द्रः । ज्येष्ठानाम् । [3]यमः ।

त्वमिति । जयति परसेनामेतैरिति जयाः ॥

इति तृतीये चतुर्थे चतुर्थोनुवाकः

[1]येन कर्मणेत्सेत्तत्राभ्यातानान् सप्तदश स्रुवाहुतीर्जुहोति—अग्निर्भूतानामित्यादीन् ॥ हुत्वाहुत्वा वाचयति—पितरः पितामहा इति । इयं जगती अतिजगती वा । 'आशिषि' इति तृतीयपादान्तः । अग्निः भूतानां प्रजानां अधिपतिः स्वामी स माऽवतु रक्षतु स्वाहुतमिदमस्तु तस्मा इति । 'अधिपतिस्स माऽवतु' इति सर्वत्रानुषज्यते । यत्र तु लिङ्गभेदो वचनभेदो वा भवति तत्राम्नायत एव स विशेषः, यथा—'अन्नं साम्राज्यानामधिपति तन्माऽवतु' 'मरुतो गणानामधिपतयस्ते माऽवन्तु'* इति ॥

[2]इन्द्रो ज्येष्ठानामधिपतिः [वृद्धतमानां लोकपालानाम्] ॥

*सं. ३-४-५.11, 17

न्द्रो ज्येष्ठानां यमः पृथिव्या वायु-
रन्तरिक्षस्य सूर्यो दिवश्चन्द्रमा
नक्षत्राणां बृहस्पतिर्ब्रह्मणो मित्र-
स्सत्यानां वरुणोपाꣳ समुद्रस्स्रो-
त्यानामन्नꣳ साम्राज्यानामधिपति

पृथिव्याः । [4]वायुः । अन्तरिक्षस्य । [5]सूर्यः । दिवः । चन्द्रमाः । नक्षत्राणाम् । [7]बृहस्पतिः । ब्रह्मणः । मित्रः । सत्यानाम् । [9]वरुणः । अपाम् । [10]समुद्रः । स्रोत्यानाम् । [11]अन्नम् । साम्राज्यानामिति सां–राज्यानाम् । अधिपतीत्यधि–पति । तत् । मा ।

---

[3]यमोऽग्निविशेषः, 'अग्निर्वाव यम इयं यमी '* इति । यम एव वा ॥

[4—6]वायुरन्तरिक्षस्येत्यादि ॥ गतम् ॥

[7]बृहस्पतिर्ब्रह्मणः ऋत्विजोधिपतिः ब्राह्मणजनेर्वा । बृहस्पति-शब्दो वनस्पत्यादित्वादाद्युदात्तः ॥

[8]मित्रस्सत्यानां सत्यवताम् ॥

[9]वरुणोपां स्थावराणाम् । 'ऊडिदम्' इति षष्ठ्या उदात्तत्वम् ॥

[10]समुद्रस्स्रोत्यानां स्रोतसि भवानां नद्यादीनाम् । 'स्रोतसो वि-भाषा ड्यड्ड्यौ' इति ड्यः ॥

[11]अन्नं साम्राज्यानां सम्यग्राजवतां अधिपति मा अवतु ॥

---

*सं. ३-३-८.[8]

तन्माऽवतु सोम ओषधीनाꣳ स-
विता प्रसवानाꣳ रुद्रः पशूनां त्व-
ष्टा रूपाणां विष्णुः पर्वतानां म-
रुतो गणानामधिपतयस्ते माऽवन्तु
पितरः पितामहाः परेऽवरे ततास्त-

अवतु । [12]सोमः । ओषधीनाम् । [13]सविता । प्रस-
वानामिति प्र–सवानाम् । [14]रुद्रः । पशूनाम् ।
[15]त्वष्टा । रूपाणाम् । [16]विष्णुः । पर्वतानाम् । [17]म-
रुतः । गणानाम् । अधिपतय इत्यधि–पतयः ।
ते । मा । अवन्तु । [18]पितरः । पितामहाः । परे ।
अवरे । ततः । ततामहाः । इह । मा । अवत ।

---

[12]सोम ओषधीनां फलपाकान्ताम् ॥

[13]सविता प्रसवानां अनुज्ञानानाम् ॥

[14]रुद्रः पशूनां द्विपदां चतुष्पदां च । 'नामन्यतरस्याम्' इति नाम उदात्तत्वम् ॥

[15]त्वष्टा रूपाणां रूपणीयानाम् ॥

[16]विष्णुः पर्वतानां धारणानां धराधराणां तेषामपि धारकत्वात् ॥

[17]मरुतो गणानां संघातानामधिपतयः ते मा अवन्तु ॥

[18]पितरः इत्यादीनि षडामन्त्रितपदानि । पितृततशब्दयोः पादा-

**तामहा इह माऽवत । अस्मिन्ब्रह्मन्न-स्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधा-**

**अस्मिन्न् । ब्रह्मन्न् । अस्मिन्न् । क्षत्रे । अस्याम् । आशिषीत्या–शिषि । अस्याम् । पुरोधायामिति**

---

दित्वात् षाष्ठिकमामन्त्रिताद्युदात्तत्वम् । अन्येषां तु निघातः । तत्र पितरः उत्पादयितारः । तेषां पितरः पितामहाः । जीव-पितृतार्थं पितामहग्रहणम् ॥

> लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः । *
> सपिण्डता तु पुरुषे सप्तमे विनिवर्तते ॥ † इति ॥

सप्तमादूर्ध्वं ये विप्रकृष्टास्ते परे । ततोर्वाचीनास्सन्निकृष्टाः अवरे । ततः येभ्यो दीयते पिण्डस्ते ततः पित्रादयस्त्रयः । तेषां पित-रस्ततामहाः ये न पृथक्पिण्डभाजः उभयत्रापि पिण्डभाजश्च । ते सर्वे यूयमिह कर्मणि वर्तमानं मां अवत रक्षत । अस्मि-न्नित्यादि । ‘निमित्तात्कर्मसंयोगे’ इति सर्वा निमित्तसप्तमी । अस्मिन् ब्रह्मन् ब्राह्मणे जातिनिर्देशोयं, इयं ब्राह्मणजातिस्संप-द्यतामिति । ब्राह्मणस्य निमित्तं वा । ‘ऊडिदम्’ इति सप्तम्या उदात्तत्वम् । क्षत्रे क्षत्रजातौ । आशिषि आशासनीये फले प्रजापश्वादौ । ‘आशासः क्वौ’ इतीत्वम्, ‘शासिवसि घसीनां च’ इति षत्वम् । पुरोधायां पुरस्करणे सर्वेषां प्राधान्ये । पुरस उपसर्गभावात् ‘आतश्चोपसर्गे’ इति भिदादिर्द्रष्टव्यः । कर्मणि

---

* मत्स्यपु.  † मनु ५-६२.

यांमस्मिन्कर्मन्नस्यां देवहूत्याम्॥१६

देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा एतानभ्यातानानप-

पुरः—धायाम् । अस्मिन्न् । कर्मन्न् । अस्याम् । देवहूत्यामिति देव—हूत्याम् ॥ १६ ॥

अवरे सप्तदश च ॥ ५ ॥

[1]देवाः । वै । यत् । यज्ञे । अकुर्वत । तत् । असुराः । अकुर्वत । ते । देवाः । एतान् । अभ्यातानानित्यभि—आतानान् । अपश्यन्न् । तान् ।

---

क्रियमाणे क्रियाविशेषे देवहूत्यां देवानामाह्वाने पूजायाम् । दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम् ॥

इति तृतीये चतुर्थे पञ्चमोनुवाकः

---

[1]अथ जयाभ्यातानानां राष्ट्रभृतां ब्राह्मणम् । तत्रादावनन्तराधिकृतानां विशिष्टफलहेतुत्वमाह—देवा वा इत्यादि ॥ अभ्यातन्यते आभिमुख्येनानीयते कर्मसमृद्धिरेभिरिति अभ्यातानाः, करणे घञ्, थाथादिनोत्तरपदान्तोदात्तत्वम् । तानभ्यातन्वत आभिमुख्येन शास्त्रमर्यादया चाकुर्वन् अजुहवुः ॥

ऽयन्तानभ्यातंन्वत यद्देवानां कर्मा-
सीदाध्यंत तद्यदसुंराणां न तदा-
ध्यंत येन कर्मणेत्सेंत्तत्र होतव्या
ऋध्नोत्येव तेन कर्मणा यद्विश्वे देवा-

अभ्यातंन्वतेत्यंभि—आतंन्वत । [2]यत् । देवानांम् । कर्म । आसींत् । आध्यंत । तत् । यत् । असुंराणाम् । न । तत् । आध्यंत । येनं । कर्मणा । ईत्सेंत् । तत्रं । होतव्याः । ऋध्नोति । एव । तेनं । कर्मणा । [4]यत् । विश्वे । देवाः । समभंरन्निति सं—

---

[2]यद्देवानामित्यादि ॥ अभ्यातानानां देवैरेव विहितत्वात् ॥

[3]येनेत्यादि ॥ यत् कर्म येन कर्मणा ईत्सेंत् इदं मे समृद्ध्येतेति तस्मिन्नभ्याताना होतव्याः न केवलं भ्रातृव्यवतैव । ऋधेस्सानि 'आप् ज्ञप्यृधामीत्' इतीत्वम्, अभ्यासलोपश्च । केचिदाहुः—येन कर्मणेत्सेंत् तत्र होतव्याः सर्वेऽप्यभ्याताना जया राष्ट्रभृतश्चेति । तत्र होतव्या एव क्रमात् जया अभ्याताना राष्ट्रभृत इति ॥

[4]अधुना अपकृतं भ्रातृव्यवन्तमेवाधिकृत्य क्रमविशेषं चाह—यद्विश्वे देवा इत्यादि ॥ भ्रातृव्यवतोयं क्रमः, अभ्याताना जया राष्ट्रभृत इति । ते देवा इत्यादि । असुरान् भ्रातृव्यानभ्यातन्वत विधेयानकुर्वत । ततश्च जयैरजयन् विनष्टैश्वर्यानकुर्वत ।

स्समभरन्तस्मादभ्याताना वैश्वदेवा
यत्प्रजापतिर्जयान्प्रायच्छत्तस्माज्ज-
याः प्राजापत्याः ॥ १७ ॥ यद्राष्ट्र-
भृद्भी राष्ट्रमाऽददत तद्राष्ट्रभृताꣳ रा-
ष्ट्रभृत्त्वं ते देवा अभ्यातानैरसुरान-
भ्यातन्वत जयैरजयन्राष्ट्रभृद्भी राष्ट्र-

अभरन् । तस्मात् । अभ्याताना इत्यभि-आता-
नाः । वैश्वदेवा इति वैश्व-देवाः । यत् । प्रजाप-
तिरिति प्रजा-पतिः । जयान् । प्रेति । अयच्छत् ।
तस्मात् । जयाः । प्राजापत्या इति प्राजा-पत्याः
॥ १७ ॥ यत् । राष्ट्रभृद्भिरिति राष्ट्रभृत्-भिः । रा-
ष्ट्रम् । एति । अददत । तत् । राष्ट्रभृतामिति राष्ट्र-
भृताम् । राष्ट्रभृत्त्वमिति राष्ट्रभृत्-त्वम् । ते । दे-
वाः । अभ्यातानैरित्यभि-आतानैः । असुरान् ।
अभ्यातन्वतेत्यभि-आतन्वत । जयैः । अजयन् ।
राष्ट्रभृद्भिरिति राष्ट्रभृत्-भिः । राष्ट्रम् । एति ।

---

राष्ट्रभृद्भिः तेषां राष्ट्रं अधिवासं आददत आत्मसादकुर्वत । अभ्यातन्वते आभिमुख्येनानीयते भ्रातृव्य एभिरिति अभ्याताना: । जयते भ्रातृव्य एभिरिति जयाः, करणे एरच्, 'जयः कर-

माऽददत यद्देवा अभ्यातानैरसुरान-
भ्यातन्वत तदभ्यातानानामभ्याता-
नत्वं यज्जयैरजयन्तज्जयानां जयत्वं
यद्राष्ट्रभृद्भी राष्ट्रमाऽददत तद्राष्ट्रभृ-
ताꣳ राष्ट्रभृत्त्वं ततो देवा अभवन्प-

अददत । यत् । देवाः । अभ्यातानैरित्यभि—आ-
तानैः । असुरान् । अभ्यातन्वतेत्यभि—आतन्वत ।
तत् । अभ्यातानानामित्यभि—आतानानाम् । अ-
भ्यातानत्वमित्यभ्यातान—त्वम् । यत् । जयैः ।
अजयन् । तत् । जयानाम् । जयत्वमिति जय—
त्वम् । यत् । राष्ट्रभृद्भिरिति राष्ट्रभृत्—भिः । रा-
ष्ट्रम् । एति । अददत । तत् । राष्ट्रभृतामिति रा-
ष्ट्र—भृताम् । राष्ट्रभृत्त्वमिति राष्ट्रभृत्—त्वम् ।
[5]ततः । देवाः । अभवन् । परेति । असुराः ।

णम्' इत्याद्युदात्तत्वम् । राष्ट्रं भ्रातृव्यस्य भ्रियते आत्मना धार्यते एभिरिति राष्ट्रभृतः । बिभर्तेः करणे क्विप् । हरतेर्वा 'हृग्रहोर्भः' इति भत्वम् । भ्रातृव्यस्य राष्ट्रं ह्रियते एभिरिति राष्ट्र-भृतः, कृदुत्तरपदप्रकृतिस्वरत्वम् ॥

[5]ततो देवा इत्यादि ॥ ततस्ताद्दृशात्प्रयोगात् देवा भूतिमन्त-स्संपन्नाः, असुराश्च पराभूताः ॥

राऽसुंरा यो भ्रातृंव्यवांथ्स्यात्स ए-
ताञ्जुंहुयादभ्यातानैरेव भ्रातृंव्यान-
भ्यातंनुते जयैर्जयति राष्ट्रभृद्भी रा-
ष्ट्रमा दंत्ते भवंत्यात्मना पराऽस्य
भ्रातृंव्यो भवति ॥ १८ ॥

[6]यः । भ्रातृंव्यवानिति भ्रातृंव्य-वान् । स्यात् । सः ।
एतान् । जुहुयात् । अभ्यातानैरित्यंभि-आतानैः ।
एव । भ्रातृंव्यान् । अभ्यातंनुत इत्यंभि-आतंनुते ।
जयैः । जयति । राष्ट्रभृद्भिरिति राष्ट्रभृत्-भिः ।
राष्ट्रम् । एति । दत्ते । भवंति । आत्मना । परेति ।
अस्य । भ्रातृंव्यः । भवति ॥ १८ ॥

प्राजापत्यास्सोऽष्टादंश च ॥ ६ ॥

---

[6]देवा वै यद्यज्ञे इत्युपक्रममुपसंहृतं [संहर्तुं] यो भ्रातृव्यवान् स्यात् इत्यादि ॥ गतम् । आत्मना प्रकृत्यादित्वात्तृतीया ॥

इति तृतीये चतुर्थे षष्ठोनुवाकः

ऋताषाडृतधामाऽग्निर्गन्धर्वस्तस्यौष-
धयोप्सरस ऊर्जो नाम स इदं

[1]ऋताषाट् । ऋतधामेत्यृत–धामा । अग्निः । गन्धर्वः । तस्य । ओषधयः । अप्सरसः । ऊर्जः । नाम । सः । इदम् । ब्रह्म । क्षत्रम् । पातु । ताः ।

[1]अथ राष्ट्रकामादिभ्यो विहिता राष्ट्रभृतः ऋताषाडृतधामेत्यादयः द्विस्स्वाहाकारं होतव्याः । तस्मा इति गन्धर्वाय । ताभ्य इत्यप्सरोभ्यः । 'स इदं ब्रह्म क्षत्रं पातु' इति गन्धर्वेष्वनुषज्यते । 'ता इदं ब्रह्म क्षत्रं पान्तु' इत्यप्सरस्सु । भुवनस्य पते इति पञ्चपदा पङ्क्तिः । 'भुवनस्य पते'* इति प्रथमपादान्तः । इयं च पर्यायाणां सप्तमी, आहुतीनां त्रयोदशी । अथ 'स नो भुवनस्य'† इति न्यङ्कुसारिणी । द्वितीयः पादो द्वादशाक्षरः । इयं तु पर्यायाणां द्वादशी, आहुतीनां द्वाविंशतिः । ऋताषाट् ऋतं सत्यं यज्ञं वा सहते अभिभवति अतःपरं नास्ति सत्यं यज्ञो वा । ऋतेन वा विश्वमभिभवति । 'छन्दसि सहः' इति ण्विः, 'अन्येषामपि दृश्यते' इति दीर्घत्वम्, 'सहेस्साडस्सः' इति षत्वम् । ऋतधामा ऋतं सत्यं यज्ञो वा धाम स्थानं तेजो वा यस्य स ऋतधामा । ईदृशत्वादग्निर्गन्धर्वः गान्धारबन्धं धारयति उदकं वा यागद्वारेणोत्पादयतीति गन्धर्वः, पृषोदरादिः । तस्य सम्बन्धिन्यः तेनाह्रियमाणा ओषधयः अप्सरस्त्वेन रूप्यन्ते, गन्धर्वाणामप्सरसो भार्याः, अपस्सारयन्ति अन्नं भूत्वा आहुतिद्वारेणादित्यं प्राप्नुवन्ति यथोक्तं 'अग्नौ प्रास्ताहुतिस्सम्यगा-

*सं ३-४-१.7 †सं ३-४-७.12

ब्रह्म क्षत्रं पांतु ता इदं ब्रह्म क्षत्रं
पान्तु तस्मै स्वाहा ताभ्यस्स्वाहा
सꣳहितो विश्वसामा सूर्यो गन्ध-

इदम् । ब्रह्म । क्षत्रम् । पान्तु । तस्मै । स्वाहा । ताभ्यः । स्वाहा । [2]सꣳहित इति सं-हितः । वि-श्वसामेति विश्व-सामा । सूर्यः । गन्धर्वः । तस्य ।

---

दित्यमुपतिष्ठते' इत्यादि । ऊर्जो नामान्नाख्यः, अन्नं भूत्वेत्यर्थः । केचिदाहुः—दोग्धृस्थानीयोग्निः वत्सस्थानीयाभिरोषधीभिः गां पयो दुग्धे इति स तादृशोग्निः इदं ब्रह्म क्षत्रं च पात्विति अस्मा-नाहुतिद्वारेण, प्राधान्यात्तयोर्ग्रहणं सर्वस्थावरजङ्गमप्रदर्शनार्थम् । ताश्च तादृश्योप्सरसः इदं क्षत्रं च पातु, तस्मा अग्नये स्वा-हुतं करोमि ताभ्यश्चाप्सरोभ्यः । एवं सर्वेषु पर्यायेषु द्रष्टव्यम् ॥

[2]संहितः सन्धीयतेऽनेनेति संहितः करणे क्तः, नैशी सूर्यप्र-वृत्तिर्लक्ष्यते दर्शनात्मिका । विश्वसामा विश्वं सामावसितमस्मिन्नि-ति विश्वसामा । अनेनापि नैशी वृत्तिर्लक्ष्यते अदर्शनात्मिका । 'बहुव्रीहौ विश्वं संज्ञायाम्' इति विश्वशब्दोन्तोदात्तः । एवं अहोरात्रे प्रवर्तयन् सूर्यः गन्धर्वः व्याख्यातः मरीचयोप्सरसः मारयन्ति शोषयन्ति सलिलं दिवसविशेषेषु वर्षार्थमेवेति मरीचयः । अपां सारयितारोप्सरसः । आविष्टलिङ्गत्वादप्सरश्शब्दस्त्रीलिङ्गेनैवो-च्यते । वत्सस्थानीया वा पूर्ववत् । आयुवः गमनशीलाः विश्वव्यापिनः । एतेः 'छन्दसीणः' इत्युण्प्रत्ययः, 'जसादिषु

वैस्तस्य मरीचयोप्सरस आयुवं-
स्सुषुम्नस्सूर्यरश्मिश्चन्द्रमा गन्धर्व-

मरीचयः । अप्सरसः । आयुव इत्या-युवः ।
[3]सुषुम्न इति सु-सुम्नः । सूर्यरश्मिरिति सूर्य-र-

वा वचनं प्राङ्णौ चङ्युपधायाः' इति जसि गुणाभावः, 'त-
न्वादीनां छन्दसि बहुलम्' इत्युवङ् । नामित्यादिस्सर्वत्रानुषङ्गः ॥

[3]सुषुम्नः सुसूते शोभनं सुखं यो न इति । 'नञ्सुभ्याम्'
इत्युत्तरपदान्तोदात्तत्वम् । चन्द्रो ह्यमृताद्देवपितृमनुष्यान् सुखयति ।
सूर्यरश्मिरेव रश्मिः यस्य अमृतात्मकत्वात् चन्द्रस्य । यथाऽऽहुः—

सूर्योग्निमयो गोळः
चन्द्रोम्बुमयस्स्वभावतस्स्वच्छः ।

तस्मात्स्वतो रश्म्यभावात् सूर्यरश्मिभिरेवायं दीप्यते इति । तद-
प्याहुः—

भूग्रहभानां गोळार्धानि स्वच्छायया विवर्णानि ।
अर्धानि यथासारं सूर्याभिमुखानि दीप्यन्ते ॥* इति ॥

एतदुक्तं भवति । यदस्यैवान्तस्थस्य चन्द्रबिम्बस्यार्धमेकं सर्वदा
भास्वरं भवति, अर्धं तद्व्यतिरिक्तवर्णं दृश्यते । तत्रेदं कारणं—
सूर्याभिमुखं यदर्धं तत्सूर्यरश्मिभिरादीप्यते, अन्यत्स्वामेव छायाम-
वलम्बाति । किमिति तर्हि चन्द्रमसो बिम्बार्धं सर्वदा न चकास्ति

*आर्यभटीये—गोलपादे.

स्तस्य नक्षत्राण्यप्सरसो बेकुरयो

रश्मिः । चन्द्रमाः । गन्धर्वः । तस्य । नक्षत्राणि ।

---

चकास्त्येव । किमिति नोपलभ्यते । उच्यते—अमावास्यायां चन्द्रवमस उपर्यादित्यः तदासौ तस्य चन्द्रमसः उपरि यद्बि- म्बार्धं तदशेषमवभासयति । ततश्चन्द्रस्यामावास्ययोपलक्षितोपरिबिम्बे केन्द्रात् यथा यथा पश्चादादित्योवलम्बते तथा तथा चन्द्रमसो बिम्बं केन्द्रस्य परतोवलम्बते तत्केन्द्रवशाच्चन्द्रमसो बिम्बार्धं याव- देवामावास्योपलक्षिते बिम्बस्यार्धादधोवलम्बते तावच्चन्द्रमसो बिम्बं अस्माभिरुपलभ्यते । शेषमुपरिस्थितत्वात् सूर्याभिमुखं दीप्यमानमपि नोपलभ्यते । तस्माद्यावद्यावत्सवितृकराश्लिष्टमवलम्बते तावत्तावच्छु- क्लश्चन्द्रमा उपलभ्यते । तेनामी ज्योत्स्नावितानावभासिनश्चन्द्रकराः सूर्य मरीचय एव । केन तर्हि सवितृमरीचयोम्बुमयस्वभावे च श्यामे चन्द्रबिम्बे सम्मूर्छिता नैशं ध्वान्तमुपध्वंसयन्ति? उच्यते— यथा दर्पणे जले वा दिवाकरकरास्सम्मूर्छितास्सन्तो गृहान्तर्गतं तमः क्षपयन्ति एवं तदिति द्रष्टव्यम् । अन्यच्च यो यः चन्द्र- बिम्बप्रदेशः सवितृमार्गे ऋजुत्वेन व्यवस्थितः स एव शुक्ल उप- लक्ष्यते नेतर इत्यवगन्तव्यम् । एवं च निरुक्ते पठ्यते—'तस्यैको रश्मिः चन्द्रमसं प्रतिदीप्यते तेनोत्प्रेक्षितव्यमादित्योस्य दीप्तिर्भ- वति'* इति । तादृशः चन्द्रमा गन्धर्वः नक्षत्राण्यप्सरसः वृष्टिहेतुत्वात् । बेकुरयः वर्णव्यावृत्तिश्छान्दसी, भेकुरयः । वाजसनेयिनामेष एव पाठः । भयं यक्ष्माख्यं चन्द्रस्य कृतवत्यः इत्यर्थः । बिभेते- र्व्यत्ययेन भावे विन्, करोतेरौणादिके किप्रत्यये छान्दसमुत्वम् । अन्य आहुः—वृष्ट्यादिकरणशीलाः बेकुरयः । वेरुपसर्गस्य स्वर- व्यञ्जनयोर्व्यावृत्तिरिति ॥

---

* नैघ—२.२.१

भुज्युस्सुपर्णो यज्ञो गन्धर्वस्तस्य
दक्षिणा अप्सरसस्स्तवाः प्रजापति-
र्विश्वकर्मा मनः ॥ ११ ॥ गन्धर्व-

अप्सरसः । वेकुरयः । [4]भुज्युः । सुपर्ण इति सु-पर्णः । यज्ञः । गन्धर्वः । तस्य । दक्षिणाः । अप्स-रसः । स्तवाः । [5]प्रजापतिरिति प्रजा-पतिः । वि-श्वकर्मेति विश्व-कर्मा । मनः ॥ ११ ॥ गन्धर्वः ।

---

[4]भुज्युः भुनक्ति पालयति विश्वमिति भुज्युः, भुजेरौणादिकः क्युप्रत्ययः । सुपर्णः शोभनपतनः शोभनगमनः । पूर्वपदान्तोदात्तत्वम् । ईदृशो यज्ञः गन्धर्वो भवति । दक्षिणा अप्सरसः । दक्षिणा, दक्ष वृद्धौ, दक्षिणेति कल्याण्यः दक्षिणावृद्ध्यै भवन्ति । तामेव कल्याणतामाह—स्तवा इति । स्तूयन्त इति स्तवाः । यद्वा—स्तूयते पुरुषो याभिस्ताः स्तवाः यो भूरि ददाति सः स्तूयते हि लोके न कर्मणैव । ऋदोरप् । उञ्छादिर्द्रष्टव्यः ॥

[5]प्रजापतिः प्रजानां पालयिता । 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरत्वम् । विश्वकर्मा विश्वं करणीयं यस्य स विश्वकर्मा; मनोनिबन्धनत्वात्सर्वप्रवृत्तीनाम् । पूर्ववद्विश्वशब्दस्य अन्तोदात्तत्वम् । उभयत्रापि लिङ्गव्यत्ययः । यद्वा—प्रजापतिर्विश्वकर्मभावेन स्तूयते तत्कार्यभावेन प्रवणार्थं, लुप्तोपमा वा । मनो गन्धर्वः सम्यग्यागनिवृत्तेः । ऋक्सामान्यप्सरसः, यजुषामप्युपलक्षणम् । वह्नयः ऋगादयः यज्ञं वहन्ति मनसा गृहीतत्वात्ताः ॥

स्तस्यर्क्सामान्यप्सरसो वह्नय इ-
षिरो विश्वव्यचा वातो गन्धर्वस्त-
स्यापोप्सरसो मुदा भुवनस्य पते
यस्य त उपरि गृहा इह च । स
नो रास्वाज्यानिꣳ रायस्पोषꣳ सु-

तस्य । ऋक्सामानीत्यृक्–सामानि । अप्सरसः । वह्नयः । [6]इषिरः । विश्वव्यचा इति विश्व–व्यचाः । वातः । गन्धर्वः । तस्य । आपः । अप्सरसः । मुदाः । [7]भुवनस्य । पते । यस्य । ते । उपरि । गृहाः । इह । च । सः । नः । रास्व । अज्यानिम् । रायः । पोषम् । सुवीर्यमिति सु–वीर्यम् । संवथ्स-

---

[6]इषिरः सरणशीलस्सदागतिः । इष गतौ, औणादिकः किरच्प्रत्ययः । विश्वव्यचा विष्वग्भागं व्यचति पुरोवातादिरूपेण व्याप्नोति, विपूर्वादश्चतेः 'गतिकारकयोरपि' इत्यसुन्, पूर्वपदप्रकृतिस्वरत्वस्य च बहुव्रीहिस्वरस्योपलक्षणत्वात् 'बहुव्रीहौ विश्वम्' इत्येतद्भवति । वातो गन्धर्वः, आपोप्सरसः व्याप्तिमत्यः वर्ष्या आपः मुदा नाम मोदयित्र्यः प्रजानां, ताभिर्हि सर्वे मोदन्ते, इगुपधात्कः ॥

[7]भुवनस्येत्यादि ॥ भुवनस्य भूतजातस्य पते पालयितः उपरि द्युलोकान्तरिक्षयोः इह च पृथिव्यां ग्रहाः ग्रहवासिनः । ते

वीर्यँ संवत्सरीणाँ स्वस्तिम् । परमेष्ठ्यधिपतिर्मृत्युर्गन्धर्वस्तस्य विश्वमप्सरसो भुवस्सुक्षितिस्सुभूति-

रीणामिति सं-वथ्सरीणाम् । स्वस्तिम् । [8]परमेष्ठी । अधिपतिरित्यधि-पतिः । मृत्युः । गन्धर्वः । तस्य । विश्वम् । अप्सरसः । भुवः । [9]सुक्षितिरिति सु-क्षितिः । सुभूतिरिति सु-भूतिः । भद्रकृदिति भद्र-कृत् । सुवर्वानिति सुवः-वान् । पर्जन्यः ।

---

स्वभूताः स त्वं नोस्मभ्यं रास्व देहि । व्यत्ययेनात्मनेपदम् ॥ अज्यानिं अहानिं अहानिनिमित्तम् । क्तिनो निष्ठावद्भावात् 'ल्वादिभ्यश्च' इति नत्वम् । रायो धनस्य पोषं सुवीर्यं शोभनवीर्यकम् । 'वीरवीर्यौ च' इत्युत्तरपदान्तोदात्तत्वम् । संवत्सरीणां च स्वस्तिं अविनाशं संवत्सरभावीति । 'संपरिपूर्वात्ख च' इति खः ॥

[8]परमेष्ठी परमे स्वभावे तिष्ठतीति प्रत्यये 'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुक् । अधिपतिः स्वामी मृत्युः गन्धर्वः विश्वं भूतजातं अप्सरसः सम्यङ्गीयमानं विश्वस्थितिहेतुरिति । भुवो नाम भवन्तीति भुवः । मध्यस्थतामादाय भूतानि धारयन्तीति ॥

[9]सुक्षितिः शोभनक्षितिकः । पूर्ववत्स्वरः । सुभूतिः शोभनभूतिः सम्पत् प्रजानाम् । प्रादिसमासे अव्ययपूर्वपदप्रकृतिस्वर-

भद्रकृत्सुवर्वान्पर्जन्यो गन्धर्वस्तस्य
विद्युतोऽप्सरसो रुचो दूरेहेतिरमृड-
यः ॥ २० ॥ मृत्युर्गन्धर्वस्तस्य प्र-
जा अप्सरसो भीरुवश्चारुः कृप-

गन्धर्वः । तस्य । विद्युत इति वि-द्युतः । अप्सर-
सः । रुचः । [10]दूरेहेतिरिति दूरे-हेतिः । अमृडयः ॥
२० ॥ मृत्युः । गन्धर्वः । तस्य । प्रजा इति प्र-
जाः । अप्सरसः । भीरुवः । [11]चारुः । कृपणका-

---

त्वम् । भद्रकृत् कल्याणकारी सर्वेषां सुवर्वान् द्युलोकवान् सस्यनिष्पत्त्यादिना तद्धारणात् । आदित्यवान्वा; तदधीनप्रवृत्तित्वात् । 'छन्दसीरः' इति मतुपो वत्वम् । शोभनारणवान्वा । तन्वादित्वादुवङ् । पर्जन्यो गन्धर्वः । विद्युतोऽप्सरसः । रुचः रुचमानाः नभसि दीप्यमानाः ॥

[10]दूरेहेतिः दूरेऽपि हेतिर्हननं यस्य, दूरेऽप्येतच्छ्रवणेन म्रियते इति कृत्वा । 'ऊतियूति' इत्यादौ हेतिशब्दो निपात्यते, 'तत्पुरुषे कृति बहुलम्' इत्यलुक् । अमृडयः दुःखयिता श्रवणमात्रेणैव भीतिजनकत्वात् । मृडेर्ण्यन्ताच्छान्दसः शः । मृत्युः श्रोतॄणां मारयिता त्रासनयत्नः गन्धर्वः प्रजा अप्सरसः; तदर्थत्वात्तत्प्रवृत्तेः । भीरुवः भयशीलाः पुष्याभाया ? ॥

[11]चारुः चरणशीलः विषयमवगाहत इति कृपणकाशी कृप-

णकाशी कामो गन्धर्वस्तस्याधयो-
प्सरसंश्शोचयंन्तीर्नाम स इदं ब्रह्म
क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पान्तु तस्मै
स्वाहा ताभ्यस्स्वाहा स नो भुवन-

शीतिं कृपण—काशी । कामः । गन्धर्वः । तस्यं । आधय इत्या—धयः । अप्सरसः । शोचयन्तीः । नामं । सः । इदम् । ब्रह्म । क्षत्रम् । पातु । ताः । इदम् । ब्रह्म । क्षत्रम् । पान्तु । तस्मै । स्वाहा । ताभ्यः । स्वाहा । [12]सः । नः । भुवनस्य । पते । य-

णेष्विन्द्रियार्थेषु मनः काशयतीति 'सुप्यजातौ' इति णिनिः । कामो गन्धर्वः । तेन हि यागादिद्वारेण वृत्तिरुत्पाद्यते । तस्याधयोप्सरसः आधीयन्ते ऋद्धावित्याधयः काम्या इन्द्रियार्था उच्यन्ते । 'उपसर्गे घोः किः' । शोचयन्तीः शोचयन्त्यः, तेषामलाभेन हि प्रजाः शोचन्ते । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । नामेत्यादि पुनराम्नायते अनुषङ्गसमाप्तिं द्योतयितुम् ॥

[12]स न इत्यादि ॥ व्याख्यातमर्धर्चम्* । स त्वं नोस्माकं सम्बन्धिने अस्मै ब्रह्मणे अस्मै क्षत्राय उरु विस्तीर्णं महि महनीयं च शर्म सुखं यच्छ देहि । अन्ये आहुः—स न इति काम उच्यते । यस्य ते उपरि गृहाः इह च । स त्वं हे

*सं. ३-४-७.[7]

स्य पते यस्यं त उपरि गृहा इह च ।
उरु ब्रह्मणेऽस्मै क्षत्राय महि शर्म
यच्छ ॥ २१ ॥
राष्ट्रकामाय होतव्या राष्ट्रं वै राष्ट्र-
भृतो राष्ट्रेणैवास्मै राष्ट्रमव रुन्धे

स्यं । ते । उपरि । गृहाः । इह । च । उरु । ब्रह्म-
णे । अस्मै । क्षत्राय । महि । शर्म । यच्छ ॥२१॥

मनो मृडयष्षट्चत्वारिꣳशच्च ॥ ७ ॥

[1]राष्ट्रकामायेति राष्ट्र—कामाय । होतव्याः ।
राष्ट्रम् । वै । राष्ट्रभृत इति राष्ट्र—भृतः । राष्ट्रेण ।
एव । अस्मै । राष्ट्रम् । अवेति । रुन्धे । राष्ट्रम् ।

---

भुवनस्य पते काम ब्रह्मणे क्षत्राय च अस्मै उरु महनीयं च शर्म यच्छेति ॥

इति तृतीये चतुर्थे सप्तमोनुवाकः.

---

[1]अथ राष्ट्रभृतां ब्राह्मणं—राष्ट्रकामायेत्यादि ॥ राष्ट्रं प्राप्तु-कामो राष्ट्रकामः । 'शीलिकामि' इत्यादिना णः पूर्वपदप्रकृति-स्वरत्वं च । राष्ट्रं वा इति । तत्साधनत्वात्ताच्छब्द्यम् । अस्मै

राष्ट्रमेव भवत्यात्मने होतव्यां राष्ट्रं
वै राष्ट्रभृतो राष्ट्रं प्रजा राष्ट्रं पशवो
राष्ट्रं यच्छ्रेष्ठो भवति राष्ट्रेणैव राष्ट्र-
मवं रुन्धे वसिष्ठस्समानानां भवति
ग्रामंकामाय होतव्यां राष्ट्रं वै राष्ट्र-
भृतो राष्ट्रꣳ संजाता राष्ट्रेणैवास्मै

एव । भवति । [2]आत्मने । होतव्याः । राष्ट्रम् । वै । राष्ट्रभृत इति राष्ट्र—भृतः । राष्ट्रम् । प्रजेति प्र—जा । राष्ट्रम् । पशवः । राष्ट्रम् । यत् । श्रेष्ठः । भवति । राष्ट्रेण । एव । राष्ट्रम् । अवेति । रुन्धे । वसिष्ठः । समानानाम् । भवति । [3]ग्रामंकामायेति ग्रामं—कामाय । होतव्याः । राष्ट्रम् । वै । राष्ट्रभृत इति राष्ट्र—भृतः । राष्ट्रम् । सजाता इति स—जा-ताः । राष्ट्रेण । एव । अस्मै । राष्ट्रम् । सजाता-

---

यजमानाय राष्ट्रमवरुन्धे परिगृह्णात्यध्वर्युः । ततो यजमानो राष्ट्रं भवति । स्वस्वामिनोरभेदोपचारः विधेयत्वातिशयप्रदर्शनार्थः ॥

[2]आत्मन इति ॥ प्रजादिसमृद्ध्या यच्छ्रैष्ठ्यं तत्पुरुषस्यात्मा । राष्ट्रं प्रजा; राष्ट्रहेतुत्वाद्बलहेतुत्वाद्वा । राष्ट्रं पशवः; तत एव हेतोः यच्छ्रेष्ठः सर्वेषां प्रशस्यतमो भवति तदपि राष्ट्रतुल्यम् ।

राष्ट्रꣳ सजातानव रुन्धे ग्रामी॥२२॥
एव भवत्यधिदेवने जुहोत्यधिदेवन
एवास्मै सजातानव रुन्धे त एनम-
वरुद्धा उप तिष्ठन्ते रथमुख ओज-
स्कामस्य होतव्या ओजो वै राष्ट्र-

निति स–जातान् । अवेति । रुन्धे । ग्रामी ॥२२॥
एव । भवति । [4]अधिदेवन इत्यधि–देवने । जुहोति । अधिदेवन इत्यधि–देवने । एव । अस्मै । सजातानिति स–जातान् । अवेति । रुन्धे । ते । एनम् । अवरुद्धा इत्यव–रुद्धाः । उपेति । तिष्ठन्ते । रथमुख इति रथ–मुखे । ओजस्कामस्येत्योजः–कामस्य । होतव्याः । ओजः । वै । राष्ट्रभृत इति

---

वसिष्ठः वसुमत्तमः समानानां मध्ये भवति । प्रजादि धनं वसु । विन्मतोर्लुक्, 'टेः' इति टिलोपः ॥

[3]ग्रामकामायेति ॥ सजातसमवायो ग्रामः । सजाताः समानजन्मानः । पूर्ववत्ताच्छब्द्यम् । 'वा दान्त' इत्युत्तरपदान्तोदात्तत्वम् ॥

[4]अधि देवन इति ॥ अधि दीव्यत्यस्मिन्निति अधिदेवनं देवनस्थानं, तत्र प्रधानाग्निमुपसमाधाय निशायां जुहोति ॥

[5]रथमुख इति ॥ उपर्यग्नेः रथमुखं प्रगृह्य जुहुयात् । ओजो वा इत्यादि । गतम् । पूर्ववत्ताच्छब्द्यम् ॥

भृत ओजो रथ ओजसैवास्मा ओ-
जोवं रुन्ध ओजस्व्येव भवति यो
राष्ट्रादपभूतस्स्यात्तस्मै होतव्या या-
वन्तोस्य रथास्स्युस्तान्ब्रूयाद्युङ्ध्व-
मिति राष्ट्रमेवास्मै युनक्ति ॥ २३ ॥
आहुतयो वा एतस्याक्लृप्ता यस्य

राष्ट्र–भृतः । ओजः । रथः । ओजसा । एव । अस्मै । ओजः । अवेति । रुन्धे । ओजस्वी । एव । भवति । [6]यः । राष्ट्रात् । अपभूत इत्यप–भूतः । स्यात् । तस्मै । होतव्याः । यावन्तः । अस्य । रथाः । स्युः । तान् । ब्रूयात् । युङ्ध्वम् । इति । राष्ट्रम् । एव । अस्मै । युनक्ति ॥ २३ ॥ [7]आहुतय इत्या–हुतयः । वै । एतस्य । अक्लृप्ताः । यस्य ।

---

[6]यो राष्ट्रादित्यादि ॥ अपभूतः अपरुद्धः । पूर्ववद्गतेः प्रकृतिस्वरत्वम् । हुत्वा यावन्तोस्य राष्ट्रप्रेप्सोः रथाः भवन्ति तान् सर्वान् 'युङ्ध्वम्' इति प्रैषं ब्रूयात् । तेनास्मै राष्ट्रमेव युनक्ति ततो[न]पभूतो भवतीति । तिङः परत्वाद्युङ्ध्वमिति न निहन्यते ॥

[7]आहुतय इत्यादि ॥ अक्लृप्ताः स्वस्वकार्यकरणे असमर्था यस्य राष्ट्रं न कल्पते नेष्टसाधनसमर्थं भवति, स्वरथस्य दक्षिणं चक्रं

राष्ट्रं न कल्पते स्वरथस्य दक्षिणं
चक्रं प्रवृह्य नाडीमभि जुहुयादाहु-
तीरेवास्य कल्पयति ता अस्य क-
ल्पमाना राष्ट्रमनु कल्पते संग्रामे
संयत्ते होतव्या राष्ट्रं वै राष्ट्रभृतो
राष्ट्रे खलु वा एते व्यायच्छन्ते ये

राष्ट्रम् । न । कल्पते । स्वरथस्येति स्व–रथस्य । दक्षिणम् । चक्रम् । प्रवृह्येति प्र–वृह्य । नाडीम् । अभीति । जुहुयात् । आहुतीरित्या–हुतीः । एव । अस्य । कल्पयति । ताः । अस्य । कल्पमानाः । राष्ट्रम् । अन्विति । कल्पते । [8]सङ्ग्राम इति सं–ग्रामे । संयत्त इति सं–यत्ते । होतव्याः । राष्ट्रम् । वै । राष्ट्रभृत इति राष्ट्र–भृतः । राष्ट्रे । खलु । वै । एते । व्यायच्छन्त इति वि–आयच्छन्ते । ये । स-

---

प्रवृह्य उपर्यग्नौ रथचक्रस्य नाडीं रन्ध्रं प्रगृह्य निशायां राष्ट्रभृतो जुहोति । तेनाहुतीरस्य कल्पयति । ताश्च कल्पमानाः अनु अस्य राष्ट्रं कल्पते । लक्षणे अनोः कर्मप्रवचनीयत्वम् ॥

[8]संग्रामे संयत्ते इत्यादि ॥ संग्रामे संयत्ते प्रक्रान्ते तज्जयार्थिनो होतव्याः । राष्ट्रार्थं खल्वेते व्यायच्छन्ते व्यायामं कुर्वन्ति,

संग्रामꣳ संयन्ति यस्य पूर्वस्य जुहो-
ति स एव भवति जयति तꣳ सं-
ग्रामं मान्धुक इध्मः ॥ २४ ॥ भव-
त्यङ्गारा एव प्रतिवेष्टमाना अमि-
त्राणामस्य सेनां प्रति वेष्टयन्ति य

ङ्ग्राममिति सं–ग्रामम् । संयन्तीति सं–यन्ति ।
यस्य । पूर्वस्य । जुहोति । सः । एव । भवति ।
जयति । तम् । सङ्ग्राममिति सं–ग्रामम् । मान्धुकः ।
इध्मः ॥ २४ ॥ भवति । अङ्गाराः । एव । प्रतिवे-
ष्टमाना इति प्रति–वेष्टमानाः । अमित्राणाम् ।
अस्य । सेनाम् । प्रतीति । वेष्टयन्ति । [9]यः । उ-

---

ये संग्रामं संयन्ति प्राप्नुवन्ति । तस्माद्यस्य पूर्वस्य प्रथमभाजिन एव जुहोति स एव भवति आत्मवान् संपद्यते तेन इतरं जयति च तं संग्रामं स एव । अत्र विशेषमाह—मान्धुक इति । मान्धुकशब्दोधिक्रियन्ते? । बन्धूकविकार इत्येके । वृक्षान्तरमित्यन्ये । 'कोपधाच्च' इत्यण् । तत्रत्यं मित्रमग्निमुपसमाधाय मान्धुकमिध्ममभ्यज्य स्वाहाकारेणाभ्याधाय निशायामेतं जुहोति । त एवाङ्गाराः प्रतिवेष्टमानाः संहत्य ज्वलन्तः अस्यामित्राणां सेनाः प्रतिवेष्टयन्ति प्रत्यावेष्ट्य दहन्ति । 'अमेरित्रः' इतीत्रप्रत्ययः ॥

[9]य उन्माद्येदित्यादि ॥ गतम् । एते खल्विति । तेषां प्रतिपादकत्वात्ताच्छब्द्यम् । तस्मा इत्यादि ॥ गन्धर्वाप्सरोभ्यः

उन्माद्येत्तस्मै होतव्या गन्धर्वाप्स-
रसो वा एतमुन्मादयन्ति य उन्मा-
द्यत्येते खलु वै गन्धर्वाप्सरसो य-
द्राष्ट्रभृतस्तस्मै स्वाहा ताभ्यस्स्वा-
हेति जुहोति तेनैवैनाञ्छमयति नै-
यंग्रोध औदुम्बर आश्वत्थः प्लाक्ष
इतीध्मो भवत्येते वै गन्धर्वाप्सरसां

न्माद्येदित्युत्–माद्येत् । तस्मै । होतव्याः । गन्ध-
र्वाप्सरस इति गन्धर्व–अप्सरसः । वै । एतम् ।
उदिति । मादयन्ति । यः । उन्माद्यतीत्युत्–मा-
द्यति । एते । खलु । वै । गन्धर्वाप्सरस इति ग-
न्धर्व–अप्सरसः । यत् । राष्ट्रभृत इति राष्ट्र–भृतः ।
तस्मै । स्वाहा । ताभ्यः । स्वाहा । इति । जुहो-
ति । तेन । एव । एनान् । शमयति । नैयंग्रोधः ।
औदुम्बरः । आश्वत्थः । प्लाक्षः । इति । इध्मः ।
भवति । एते । वै । गन्धर्वाप्सरसामिति गन्धर्व–

---

पृथक्स्वाहाकृत्य होमेन एनान् शमयति शान्ताननुन्मादयितृन्
करोति । अत्र विशेषमाह—नैयग्रोध इत्यादि । एषामन्यतम
इध्मो भवतीत्येके । एतच्चतुष्टयवानेक इध्म इत्यन्ये । ‘अनु-
दात्तादेश्च’ इति विकारे न्यग्रोधादिभ्योञ् । एत इत्यादि ॥

गृहास्स्व एवैनान् ॥ २५ ॥ आयतने
शमयत्यभिचरता प्रतिलोमꣳ हो-
तव्याः प्राणानेवास्य प्रतीचः प्रति
यौति तं ततो येन केन च स्तृणुते
स्वकृत इरिणे जुहोति प्रदरे वैतद्वा

अप्सरसाम् । गृहाः । स्वे । एव । एनान् ॥ २५॥
आयतन इत्या–यतने । शमयति । [10]अभिचरतेत्यभि–चरता । प्रतिलोममिति प्रति–लोमम् ।
होतव्याः । प्राणानिति प्र–अनान् । एव । अस्य ।
प्रतीचः । प्रतीति । यौति । तम् । ततः । येन ।
केन । च । स्तृणुते । स्वकृत इति स्व–कृते । इरिणे । जुहोति । प्रदर इति प्र–दरे । वा । एतत् ।

---

एते न्यग्रोधादयः गन्धर्वाप्सरसां ग्रहवत्प्रीतिहेतवः । तस्मादेवं कुर्वन् स्वस्मिन्नेवायतनेऽवस्थितानेतान् शमयति शान्ताननुन्मादयितॄन् करोति ॥

[10]अभिचरतेति ॥ प्रतिलोमं अन्त्यादारभ्य अस्याभिचर्यमाणस्य प्रतीचः प्रतिलोमान् प्रतियौति प्रातिकूल्येन प्रवर्तयति । 'चौ' इति पूर्वपदस्यान्तोदात्तत्वम्, दीर्घश्च । ततस्तं प्रातिकूल्यप्राणं [कारिणं] येन केन च आयुधादिं विना येन केन च स्तृणुते विनाशयितुं शक्नुयात् । स्वकृते स्वाभाविके, इरिणे ऊषरे प्रदरे भूविवरे वा जुहोति । स्वेनैव कृतम्, 'तृतीया कर्मणि' इति

अस्यै निरृतिगृहीतं निरृतिगृहीत एवैनं निरृत्या ग्राहयति यद्वाचः क्रूरं तेन वषट्करोति वाच एवैनं क्रूरेण प्र वृश्चति ताजगार्तिमार्छति यस्यं कामयेतान्नाद्यम् ॥ २६ ॥ आ दर्दीयेति तस्यं सभायामुत्तानो नि-

वै । अस्यै । निरृतिगृहीतमिति निरृति–गृहीतम् । निरृतिगृहीत इति निरृति–गृहीते । एव । एनम् । निरृत्येति निः–ऋत्या । ग्राहयति । यत् । वाचः । क्रूरम् । तेन । वषट् । करोति । वाचः । एव । एनम् । क्रूरेण । प्रेति । वृश्चति । ताजक् । आर्तिम् । एति । ऋच्छति । [11]यस्य । कामयेत । अन्नाद्यमित्यन्न–अद्यम् ॥ २६ ॥ एति । दर्दीय । इति । तस्य । सभायाम् । उत्तान इत्युत्–

पूर्वपदप्रकृतिस्वरत्वम् । प्रकर्षेण दीर्यते इति प्रदरः, ‘ऋदोरप्’ थाथादिनोत्तरपदान्तोदात्तत्वम् । अस्यै पृथिव्याः एतस्मिन् निरृतिगृहीतं निरृत्या अलक्ष्म्या समाश्रितम् । पूर्ववत्स्वरः । तस्मान्निरृतिगृहीते स्थाने होमादेनं निरृत्या ग्राहयति । यद्वाचः क्रूरं, तेन वाचः क्रूरेण एनं प्रकर्षेण वृश्चति । ततः ताजक् तदानीमेव स आर्तिं गच्छति ॥

[11]यस्य कामयेतेत्यादि ॥ अन्नमेवात्तव्यमन्नाद्यम्, छान्दसो

पद्य भुवनस्य पत इति तृणानि सं
गृह्णीयात्प्रजापतिर्वै भुवनस्य पतिः
प्रजापतिनैवास्यान्नाद्यमा दत्त इद-
महममुष्यामुष्यायणस्यान्नाद्यं ह-
रामीत्याहान्नाद्यमेवास्य हरति षड्भिर्

तानः । निपद्येति नि-पद्य । भुवनस्य । पते । इति । तृणानि । समिति । गृह्णीयात् । प्रजापतिरिति प्रजा-पतिः । वै । भुवनस्य । पतिः । प्रजापतिनेति प्रजा-पतिना । एव । अस्य । अन्नाद्यमित्यन्न-अद्यम् । एति । दत्ते । [12]इदम् । अहम् । अमुष्य । आमुष्यायणस्य । अन्नाद्यमित्यन्न-अद्यम् । हरामि । इति । आह । अन्नाद्यमित्यन्न-अद्यम् । एव । अस्य । हरति । षड्भिरिति षट्-भिः ।

---

यत् । उत्तानो निपद्य निपतितशरीरस्सन् 'भुवनस्य पते'* इति मन्त्रेण तृणानि संगृह्णीयात् ॥

[12]इदमहमित्यादि ॥ अदश्शब्दान्नडादित्वात्फक् । इदं तृणान्यादाय इदमहं नारायणस्य गोविन्दसूनोरन्नाद्यमाहरामीत्याहरन् आहरत्येवास्यान्नाद्यम् । षड्भिरित्यादि । 'भुवनस्य'* इत्यादि 'स नो भुवनस्य'† इत्यन्तैः । एतानि तृणानि स्वस्यां वा सभायां स्वेषु वा अमात्येष्वपिसृजति । प्रजापतिनेत्यादि । गतम् ॥

---

*सं. ३-४-७.7 †सं. ३-४-७.12

हेरति षड्वा ऋतवः प्रजापतिनैवा-
स्यान्नाद्यमादायर्तवोस्मा अनु प्र यं-
च्छन्ति ॥ २७ ॥ यो ज्येष्ठबन्धुर-
पभूतस्स्यात्तꣳ स्थलेऽवसाय्यं ब्रह्मौ-
दनं चतुंश्शरावं पक्त्वा तस्मै होत-
व्यां वर्ष्म वै राष्ट्रभृतो वर्ष्म स्थलं व-

हरति । षट् । वै । ऋतवः । प्रजापतिनेति प्रजा-पतिना । एव । अस्य । अन्नाद्यमित्यन्न-अद्यम् । आदायेत्या-दाय । ऋतवः । अस्मै । अनु । प्रेति। यच्छन्ति ॥ २७ ॥ [13]यः । ज्येष्ठबन्धुरिति ज्येष्ठ-बन्धुः । अपभूत इत्यप-भूतः । स्यात् । तं । स्थ-ले । अवसाय्येत्यव-साय्य । ब्रह्मौदनमिति ब्रह्म-ओदनम् । चतुश्शरावमिति चतुः-शरावम् । पक्त्वा । तस्मै । होतव्याः । वर्ष्म । वै । राष्ट्रभृत इति राष्ट्र-भृतः । वर्ष्म । स्थलम् । वर्ष्मणा । एव ।

---

[13]यो ज्येष्ठबन्धुरित्यादि ॥ ज्येष्ठबन्धुरुच्छ्रितबन्धुः अपभूतः न्यक्कृतः । स्थले उच्छ्रिते भूप्रदेशे अवस्थाप्य । चतुश्शराव-मिति । चत्वारश्शरावाः परिमाणमस्येति । आर्हीयस्य ‘अध्य-र्धपूर्वद्विगोः’ इति लुक्, ‘इगन्तकाल’ इति पूर्वपदप्रकृतिस्वर-

ष्मँणैवैनं वष्मँ समानानां गमयति
चतुंश्शरावो भवति दिक्ष्वेव प्रतिं ति-
ष्ठति क्षीरे भंवति रुचंमेवास्मिन्दधा-
त्युद्धंरति शृतत्वायं सर्पिष्वांन्भवति
मेध्यत्वायं चत्वारं आर्षेयाः प्राश्नं-
न्ति दिशामेव ज्योतिंषि जुहोति॥२८

एनम् । वष्मँ । समानानाम् । गमयति । चतुंश्श-
राव इति चतुः—शरावः । भवति । दिक्षु । एव ।
प्रतीति । तिष्ठति । क्षीरे । भवति । रुचंम् । एव ।
अस्मिन्न् । दधाति । उदिति । हरति । शृतत्वायेति
शृत—त्वायं । सर्पिष्वान् । भवति । मेध्यत्वायेति
मेध्य—त्वायं । चत्वारः । आर्षेयाः । प्रेति । अ-
श्नन्ति । दिशाम् । एव । ज्योतिंषि । जुहोति ॥२८॥

ग्रामी युनक्तीध्मस्स्व एवैनांनन्नाद्यं
यच्छन्त्येकान्न पंञ्चाशच्चं ॥८॥

---

त्वम् । वर्ष्म उच्छ्रायः । उद्धरति पात्रान्तरे शृतत्वाय अभि-
व्यक्तये । आर्षेयाः भवन्ति । अथवा शुश्रुवांसस्स्युः । दिशां
सम्बन्धिनि ज्योतिषि अग्नौ हुतं भवति तैः प्राशितम् ॥

इति तृतीये चतुर्थे अष्टमोनुवाकः.

देविका निर्वपेत्प्रजाकामश्छन्दाꣳ-
सि वै देविकाश्छन्दाꣳसीव खलु वै
प्रजाश्छन्दोभिरेवास्मै प्रजाः प्र ज-
नयति प्रथमं धातारं करोति मिथु-
नी एव तेनं करोत्यन्वेवास्मा अनु-

देविकाः । निरिति । वपेत् । प्रजाकाम इति प्रजा–कामः । छन्दाꣳसि । वै । देविकाः । छन्दाꣳसि । इव । खलु । वै । प्रजा इति प्र–जाः । छन्दोभिरिति छन्दः–भिः । एव । अस्मै । प्रजा इति प्र–जाः । प्रेति । जनयति । प्रथमम् । धातारम् । करोति । मिथुनी । एव । तेन । करोति । अन्विति । एव । अस्मै । अनुमतिरित्यनु–मतिः ।

---

[1]सन्ति देविकाहवींषि 'धात्रे पुरोडाशं द्वादशकपालम्'* इति प्रदेशान्तरविहितानि । तेषामिह काम्येन भेदेन प्रयोगविशेषान्दर्शयति—देविका निर्वपेत्प्रजाकाम इत्यादिना ॥ सर्वत्र 'शीलिकामि' इत्यादिना णः, पूर्वपदप्रकृतिस्वरत्वम् । 'छन्दांसि वै देविकाः' इत्यादि वक्ष्यति गायत्र्या भावमनुमत्यादीनाम् । यद्वा—छन्दसां प्रजादिसाधनत्वात् तादृशस्वभावानां हविषां तैरभेद उपचर्यते । प्रथममिति । धातुः द्वादशकपालं प्रजाकामस्य पञ्चानामाद्यं कुर्या-

---

*ब्रा. १-७-२.

मतिर्मन्यते राते राका प्र सिनीवा-
ली जनयति प्रजास्वेव प्रजातासु
कुहा वाचं दधात्येता एव निर्वपे-
त्पशुकामश्छन्दाꣳसि वै देविका-
श्छन्दाꣳसि ॥ २९ ॥ इव खलु वै
पशवश्छन्दोभिरेवास्मै पशून्प्र जं-

मन्यते । राते । राका । प्रेति । सिनीवाली । ज-
नयति । प्रजास्विति प्र—जासु । एव । प्रजातास्वि-
ति प्र—जातासु । कुहा । वाचम् । दधाति । [2]एताः ।
एव । निरिति । वपेत् । पशुकाम इति पशु—का-
मः । छन्दाꣳसि । वै । देविकाः । छन्दाꣳसि ॥२९
इव । खलु । वै । पशवः । छन्दोभिरिति छन्दः—
भिः । एव । अस्मै । पशून् । प्रेति । जनयति ।

---

दित्यर्थः । तेन धातुः प्राथम्येन मिथुनीकरोति संयोजयति जन-यित्रीः प्रजाः । 'अस्य च्वौ' इतीकारः, 'व्यवहिताश्च' इति व्यवहितः प्रयुज्यते । अक्षादित्वात्संहितायां यणादेशाभावः । अनुमतिस्तं मिथुनीभावमनुमन्यते । राका प्रजां राते ददाति । रातेर्व्यत्ययेनात्मनेपदम् । सिनीवाली प्रजनयति प्रजाः । तासु प्रजासु प्रजातासु कुहा वाचं दधाति स्थापयति ॥

[2]पशुकामस्यापि प्रथमो धाता । तेन प्रवापयति निषिञ्चति

नयति प्रथमं धातारं करोति प्रैव ते-
नं वापयत्यन्वेवास्मा अनुमतिर्मन्य-
ते राते राका प्र सिनीवाली जन-
यति पशूनेव प्रजातान्कुह्वा प्रतिष्ठा-
पयत्येता एव निर्वपेद्ग्रामकामश्छ-
न्दांसि वै देविकाश्छन्दांसीव
खलु वै ग्रामश्छन्दोभिरेवास्मै ग्रा-
मम् ॥ ३० ॥ अव रुन्धे मध्यतो

प्रथमम् । धातारम् । करोति । प्रेति । एव । तेनं । वापयति । अन्विति । एव । अस्मै । अनुमतिरित्यनु—मतिः । मन्यते । राते । राका । प्रेति । सिनीवाली । जनयति । पशून् । एव । प्रजातानिति प्र—जातान् । कुह्वा । प्रतीति । स्थापयति । एताः । एव । निरिति । वपेत् । ग्रामकाम इति ग्राम—कामः । छन्दांसि । वै । देविकाः । छन्दांसि । इव । खलु । वै । ग्रामः । छन्दोभिरिति छन्दः—भिः । एव । अस्मै । ग्रामम् ॥ ३० ॥ अवेति ।

---

पशून् । प्रजातान्पशून् कुह्वा प्रतिष्ठापयति ॥

[3]ग्रामकामस्य मध्यतो धाता । तेन ग्रामस्य मध्ये एनं आधिपत्ये स्थापयति ॥

धातारं॑ करोति मध्य॒त ए॒वैनं॒ ग्राम॑-
स्य दधात्ये॒ता ए॒व निर्व॑पे॒ज्ज्योगा॑-
मयावी॒ छन्दा॑ꣳसि॒ वै दे॒वि॑का॒श्छ-
न्दा॑ꣳसि॒ खलु॒ वा ए॒तम॒भि म॑न्यन्ते॒
यस्य॒ ज्योगा॒मय॑ति॒ छन्दो॑भिरे॒वैन॑म-
ग॒दं क॑रोति मध्य॒तो धा॒तारं॑ करोति
मध्य॒तो वा ए॒तस्याक्लृ॑प्तं॒ यस्य॒ ज्योगा॒-

रुन्धे॒ । म॒ध्य॒तः । धा॒तार॑म् । क॒रो॒ति॒ । म॒ध्य॒तः ।
ए॒व । ए॒न॒म् । ग्राम॑स्य । द॒धा॒ति॒ । [4]ए॒ताः । ए॒व ।
निरिति॑ । व॒पे॒त् । ज्योगा॑मया॒वीति॒ ज्योक्—आ॒म॒-
या॒वी॒ । छन्दा॑ꣳसि । वै । दे॒वि॑काः । छन्दा॑ꣳसि ।
खलु॑ । वै । ए॒तम् । अ॒भीति॑ । म॒न्य॒न्ते॒ । यस्य॑ ।
ज्योक् । आ॒मय॑ति । छन्दो॑भि॒रिति॒ छन्दः॑—भि॒ः ।
ए॒व । ए॒न॒म् । अ॒ग॒दम् । क॒रो॒ति॒ । म॒ध्य॒तः । धा॒-
तार॑म् । क॒रो॒ति॒ । म॒ध्य॒तः । वै । ए॒तस्य॑ । अक्लृ॒-

---

[4]ज्योगामयावी दीर्घामयग्रस्तः । अभिमन्यन्ते अभिक्रुध्यन्ति यस्य ज्योगामयत्यामयः । 'रुजार्थानाम्' इति कर्मणि षष्ठी । मध्यतो धाता भवति । मध्यतो हि देहस्य अक्लृप्तं असामर्थ्यं एतस्य ज्योगामयाविनः । तेन धातुर्मध्यतः करणेन अस्य मध्यतः कल्पयति सामर्थ्यं जनयति ॥

मर्यति मध्यत एवास्य तेनं कल्पय-
त्येता एव निः ॥ ३१ ॥ वपेद्यं
यज्ञो नोपनमेच्छन्दांसि वै देविका-
श्छन्दांसि खलु वा एतं नोप न-
मन्ति यं यज्ञो नोपनमति प्रथमं
धातारं करोति मुखत एवास्मै छ-
न्दांसि दधात्युपैनं यज्ञो नमत्येता

तम् । यस्य । ज्योक् । आमर्यति । मध्यतः । एव ।
अस्य । तेनं । कल्पयति । [5]एताः । एव । निरिति
॥ ३१ ॥ वपेत् । यम् । यज्ञः । न । उपनमेदित्युं-
प–नमेत् । छन्दांसि । वै । देविकाः । छन्दांसि ।
खलु । वै । एतम् । न । उपेति । नमन्ति । यम् ।
यज्ञः । न । उपनमतीत्युप–नमति । प्रथमम् ।
धातारम् । करोति । मुखतः । एव । अस्मै । छ-
न्दांसि । दधाति । उपेति । एनम् । यज्ञः । न-

---

[5]यं यज्ञो नोपनमेत् नोपनमति, स इयक्षुरेता निर्वपेत् । तत्र धातुः प्राथम्येन मुखत एव छन्दांसि धृतानि भवन्ति । ततो यज्ञ एनमुपनमति ॥

एव निर्वपेदीजानश्छन्दाᳪंसि वै दे-
विका यातयामानीव खलु वा एत-
स्य छन्दाᳪंसि य ईजान उत्तमं
धातारं करोति ॥ ३२ ॥ उपरिष्टा-
देवास्मै छन्दाᳪंस्ययातयामान्यवं रु-
न्ध उपैनमुत्तरो यज्ञो नमत्येता ए-

मति । [6]एताः । एव । निरिति । वपेत् । ईजानः । छन्दाᳪंसि । वै । देविकाः । यातयामानीति यात–यामानि । इव । खलु । वै । एतस्य । छन्दाᳪंसि । यः । ईजानः । उत्तममित्युत्–तमम् । धातारम् । करोति ॥ ३२ ॥ उपरिष्टात् । एव । अस्मै । छ-न्दाᳪंसि । अयातयामानीत्ययात–यामानि । अवेति । रुन्धे । उपेति । एनम् । उत्तर इत्युत्–तरः । यज्ञः । नमति । [7]एताः । एव । निरिति । वपेत् ।

---

[6]ईजानः इष्टवान् । य ईजानः एतस्य खलु यातयामानि गतसाराणि छन्दांसि भवन्ति । तत्रोत्तमं धातारं कुर्यात् । उप-रिष्टात् यागोत्तरकालं अयातयामान्येव छन्दांस्यवरुन्धे । ततश्चै-नमुत्तरो यज्ञः उपनमति येन इयक्षते ॥

[7]मेधाकामस्य प्रथमो धाता कार्यः ॥

व निर्वंपेद्यं मेधा नोपनमेच्छन्दाꣳसि वै देविकाश्छन्दाꣳसि खलु वा एतं नोपं नमन्ति यं मेधा नोपनमंति प्रथमं धातारं करोति मुखत एवास्मै छन्दाꣳसि दधात्युपैनं मेधा नंमत्येता एव निर्वंपेत् ॥ ३३ ॥ रुक्कांमश्छन्दाꣳसि वै देविकाश्छन्दाꣳसीव खलु वै रुक्छन्दोंभिरेवास्मि-

यम् । मेधा । न । उपनमेदित्युंप-नमेत् । छन्दाꣳसि । वै । देविकाः । छन्दाꣳसि । खलु । वै । एतम् । न । उपेति । नमन्ति । यम् । मेधा । न । उपनमतीत्युंप-नमंति । प्रथमम् । धातारम् । करोति । मुखतः । एव । अस्मै । छन्दाꣳसि । दधाति । उपेति । एनम् । मेधा । नमति । [8]एताः । एव । निरिति । वपेत् ॥ ३३ ॥ रुक्कांम इति रुक्-कामः । छन्दाꣳसि । वै । देविकाः । छन्दाꣳसि । इव । खलु । वै । रुक् । छन्दोंभिरिति छन्दः-भिः ।

---

[8]रुक्कामस्य मध्यतः । क्षीरे हवींषि भवन्तीति रुक्कामस्य विशेषः ॥

न्रुचं दधाति क्षीरे भवन्ति रुचमेवा-
स्मिन्दधति मध्यतो धातारं करोति
मध्यत एवैनꣳ रुचो दधाति गा-
यत्री वा अनुमतिस्त्रिष्टुग्राका जगती
सिनीवाल्यनुष्टुप्कुहूर्धाता वषट्कारः
पूर्वपक्षो राकाऽपरपक्षः कुहूरमा-

एव । अस्मिन्न् । रुचम् । दधाति । क्षीरे । भवन्ति । रुचम् । एव । अस्मिन्न् । दधाति । मध्यतः । धातारम् । करोति । मध्यतः । एव । एनम् । रुचः । दधाति । [9]गायत्री । वै । अनुमतिरित्यनु–मतिः । त्रिष्टुक् । राका । जगती । सिनीवाली । अनुष्टुबित्यनु –स्तुप् । कुहूः । धाता । वषट्कार इति वषट्–कारः । पूर्वपक्ष इति पूर्व–पक्षः । राका । अपरपक्ष इत्यपर–पक्षः । कुहूः । अमावास्येत्यमा–वा-

---

[9]गायत्री वा इत्यादि ॥ अनुमत्यादिधात्रन्ता गायत्र्यादिवषट्कारात्मना रूप्यते तद्वत्प्रजादिसाधनत्वात् । वषट्कारस्य च सर्वप्रवर्तकत्वात् धातृत्वम् । पूर्वपक्ष इत्यादि । राका पूर्णमासी पूर्वपक्षत्वेन रूप्यते । कुहूरमावास्या अपरपक्षत्वेन रूप्यते । सिनीवाली कृष्णपञ्चदशी दृष्टचन्द्रामावास्यारूपेण रूप्यते ।

वास्यां सिनीवाली पौर्णमास्यनुम-
तिश्चन्द्रमा धाताऽष्टौ ॥३४॥ वसं-
वोऽष्टाक्षरा गायत्र्येकादश रुद्रा ए-
कादशाक्षरा त्रिष्टुब्द्वादशादित्या द्वाद-
शाक्षरा जगती प्रजापतिरनुष्टुब्धाता
वषट्कार एतद्वै देविकास्सर्वाणि च

स्यां । सिनीवाली । पौर्णमासीति पौर्ण–मासी ।
अनुमतिरित्यनु–मतिः । चन्द्रमाः । धाता । [10]अष्टौ
॥ ३४ ॥ वसवः । अष्टाक्षरेत्यष्टा–अक्षरा । गाय-
त्री । एकादश । रुद्राः । एकादशाक्षरेत्येकादश–
अक्षरा । त्रिष्टुप् । द्वादश । आदित्याः । द्वादशाक्ष-
रेति द्वादश–अक्षरा । जगती । प्रजापतिरिति प्र-
जा–पतिः । अनुष्टुबित्यनु–स्तुप् । धाता । वषट्कार
इति वषट्–कारः । एतत् । वै । देविकाः । सर्वा-
णि । च । छन्दांसि । सर्वाः । च । देवताः । व-

---

अनुमतिरूनचन्द्रा शुक्लपक्षदशी पौर्णमासीरूपेण रूप्यते । धाता चन्द्रमस्त्वेन रूप्यते । स हि सर्वमिदं पूर्वपक्षादि प्रवर्तयति । पूर्वपक्षादीनामपि प्रजावृद्ध्यादिहेतुत्वात् ताद्रूप्येण रूपणम् ॥

[10]अष्टौ वसव इत्यादि ॥ गायत्र्यादिरूपेण अनुमत्यादयो

छन्दाᳲसि सर्वाश्च देवतां वषट्कार-
स्ता यत्सह सर्वा निर्वपेदीश्वरा एनं
प्रदहो द्वे प्रथमे निरुप्यं धातुस्तृती-
यं निर्वपेत्तथो एवोत्तरे निर्वपेत्तथैनं
न प्र दहन्त्यथो यस्मै कामाय निरु-

षट्कार इति वषट्—कारः । [11]ताः । यत् । सह । स-
र्वाः । निर्वपेदिति निः—वपेत् । ईश्वराः । एनम् ।
प्रदह इति प्र—दहः । द्वे इति । प्रथमे इति । निरु-
प्येति निः—उप्यं । धातुः । तृतीयम् । निरिति ।
वपेत् । तथो इति । एव । उत्तरे इत्युत्—तरे । नि-
रिति । वपेत् । तथा । एनम् । न । प्रेति । दहन्ति ।
[12]अथो इति । यस्मै । कामाय । निरुप्यन्त इति

---

रूपिताः । इदानीं ता एव वस्वादिरूपेण रूप्यन्ते—अष्टाक्षरा गायत्र्यात्मिका अनुमतिः अष्टौ वसव इति । एवं सर्वत्र । एतद्वा इत्यादि । एतेन प्रकारेण ॥

[11]ता यदित्यादि ॥ तास्ताद्दश्यो देविकाः सर्वाः यत् यदि सह निर्वपेत्, एनं यजमानं प्रदहः प्रकर्षेण दग्धुमीश्वराः समर्थास्स्युः । 'ईश्वरे तोसुन्कसुनौ' इति तोसुन् । द्वे इत्यादि । गतम् । तथा उ तथो—निपातसमुदायात्मको निपातः ॥

[12]अथो इत्यादि ॥ अथो अपि च यस्मै कामाय उक्तेभ्यः

प्यन्ते तमेवाभिरुपाप्नोति ॥ ३५ ॥

वास्तोष्पते प्रति जानीह्यस्मांत्स्वा-

निः—उप्यन्ते । तम् । एव । आभिः । उपेति । आप्नोति ॥ ३५ ॥

पशुकामश्छन्दाꣳसि वै देविकाश्छन्दाꣳसि ग्रामं कल्पयत्येता एव निरुप्तमं धातारं करोति मेधा नमत्येता एव निर्वपेदष्टौ दहन्ति नव च ॥ १ ॥

देविकाः प्रजाकामो मिथुनी प्रजासु पशुकामः प्रैव ग्रामकामो ज्योगामयावी यं यज्ञो य ईजानो यं मेधा रुक्कामोष्टौ देविका भवन्ति दधति राष्ट्रकामाय भवति दधाति ॥

[1]वास्तोः । पते । प्रतीति । जानीहि । अस्मान् ।

---

प्रजादिकामिभ्यः अन्यस्मा अपि एता निरुप्यन्ते तं काममाभिरेवोपाप्नोति ॥

इति तृतीये चतुर्थे नवमोनुवाकः

[1]यत्र दशाहान्युषित्वा प्रयास्यन् स्रुचि तच्चतुर्गृहीतं गृहीत्वा आहवनीये वास्तोष्पतीयं जुहोति—वास्तोष्पते इति त्रिष्टुभ्यां

वे॒शो अ॑नमी॒वो भ॑वा नः। यत्त्वेम॑हे
प्रति॒ तन्नो॑ जुषस्व॒ शं न॑ एधि द्वि॒पदे॒

स्वा॒वे॒श इति॑ सु-आ॒वे॒शः । अ॒न॒मी॒वः । भ॒व ।
न॒ः । यत् । त्वा॒ । ईम॑हे । प्रतीति॑ । तत् । न॒ः ।
जु॒ष॒स्व॒ । शम् । न॒ः । ए॒धि॒ । द्वि॒पद॒ इति॑ द्वि-पदे॑।

---

याज्यानुवाक्याभ्याम् । वास्तोष्पते इति पुरोनुवाक्यामनूच्य वास्तोष्पते इति याज्यया जुहोति ॥ 'यदेकया जुहुयात्'* इत्यादि ब्राह्मणम् । हे वास्तोष्पते वास्तोः गृहस्य पालयितः । 'रुद्रः खलु वै वास्तोष्पतिः'* इति ब्राह्मणम् । 'सुबामन्त्रिते' इति पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायस्य षाष्ठिकमामन्त्रिताद्युदात्तत्वम्, 'षष्ठ्याः पतिपुत्र' इति सत्वम्, सुषामादित्वात्षत्वम् । अस्मान् प्रतिजानीहि आत्मीयत्वेन बुद्ध्यस्व प्रत्येकं वा अस्मान् जानीहि अनुध्यातुमर्हसि । ततश्च स्वावेशः सुखावासः सुखं वासयिता अस्माकं भव । अनमीवः अरोगः अरोगहेतुश्चास्माकं भव । 'द्व्यचोतस्तिङः' इति संहितायां दीर्घत्वम्, 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । यत्त्वा ईमहे याचामहे तन्नोस्मान् प्रतिजुषस्व प्रतिप्रापय । प्रत्येकं वा प्रापय । यद्वा—तत्तत्प्रति तत्प्रदानार्थं नः अस्मान् जुषस्व । प्रतिगृहाण वा अस्मान् । किंच—नोस्माकं द्विपदे चतुष्पदे च शं सुखं सुखहेतुः एधि भव । 'द्वित्रिभ्यां पद्दन्' इति द्विपद इत्यत्रोत्तरपदान्तोदात्तत्वम् ॥

---

*सं. ३-४-१०.[10, 7]

शं चतुष्पदे । वास्तोष्पते शग्मया सꣳसदा ते सक्षीमहि रण्वया गातुमत्या। आवः क्षेम उत योगे वरं नो यूयं पात स्वस्तिभिस्सदा नः ।

शम् । चतुष्पद इति चतुः—पदे । [2]वास्तोः । पते । शग्मया । सꣳसदेति सं—सदा । ते । सक्षीमहि । रण्वया । गातुमत्येति गातु—मत्या । आवः । क्षेमे । उत । योगे । वरम् । नः । यूयम् । पात । स्वस्ति-

---

[2]अथ द्वितीया—हे वास्तोष्पते शग्मया सर्वार्थसाधनशक्तया । छान्दसं जश्त्वम् । तव संसदा सन्तत्या श्लेषणेन एतद्धोमनिमित्तेन संबन्धेन सक्षीमहि अभिभवेम शत्रून् । यद्वा—त्वया संसक्ता भूयास्म । सहेराशिषि लिङ्, छान्दसोनुनासिकलोपः । रण्वया गन्तव्यया । रवि गतौ, घञ् । पचाद्यजेव वाऽकर्तरि । रमणीयया वा । रेमरक्षरविकारश्छान्दसः, औणादिको यञ् प्रत्ययः । गातुमत्या गतिमत्या सर्वत्राप्रतिहतगत्या । 'ह्रस्वनुड्भ्यां मतुप्' । इति मतुप उदात्तत्वम् । किञ्च—आवः रक्ष । अवतेश्छान्दसो लुङ् । क्षेमे उत अपि च योगक्षेमार्थं योगार्थं च नः अस्मान् वरं उत्कृष्टं रक्षेति । लब्धपरिपालनं क्षेमः, अलब्धलाभो योगः । यूयमित्यादि । व्यख्यातम्* । पूजार्थं एकस्मिन् बहुवचनम्, वचनव्यत्ययो वा ॥

---

* सं २-२-१२.[17]

यत्सायंप्रातरग्निहोत्रं जुहोत्याहुती-
ष्टका एव ता उप धत्ते ॥ ३६ ॥
यजमानोऽहोरात्राणि वा एतस्येष्ट-
का य आहिताग्निर्यत्सायंप्रातर्जुहो-
त्यहोरात्राण्येवाप्त्वेष्टकाः कृत्वोप ध-

भिरिति स्वस्ति–भिः । सदा । नः । [3]यत् । साय-
म्प्रातरिति सायं–प्रातः । अग्निहोत्रमित्यग्नि–हो-
त्रम् । जुहोति । आहुतीष्टका इत्याहुति–इष्टकाः ।
एव । ताः । उपेति । धत्ते ॥ ३६ ॥ यजमानः ।
[4]अहोरात्राणीत्यहः–रात्राणि । वै । एतस्य । इष्ट-
काः । यः । आहिताग्निरित्याहित–अग्निः । यत् ।
सायंप्रातरिति सायं–प्रातः । जुहोति । अहोरात्रा-
णीत्यहः–रात्राणि । एव । आप्त्वा । इष्टकाः ।

---

[3]अथ वास्तोष्पतीयस्य ब्राह्मणम्—यत्सायमित्यादि ॥ सायंप्रातः अग्निहोमेन आहुत्यात्मिका इष्टका यजमान उपधत्ते ॥

[4]अहोरात्राणीत्यादि ॥ अहानि रात्रयश्चाहोरात्राणि । 'हेमन्तशिशिरावहोरात्रे च' इति नपुंसकत्वम् । आहिताग्नेरिष्टकास्थानीयान्यहोरात्राणि सायंप्रातर्होमेन अहोरात्राण्याप्त्वा होमेन चेष्टकाः कृत्वा अहोरात्रात्मिका इष्टका उपधत्ते ॥

त्ते दश समानत्रं जुहोति दशाक्षरा
विराड्विराजमेवाप्त्वेष्टकां कृत्वोप ध-
त्तेऽथो विराज्येव यज्ञमाप्नोति चि-
त्यश्चित्योस्य भवति तस्माद्यत्र दशो-

कृत्वा । उपेति । धत्ते । [5]दश । समानत्रं । जुहोति । दशाक्षरेति दश—अक्षरा । विराडिति वि—राट् । विराजमिति वि—राजम् । एव । आप्त्वा । इष्टकाम् । कृत्वा । उपेति । धत्ते । अथो इति । विराजीति वि—राजि । एव । यज्ञम् । आप्नोति । चित्यश्चित्य इति चित्यः—चित्यः । अस्य । भवति । [6]तस्मात् । यत्र । दश । उषित्वा । प्रयातीति

[5]दशेत्यादि ॥ समानत्र वास्तौ दशाहुतीः दशस्वहोरात्रेषु जुहोति । दशसंख्यासंपत्त्या दशाक्षरां विराजमाप्त्वा विराडात्मिकामेवेष्टकामुपधत्ते । एवं त्रय्या [तिस्रः] इष्टका आहुतीष्टका अहोरात्रेष्टकौ विराडिष्टकेति । अथो अपि च विराजि लब्धायां यज्ञस्संपद्यते । चित्यश्चित्यः पुनःपुनश्च यजमानस्याग्निर्भवति न कदाचित्समाप्यते । 'चित्याग्निचित्ये च' इति निपात्यते, पौनःपुन्ये द्विर्वचनम्, 'अनुदात्तं च' इति द्वितीयस्य अनुदात्तत्वम् ॥

[6]यदुक्तं विराजि यज्ञमाप्नोतीति, तत्स्फुटीकरोति—तस्मादिति ॥ यस्मादेवं विराट्सम्पत्तौ यज्ञावाप्तिः, तस्माद्यत्र वसतौ दशरात्री-

षि॒त्वा प्र॒याति॒ तद्य॑ज्ञवा॒स्त्ववा॑स्त्वे॒व
तद्यत्ततो॒ऽर्वा॒चीन॑म् ॥ ३७ ॥ रु॒द्रः ख-
लु॒ वै वा॑स्तोष्प॒तिर्यद॑हु॒त्वा वास्तो-
ष्प॒तीयं॑ प्र॒याया॑द्रु॒द्र ए॑नं भू॒त्वाऽग्निर॑-

प्र–याति॑ । तत् । य॒ज्ञ॒वा॒स्त्विति॑ यज्ञ–वा॒स्तु । अवा॑-
स्तु । ए॒व । तत् । यत् । तत॑ः । अ॒र्वा॒चीन॑म् ॥ ३७ ॥
[7]रु॒द्रः । खलु॑ । वै । वा॒स्तो॒ष्प॒तिरिति॑ वास्तोः–प॒-
तिः । यत् । अहु॑त्वा । वा॒स्तो॒ष्प॒ती॒यमिति॑ वा-
स्तोः–प॒तीय॑म् । प्र॒या॒या॒दिति॑ प्र–या॒यात् । रु॒द्रः ।
ए॒न॒म् । भू॒त्वा । अ॒ग्निः । अ॒नू॒त्था॒येत्य॑नु–उ॒त्थाय॑ ।

रुषित्वा प्रयाति देशान्तरं गच्छति, तद्यज्ञवास्तु भवति वास्तोष्पतीयहोमः कर्तव्य इत्यर्थः । यत्ततो दशरात्रादर्वाचीनं न्यूनं नवरात्रादि वसति तदवास्त्वेव उक्तेन न्यायेन यज्ञानवाप्तेर्वास्तोष्पतीयहोमाभावादवास्तुत्वम् । अर्वागञ्चतीति ऋत्विगादिना क्विनि 'विभाषाञ्चेः' इति खः ॥

[7]कः पुनरत्र यष्टव्यः? को वाऽस्य यागः? इत्याह—रुद्र इति ॥ 'रुद्रो वा एष यदग्निस्स एतर्हि जातो यर्हि सर्वश्चितः'* इति न्यायेन अस्येष्टकचितस्य यज्ञस्य वास्तुनः पातृत्वेन स्वामित्वेन अग्रचात्मा रुद्रस्सन्निधत्ते भागं च लिप्सते । तस्माद्रुद्रो वास्तोष्पतिः । छान्दसष्षष्ठ्या अलुक्, 'पत्यावैश्वर्ये' इति व्यत्ययेन न प्रवर्तते । ततश्च यदहुत्वा वास्तोष्पतीयं प्रयायात्, एनं प्रयान्तं

* सं. ५-४-३.[1]

नूत्थायं हन्याद्वास्तोष्पतीयं जुहो-
ति भागधेयेनैवैनँ शमयति नार्ति-
मार्च्छति यजमानो यद्युक्ते जुहुया-
द्यथा प्रयाते वास्तावाहुतिं जुहोति
तादृगेव तद्यदयुक्ते जुहुयाद्यथा क्षेम

हन्यात् । वास्तोष्पतीयमिति वास्तोः–पतीयम् । जुहोति । भागधेयेनेति भाग–धेयेन । एव । एनम् । शमयति । न । आर्तिम् । एति । ऋच्छति । यजमानः । [8]यत् । युक्ते । जुहुयात् । यथा । प्रयात इति प्र–याते । वास्तौ । आहुतिमित्या–हुतिम् । जुहोति । तादृक् । एव । तत् । यत् । अयुक्ते । जुहुयात् । यथा । क्षेमे । आहुतिमित्या–हुतिम् ।

---

रुद्रो भूत्वा अग्निरनूत्थाय हन्यात् अनुद्रुत्य नाशयेत् । वास्तोष्पतीयमित्यादि । वास्तोष्पते इति द्वाभ्याम् । संयोजिते वा अयं होमः स्यात्, अयुक्ते वा प्रागेव भवेत् ॥

[8]अत्र पक्षद्वयेऽपि दोषमुक्त्वा समाधातुमारभते—यद्युक्ते इत्यादि ॥ अत्रानेन वास्तोष्पतीयं होतव्यं, तत्रापि प्रयास्यता होतव्यम्, यत्र यत् युक्ते जुहुयात् यथा प्रयाते अपगते वास्तौ अवास्तुन्येव जुहोति तादृक्तत्तुल्यं भवति । युक्ते तु स्थितस्यैव भाण्डाधारत्वादवास्तुत्वं वसतेर्व्यज्यते । अथ यदयुक्ते जुहुयात्

आहुतिं जुहोति तादृगेव तदहुतम-
स्य वास्तोष्पतीयꣳ स्यात् ॥ ३८ ॥
दक्षिणो युक्तो भवति सव्योऽयुक्तोथ
वास्तोष्पतीयं जुहोत्युभयमेवाकरप-

जुहोति । तादृक् । एव । तत् । अहुतम् । अस्य । वास्तोष्पतीयमिति वास्तोः—पतीयम् । स्यात् ॥ ३८ ॥ [9]दक्षिणः । युक्तः । भवति । सव्यः । अ-युक्तः । अथ । वास्तोष्पतीयमिति वास्तोः—पतीयम् । जुहोति । उभयम् । एव । अकः । अपरि-

---

यथा क्षेमे निवासे प्रयाणप्रसङ्ग एव जुहोति तादृक्तत् एवं पक्षद्वयेऽपि वास्तोष्पतीयं हुतं स्यात्, ततो रुद्रः क्रुद्ध्येत् ॥

[9]अथ समाधत्ते—दक्षिण इत्यादि ॥ दक्षिणो गौर्युक्तो भवति, सव्यस्त्वयुक्तः, तथाऽस्मिन्नवसरे वास्तोष्पतीयं जुहोति उभयमप्यकः करोति वास्तुनि होतव्यं, प्रयास्यता होतव्यमिति तदुभयमनुष्ठितं भवति । एकस्य योगे प्रयाणस्य प्रस्तुतत्वात्, एकस्य चायोगेन प्रयाणस्याप्रस्तुतत्वात् एकस्य व्यवायोपगमात् । ततश्चैनमपरिवर्गं किंचिदप्यपरिवर्ग्यं सर्वात्मना शमयति । वृजेश्छान्दसो घञ्, तेन बहुव्रीहिः । करोतेश्छान्दसो लुङ्, 'मन्त्रे घस' इत्यादिना च्लेर्लुक् ॥

रिवर्गमेवैनꣳ शमयति यदेकया जु-
हुयाद्दर्विहोमं कुर्यात्पुरोनुवाक्याम-
नूच्य याज्यया जुहोति सदेवत्वाय
यद्धुत आदध्याद्रुद्रं गृहानन्वारोहये-
द्यदवक्षाणान्यसंप्रक्षाप्य प्रयायाद्यथा

वर्गमित्यपरि–वर्गम् । एव । एनम् । शमयति ।
[10]यत् । एकया । जुहुयात् । दर्विहोममिति दर्वि–
होमम् । कुर्यात् । पुरोनुवाक्यामिति पुरः–अनुवा-
क्याम् । अनूच्येत्यनु–उच्य । याज्यया । जुहोति ।
सदेवत्वायेति सदेव–त्वाय । [11]यत् । हुते । आद-
ध्यादित्या–दध्यात् । रुद्रम् । गृहान् । अन्वारोहये-
दित्यनु–आरोहयेत् । यत् । अवक्षाणानीत्यव–क्षा-
णानि । असम्प्रक्षाप्येत्यसं–प्रक्षाप्य । प्रयायादिति
प्र–यायात् । यथा । यज्ञवेशसमिति यज्ञ–वेशसम् ।

---

[10]वषट्कारान्तानामभावाद्दर्विहोमः स्यात् । तस्मात्पुरोनुवाक्याम-
नूच्य अनुद्धृत्य द्वितीयया याज्यया जुहोति सदेवत्वाय देव-
संमितत्वाय देवयोग्यत्वायेत्यर्थः । दर्विहोमप्रियतमत्वाद्देवानाम् ॥

[11]यद्धुत इत्यादि ॥ हुतहोमे भाण्डादि शकट आदध्यात्
आरोपयेत् तदा गृहानश्मादीन्यनुरुद्रमप्यारोपयेत् । स हि हुते

यज्ञवेशसं वाऽऽदहनं वा तादृगेव त-
दयं ते योनिर् ऋत्विय इत्यरण्यो-
स्समारोहयति ॥ ३१ ॥ एष वा
अग्नेर्योनिस्स्व एवैनं योनौ समारो-
हयत्यथो खल्वाहुर्यदरण्योस्समारू-

वा । आदहनमित्या—दहनम् । वा । तादृक् । एव । तत् । अयम् । ते । योनिः । ऋत्वियः । इति । अरण्योः । समारोहयतीति सं—आरोहयति ॥ ३१ ॥ एषः । वै । अग्नेः । योनिः । स्वे । एव । एनम् । योनौ । समारोहयतीति सं—आरोहयति । [12]अथो इति । खलु । आहुः । यत् । अरण्योः । समारूढ

---

होमे वास्तुं जहाति । तस्मादहुते यानेषु भाण्डान्यारोपयितव्यानीति भावः । यदवक्षाणानीत्यादि । यद्यवक्षाणानि ज्वलितकाष्ठसंहतीः असंप्रक्षाप्य समारोपितानि न कृत्वा अनिर्वापिताग्निरेव स्थापयित्वा प्रयायात् । क्षै जै षै क्षये, णौ पुगागमः । यथायज्ञवेशसं यज्ञविध्वंसनं वा आदहनं सर्वतो दहनं वा क्रियते तत्तुल्यं तादृशं व्यसनं अनारोपितोग्निरुत्पादयेदित्यर्थः । तस्मात् 'अयं ते योनिर् ऋत्वियः'* इत्यनया ऋचा अरण्योरग्निं समारोहयति । एष वा इत्यादि । गतम् ॥

[12]अथो खल्वाहुरिति ॥ यदरण्योः समारूढोग्निः अरण्यो-

---

*सं. १-५-५.6

ढो नश्येदुदस्याग्निस्सीदेत्पुनराधेयं-
स्स्यादिति या ते अग्ने यज्ञिया तनू-
स्तयेह्या रोहेत्यात्मन्त्समारोहयते
यजमानो वा अग्नेर्योनिस्स्वायामे-
वैनं योन्याꣳ समारोहयते ॥ ४० ॥

इति सं–आरूढः । नश्येत् । उदिति । अस्य । अग्निः । सीदेत् । पुनराधेय इति पुनः–आधेयः । स्यात् । इति । या । ते । अग्ने । यज्ञिया । तनूः । तया । एति । इहि । एति । रोह । इति । आत्मन्न् । समारोहयत इति सं–आरोहयते । यजमानः । वै । अग्नेः । योनिः । स्वायाम् । एव । एनम् । योन्याम् । समारोहयत इति सं–आरोहयते ॥ ४० ॥

घत्तेऽर्वाचीनꣳ स्याथ्समारोहयति
पञ्चचत्वारिꣳशच्च ॥ १० ॥

---

व्र्याप्त्यादिना* नश्येत् अस्याग्निरुत्सीदेत् गत एव स्यात्, ततः पुनराधेयस्स्यात् इत्यरण्योस्समारोपणे दोषमाहुः । तस्मात् 'या ते अग्ने यज्ञिया तनूः'† इत्यादिमन्त्रेण आत्मनि समारोहयते । यजमानो वा इत्यादि । गतम् ॥

इति तृतीये चतुर्थे दशमोनुवाकः.

---

*प्योष्ठ्यासथा. †ब्रा. २-५-८.

त्वमग्ने बृहद्वयो दधासि देव दाशुषे।
कविर्गृहपतिर्युवा। हव्यवाडग्निरजरः
पिता नो विभुर्विभावा सुदृशीको

[1]त्वम् । अग्ने । बृहत् । वयः । दधासि । देव । दाशुषे । कविः । गृहपतिरिति गृह-पतिः । युवा । [2]हव्यवाडिति हव्य-वाट् । अग्निः । अजरः । पिता । नः । विभुरिति वि-भुः । विभावेति वि-भावा । सुदृशीक इति सु-दृशीकः । अस्मे इति ।

---

[1]सन्ति देवसुवां हवींष्यष्टौ 'अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपेत्कृष्णानां व्रीहीणाम्,* इत्यादौ विहितानि, 'देवसुवामेतानि हवींषि भवन्ति'† इति च तेषां याज्यानुवाक्याः। तस्याग्नेयस्य पुरोनुवाक्या—त्वमग्ने इति गायत्री हे अग्ने देव त्वं बृहत् महत् वयः अन्नं दधासि धारयसि दाशुषे हविर्दत्तवते यजमानाय दातुं दधासि । कविः क्रान्तदर्शनः गृहपतिः गृहस्य पाता युवा हविषां देवैर्मिश्रयिता, नित्यतरुणो वा। 'दाश्वान्' इति निपातितः ॥

[2]तत्रैव याज्या—हव्यवाडिति त्रिष्टुप् ॥ हव्यवाट् हविषां वोढा अग्निः अङ्गनादिगुणयुक्तः अजरो जरारहितः । 'नञो जरमर' इत्युदात्तत्वम् । पिता पालयिता नः अस्माकं विभुः भुवनस्य व्यापी विभावा विशेषेण भानशीलः । भातेर्वनिप् ।

---

*सं १-८-१०.[1] †ब्रा १-७-४.

अस्मे । सुगार्हपत्यास्समिषो दिदी-
ह्यस्मद्रियक्सं मिमीहि श्रवाꣳसि ।
त्वं च सोम नो वशो जीवातुं न

सुगार्हपत्या इति सु–गार्हपत्याः । समिति । इ-
षः । दिदीहि । अस्मद्रियगित्यस्म–द्रियक् । समि-
ति । मिमीहि । श्रवाꣳसि । [3]त्वम् । च । सोम ।
नः । वशः । जीवातुम् । न । मरामहे । प्रिय-

---

सुदृशीकः सुखदर्शनः। दृशीकादयो निपात्यन्ते, 'ऋत्वादयश्च' इत्युत्तरपदाद्युदात्तत्वम् । ईदृशस्त्वं अस्मै अस्माकम् । 'सुपां सुलुक्' इति शे आदेशः । सुगार्हपत्याः शोभनगृहपतित्वहेतुभूताः इषः अन्नानि संदिदीहि एकीकृत्य दीपय देहीत्यर्थः। दिदेतिः दीप्तिकर्मा छान्दसः, ददातेर्वा रूपं छान्दसविकारः। किं च—अस्मद्रियक् अस्मदाभिमुख्येनागतिमत् । 'विष्वग्देवयोश्च' इत्यद्र्यादेशः । श्रवांसि यशांसि अन्नानि वा संमिमीहि सम्यङ्निष्पादय । माङ् माने, जौहोत्यादिकः, व्यत्ययेन परस्मैपदम् ॥

[3]अथ 'सोमाय वनस्पतये श्यामाकं चरुम्'* इत्यस्य सौम्यस्य पुरोनुवाक्या—त्वं चेति गायत्री ॥ त्वमपि महानुभावः सोम नः वशः कामयसे रक्ष्यत्वेन । वष्टेर्लेट्याडागमः । 'निपातैर्यद्यदिहन्त' इति निघाताभावः । यद्वा—चशब्दोवधारणे । हे सोम नोस्माकं त्वमेव वशः कान्तः इष्टतमः । किमर्थम्? जीवातुं

---

*सं. १-८-१० 1

मरामहे। प्रियस्तोत्रो वनस्पतिः ।
ब्रह्मा देवानां पदवीः कवीनामृषि-
र्विप्राणां महिषो मृगाणाम्। श्येनो
गृध्राणाꣳ स्वधितिर्वनानाꣳ सोमः

स्तोत्र इति प्रिय-स्तोत्रः । वनस्पतिः । ब्रह्मा । देवानाम् । पदवीरिति पद-वीः । कवीनाम् । ऋषिः । विप्राणाम् । महिषः । मृगाणाम् । श्येनः । गृध्राणाम् । स्वधितिरिति स्व-धितिः । वनानाम्।

---

जीवनाय । व्यत्ययेन चतुर्थ्यर्थे द्वितीया । तुमुनि वा आडागमश्छान्दसः, तस्योदात्तत्वं च । अतः त्वत्प्रसादात् न मरामहे न म्रियामहे । व्यत्ययेन शप् । पुनश्च सोमो विशेष्यते—प्रियस्तोत्रः । गतम् । वनस्पतिः वनानां पाता । 'सोमो वा ओषधीनां राजा'* इति । वनस्थानां वा पाता 'सोमो वनस्पतीनाम्'† इति । पारस्करादित्वात्सुट्, 'उभे वनस्पत्यादिषु युगपत्' इति पूर्वयोर्युगपत्प्रकृतिस्वरत्वम् ॥

[4]तत्रैव याज्या—देवानां मध्ये ब्रह्मा सोमः ब्रह्मात्मना वर्तते । यद्वा—देवानां यथा ब्रह्मा श्रेष्ठो भवति, एवं सोमः पवित्राणां श्रेष्ठ इति । पदवीः पदव्यः यज्ञाः अभेदेन तद्विद उच्यन्ते । कवीनां क्रान्तदर्शनानां मध्ये यज्ञविदः श्रेष्ठाः । व्यत्ययेन वा बहुवचनम् । हल्ङ्यादिलोपाभावो वा । यज्ञश्रेष्ठ इति । यद्वा—वेतेर्गतिकर्मणो बुद्ध्यर्थात्क्विप् । पदानां पद्यमानानां यज्ञानामेव वेदितोच्यते, अनवधारणादनवग्रहः । ऋषिः

---

*सं. ६-१-९. †सं. १-८-१०[2].

॥ ४१ ॥ पवित्रमत्येति रेभन्न् । आ विश्वदेवꣳ सत्पतिꣳ सूक्तैरद्या वृणीमहे । सत्यसवꣳ सवितारम् । आ

सोमः ॥ ४१ ॥ पवित्रम् । अतीति । एति । रेभन्न् ।
[5]एति । विश्वदेवमिति विश्व-देवम् । सत्पतिमिति सत्-पतिम् । सूक्तैरिति सु-उक्तैः । अद्य । वृणीमहे । सत्यसवमिति सत्य-सवम् । सवितारम् ।
[6]एति । सत्येन । रजसा । वर्तमानः । निवेशय-

द्रष्टा विप्राणां श्रेष्ठः, महाबलत्वात् । श्येनः शंसनीयो गच्छतीति गृध्राणां श्रेष्ठः । स्वधितिः अग्निः विनाशनसामर्थ्यात्ताच्छब्द्यम् । आत्मनि धीयते इति । वनानां वननीयानां अग्निः श्रेष्ठः । महावृक्षः कश्चिदित्येके । एवं सोमः पवित्राणां मध्ये पवित्रमत्येति ब्रह्मादिकम् । यद्वा—यन्नाम किंचित् पवित्रं तत् सर्वमत्येति रेभन् स्तूयमानः । रेभृ शब्दे, व्यत्ययेन कर्तृप्रत्ययः ॥

[5]'सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालमाशूनां व्रीहीणाम्'* इत्यस्य सावित्रस्य पुरोनुवाक्या—आ विश्वदेवमिति गायत्री ॥ विश्वदेवं विश्वेऽपि देवा दीव्यन्तेऽस्मिन्निति विश्वदेवस्सविता । 'विश्वं संज्ञायाम्' इति विश्वशब्दस्याद्युदात्तत्वम् । सत्पतिं सतां विदुषां पातारम् । 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरत्वम् । सूक्तैस्सम्यगुक्तैः स्तोत्रैः अद्यास्मिन् यज्ञे वृणीमहे सत्यसवं सत्यानुज्ञं सवितारं देवम् ॥

[6]तत्रैव याज्या—आ सत्येनेति त्रिष्टुप् ॥ सत्येन नित्येन

* सं. १-८-१०.[1]

सत्येन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च । हिरण्ययेन सविता रथेना देवो याति भुवना विपश्यन् ।
यथा नो अदितिः करत्पश्वे नृभ्यो

न्निति नि—वेशयन्न् । अमृतम् । मर्त्यम् । च । हिरण्ययेन । सविता । रथेन । एति । देवः । याति-भुवना । विपश्यन्निति वि—पश्यन्न् । [7]यथा । नः । अदितिः । करत् । पश्वे । नृभ्य इति नृ—भ्यः ।

---

रजसा लोकेन ज्योतिर्मयेन मण्डलात्मना आवर्तमानः उदयमस्तमयं चानुपूर्व्येण कुर्वाणः निवेशयन् स्थापयन् जीवयन् अमृतं देवादिलक्षणं मर्त्यं मनुष्यादिलक्षणं च । 'नञो जरमर' इत्युत्तरपदाद्युदात्तत्वम् । हिरण्ययेन हिरण्मयेन रथेन । 'ऋत्व्यवास्त्व' इति निपात्यते । हिरण्यया हिरण्ययानी[नेने]त्येके । सविता देवः । एवं भुवना भुवनानि भूतजातानि विपश्यन् विविधं पश्यन् हितेन योजयन् आयाति आगच्छतु ॥

[7]'रुद्राय पशुपतये गावीधुकं चरुम्'* इत्यस्य रौद्रस्य पुरोनुवाक्या—यथा न इति गायत्री ॥ अदितिः अखण्डनीयो रुद्रः ' कर्मणि क्तिन् । स देवः यथा नोस्माकं पश्वे पशुभ्यः । जाताद्वेकवचनम्, 'जसादिषु वा वचनम्' इति गुणाभावः । यथा वा नृभ्यः मनुष्येभ्यः यथा गवे गोभ्यः । पूर्ववदेकवचनम् । उभयत्रापि 'सावेकाचः' इति प्राप्तं विभक्त्युदात्तत्वं 'न गोश्वन्।

---

*सं. १-८-१०[1].

यथा गवे। यथा तोकाय रुद्रियम्।
मा नस्तोके तनये मा न आयुषि
मा नो गोषु मा ॥ ४२ ॥ नो अ-
श्वेषु रीरिषः। वीरान्मा नो रुद्र भा-

यथा। गवे। यथा। तोकाय। रुद्रियम्। [8]मा। नः। तोके। तनये। मा। नः। आयुषि। मा। नः। गोषु। मा ॥ ४२ ॥ नः। अश्वेषु। रीरिषः। वीरान्। मा। नः। रुद्र। भामितः। वधीः।

---

इत्यादिना निषिद्ध्यते। यथा च तोकाय अस्मदीयाय बालायापत्यादिकाय रुद्रियं रुद्रस्य पशुपतेः यत्कृत्यं सशिवया तन्वा यत्करोति तद्रुद्रियं पशूनां रक्षणं करत् करोति। यथा पश्वादिभ्यो यद्देवः करोति तथा तमनेन हविषाऽऽराधयाम इति शेषः। रुद्रशब्दादिदमर्थे घः, अर्हार्थे वा यद्रुद्रस्यार्हमिति। करोतेश्छान्दसो लुङ्, 'कृ मृ दृ रुहिभ्यः' इति अङ्, 'ऋदृशोऽङि गुणः' ॥

[8]तत्रैव याज्या—मा न इति जगती ॥ हे रुद्र भामितः क्रुद्धस्त्वं नोऽस्माकं तोकादीन् मा रीरिषः मा हिंसीः तोकादिविषये हिंसां मा कृथाः। सर्वत्र जातावेकवचनम्। तोकेष्वपत्येषु तनयेषु तदपत्येषु नप्त्रादिषु आयुषि जीविते गोषु अश्वेषु च। किञ्च—वीरान् विक्रान्तान् नोऽस्मदीयान् क्रोधेन मा वधीः।

मितो वधीरु हविष्मन्तो नमसा वि-
धेम ते। उदप्रुतो न वयो रक्षमाणा
वावदतो अभ्रियस्येव घोषाः। गिरि-
भ्रजो नोर्मयो मदन्तो बृहस्पतिम-

हविष्मन्तः । नमसा । विधेम । ते । [9]उदप्रुत
इत्युद–प्रुतः । न । वयः । रक्षमाणाः । वावदतः ।
अभ्रियस्य । इव । घोषाः । गिरिभ्रज इति गिरि–
भ्रजः । न । ऊर्मयः । मदन्तः । बृहस्पतिम् । अ-

---

यथा वयं हविष्मन्तोनेन गावीधुकेन चरुणा तद्वन्तः नमसा नमस्कारेण ते त्वां विधेम परिचरेम तदर्थं मा रीरिषः इति। पूर्ववत्कर्मणि षष्ठी ॥

[9]'बृहस्पतये वाचस्पतये नैवारं चरुं'* इत्यस्य पुरोनुवाक्या—उदप्रुत इति त्रिष्टुप् ॥ उदप्रुतः उदकस्य प्रापयितारः प्रवोढारः प्रवर्तयितारो वा मेघा उच्यन्ते । घ्रुङ् प्रुङ् प्लुङ् गतौ, उदभावश्छान्दसः । उदप्रुतो न उदप्लुत इव वयोन्नं रक्षमाणाः वृष्टिद्वारेण रक्षन्तः । व्यत्ययेनात्मनेपदम् । वावदतः अभ्रियस्य घोषा इव विश्वं जगद्वादयन्तः । वदेर्यङ्लुगन्ताच्छतरि 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । गिरिभ्रजो न गिरिभ्रज इव गिरिपृष्ठगामिनः । भ्रजतिर्गतिकर्मा, भ्राजतेर्वा ह्रस्वत्वम् । ऊर्मयः उदकसंघाता इव मदन्तः मादयन्तस्तर्पयन्तः

---

*सं. १-८-१०.[1]

भ्यर्का अनावन् । हंसैरिव सखिभिर्वावदद्भिरश्मन्मयानि नहना व्यस्यन् । बृहस्पतिरभिकनिक्रदद्गा

भीति । अर्काः । अनावन् । [10]हंसैः । इव । सखिभिरिति सखि–भिः । वावदद्भिरिति वावदत्–भिः । अश्मन्मयानीत्यश्मन्–मयानि । नहना । व्यस्यन्निति वि–अस्यन् । बृहस्पतिः । अभिकनिक्रददित्यभि–कनिक्रदत् । गाः । उत । प्रेति । अस्तौत् ।

---

प्रजाः । स्वरितत्वाच्चौरादिकस्य णिलुक् । ईदृशार्काः अर्चनादिसाधनभूताः स्तुतयः । अर्चतेः करणे घञ्, 'चजोः कुघिण्यतोः' इति कुत्वम् । यद्वा—अर्क स्तुतौ । बृहस्पतिमभ्यनावन् बृहस्पतिमभिष्टुवन्ति, तस्माद्वयमपि तं महानुभावं यजामहे इति । नौतेश्छान्दसो लुङ्, व्यत्ययेन शप्, धातोश्च वृद्धिः । बृहस्पतेरसुड्डुरावुक्तौ ॥

[10]तत्रैव याज्या—हंसैरिति त्रिष्टुप् ॥ हंसैः हननशीलैः ज्ञानशीलैः शुद्धात्मभिः तैरिव सखिभिः समानख्यानैः ऋत्विग्भिः यावदर्थं वदद्भिः अश्मन्मयानि व्याप्तिमदुदकवन्ति । अयस्मयादित्वेनाश्मन्नलोपाभावः नहना नहनानि बन्धनानि मेघान् व्यस्यन् विविधं क्षिपन् प्रेरयन् बृहस्पतिः अभिकनिक्रदत् अभितस्स्तनयन् । दाधर्त्यादौ निपात्यते, शतर्यनुनासिकलोपः, 'अभ्य-

उत प्रास्तौदुच्च विद्वाꣳ अगायत् ।
एन्द्र सानसिꣳ रयिम् ॥ ४३ ॥
सजित्वानꣳ सदासहम् । वर्षिष्ठ-

उदिति । च । विद्वान् । अगायत् । [11]एति । इन्द्र । सानसिम् । रयिम् ॥ ४३ ॥ सजित्वानमिति स-जित्वानम् । सदासहमिति सदा-सहम् । वर्षिष्ठम् ।

---

स्तानामादिः' इत्याद्युदात्तत्वम् । गाः अपः । उतशब्दश्चार्थे । प्रास्तौत् उच्च मेघसन्निधानादिना वृष्ट्याभिमुख्यवतीः कृतवान् उदगायच्च, उदक्षिपच्च अवर्षच्चेत्यर्थः । विद्वान् वर्षणोपायज्ञः । विद्वानेव प्रस्तोता उदगायदिति भावः । 'दीर्घादटि समानपादे' इति रुत्वम् ॥

[11]'इन्द्राय ज्येष्ठाय पुरोडाशमेकादशकपालं महाव्रीहीणाम्'* इत्यस्य पुरोनुवाक्या—एन्द्रेति गायत्री ॥ हे इन्द्र सानसिं संभजनीयम् । सनोतेरसिप्रत्ययः, वृद्धिश्च निपात्यते । रयिं धनं सजित्वानं सर्वानरीन् जेतुं शीलं यस्य । 'अन्येभ्योपि दृश्यते' इति जयतेः क्वनिप् । यद्वा—जेतृभिस्सहितम् । 'परादिश्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । सदासहं सर्वकालमरीणामभिभवितारं वर्षिष्ठं वृद्धतरं अतिप्रभूतं ईदृशं रयिमस्मभ्यं आभर । 'हृग्रहोः' इति भः । ऊतये रक्षणाय तर्पणाय वा । 'ऊतियूति' इत्यादिना क्तिन उदात्तत्वं निपात्यते ॥

---

*सं. १-८-१०.[1]

मूतये भर। प्र ससाहिषे पुरुहूत श-
त्रूञ्ज्येष्ठस्ते शुष्म इह रातिरस्तु।
इन्द्रा भर दक्षिणेना वसूनि पति-
स्सिन्धूनामसि रेवतीनाम्। त्वꣳ

ऊतये। भर। [12]प्रेति। ससाहिषे। पुरुहूतेति पु-
रु—हूत। शत्रून्। ज्येष्ठः। ते। शुष्मः। इह।
रातिः। अस्तु। इन्द्र। एति। भर। दक्षिणेन।
वसूनि। पतिः। सिन्धूनाम्। असि। रेवतीनाम्।
[13]त्वम्। सुतस्य। पीतये। सद्यः। वृद्धः। अजा-

---

[12]तत्रैव याज्या—प्र ससाहिषे इति त्रिष्टुप् ॥ हे इन्द्र पुरुहूत बहुभिराहूत शत्रून् प्रससाहिषे प्रकर्षेणाभिभवसि। छान्दसे लिटि 'तुजादीनाम्' इत्यभ्यासस्य दीर्घत्वम्। यद्वा—अभ्यासयोर्विपर्ययः। कस्मादेवमुच्यत इति चेत् ज्येष्ठः श्रेष्ठः प्रभूततमो वा ते तव शुष्मः बलम्। अत एव इहास्मिन् कर्मणि रातिः दानं हविषः तवैवास्तु त्वामेव यजामहे। 'मन्त्रे वृष' इति क्तिन उदात्तत्वम्। त्वं चास्मभ्यं दक्षिणेन हस्तेन वसूनि धनानि उदकादीनि आभर आहर। पूर्ववद्भत्वम्, 'अन्येषामपि दृश्यते' इति दक्षिणेत्यस्य दीर्घत्वम्। यस्मात्सिन्धूनां अपां रेवतीनां साधनभूतानां पतिः पाता त्वमसि। 'रयेर्मतुब्बहुलम्' इति संप्रसारणत्वम्। यस्मात्पतिरसि, तस्मात्त्वमेव देहीत्युच्यते; बलवत्त्वाच्च तव दातुं नास्ति प्रतिबन्ध इति॥

[13]अथैन्द्रे याज्यानुवाक्ये विकल्प्येते। तत्र पुरोनुवाक्या—

सुतस्य पीतये सद्यो वृद्धो अजायथाः । इन्द्र ज्यैष्ठ्याय सुक्रतो । भुवस्त्वमिन्द्र ब्रह्मणा महान्भुवो विश्वेषु सवनेषु यज्ञियः । भुवो नॄँश्च्यौत्नो

यथाः । इन्द्र । ज्यैष्ठ्याय । सुक्रतो इति सु-क्रतो । [14]भुवः । त्वम् । इन्द्र । ब्रह्मणा । महान् । भुवः । विश्वेषु । सवनेषु । यज्ञियः । भुवः । नॄन् । च्यौ-

---

त्वं सुतस्येति गायत्री ॥ हे इन्द्र त्वं सुतस्याभिषुतस्य सोमस्य पीतये सद्यो वृद्धो अजायथाः सर्वेषां ज्येष्ठभावाय [वः] तव भवति । हे सुक्रतो सुकर्मन् । तस्मात्सर्वज्येष्ठं त्वामेव यजामहे इति ॥

[14]अथ याज्या—भुव इति गायत्री ॥ हे इन्द्र त्वं कर्म, ब्रह्मणा परिबृढेन श्रोत्रेण वा महान् भुवः असि सर्वैस्स्तूयमनो वर्धसे इत्यर्थः स्तूयमानानि तेजांसि वर्धन्ते । भवतेर्लेटि शपो लुक्, लेटोडागमः, 'भूसुवोस्तिङि' इति गुणाभावः पादादित्वान्न निहन्यते । भवसि च विश्वेषु सवनेषु यज्ञेषु यज्ञियः यागार्हः । 'यज्ञर्त्विग्भ्याम्' इति घः । विश्वस्मिन् भरे संग्रामे नॄन् नृणां शत्रूणां च्यौत्नः च्यावयिता विनाशयिता । च्यवतेरौणादिकोत्नप्रत्ययः, वृद्धिश्चातोः । नृशब्दात् 'कर्तृकर्मणोः' इति षष्ठी व्यत्ययेन न प्रवर्तते । हे विश्वचर्षणे सर्वमनुष्यबद्धेऽपि मनुष्यास्त्वयि भवन्ति सत्त्वेन । यद्वा—विश्वस्य द्रष्टः, मन्त्रः मन्द्रः

विश्वस्मिन्भरे ज्येष्ठश्च मन्त्रः ॥४४॥
विश्वचर्षणे । मित्रस्य चर्षणी-
धृतश्श्रवो देवस्य सानसिम् । सत्यं
चित्रश्रवस्तमम् । मित्रो जनान्

त्नः । विश्वस्मिन् । भरे । ज्येष्ठः । च । मन्त्रः ॥४४॥
विश्वचर्षण इति विश्व—चर्षणे । [15]मित्रस्य ।
चर्षणिधृत इति चर्षणि—धृतः । श्रवः । देवस्य ।
सानसिम् । सत्यम् । चित्रश्रवस्तममिति चित्रश्र-
वः—तमम् । [16]मित्रः । जनान् । यातयति । प्रजा-

---

मननीयः स्तुतो वा । तस्मात्त्वमसि ज्येष्ठो भवसि च सर्वेषाम् । चशब्देन भुव इत्यनुकृष्यते ॥

[15]'मित्राय सत्यायाम्बानां चरुम्'* इत्यस्य मैत्रस्य पुरोनुवाक्या—मित्रस्येति गायत्री ॥ मित्रस्य देवस्य मित्रणादिकृतः चर्षणीधृतः मनुष्याणां धारयितुः श्रवः अन्नं यशो वा सानसिं सननीयं सर्वेषां, देयं वा सर्वेभ्यः। व्यत्ययेन 'स्वमोर्नपुंसकात्' इति लुक् ङि प्रवर्तते । सत्यमविनश्वरं चित्रश्रवस्तमं अतिशयेन चित्रं चायनीयं श्रवणमस्येति चायनीयः । यशस्तमं वा । तस्मात्त्वामेव यजामहे इति ॥

[16]तत्रैव याज्या—मित्र इति त्रिष्टुप् ॥ मित्रो देवः जनान् सर्वान् यातयति चेष्टयति प्रजानन् तत्तदधिकारानुरूपविधानज्ञः

---

*सं. १-८-१०.

यातयति प्रजानन्मित्रो दाधार पृ-
थिवीमुत द्याम् । मित्रः कृष्टीरनि-
मिषाऽभि चष्टे सत्याय हव्यं घृत-
वद्विधेम । प्र स मित्र मर्तो अस्तु

नन्निति प्र–जानन् । मित्रः । दाधार । पृथिवीम् ।
उत । द्याम् । मित्रः । कृष्टीः । अनिमिषेत्यनि–
मिषा । अभीति । चष्टे । सत्याय । हव्यम् । घृत-
वदिति घृत–वत् । विधेम । [17]प्रेति । सः । मित्र ।

---

मित्र एव पृथिवीमपि द्यामपि दाधार धारयितुं प्रभवति । ध्रियतेः छन्दसि लिटि तुजादित्वादभ्यासस्य दीर्घत्वम् । मित्र एव कृष्टीः मनुष्यान् विशेषेण अनिमिषा अनिमिषेणादरेणाभिचष्टे आभिमुख्येन पश्यति उपकरोतीत्यर्थः । दर्शनमुपकारः, तथाहि—'वक्तारो भवन्ति, सुपश्यति' इति । मिषतेर्भावे क्विप् । यद्वा—अनिमिषाः देवाः । इगुपधलक्षणः कः, 'सुपां सुलुक्' इति शस आकारः । मनुष्यान् देवांश्च विशेषेण पश्यतीति । तस्मात्तस्मै सत्यायामोघफलाय देवाय हव्यं चरुलक्षणं घृतवत् घृतसंयुक्तं विधेम कुर्मः ददाम इत्यर्थः । विदधातिर्दानकर्मा, विध विधाने, तौदादिकः ॥

[17]अथ तत्रैव याज्या विकल्प्यते—प्र स मित्रेति त्रिष्टुप् । 'प्रयस्वान्' इति प्रथमपादान्तः, 'त्वोतः' इति तृतीयपादान्तः ॥ हे मित्र स मर्तः मनुष्यः प्रयस्वान् अन्नवान् प्रास्तु प्रकर्षेण

प्रयंस्वान् यस्ते आदित्य शिक्षति
व्रतेन । न हंन्यते न जीयते त्वोतो
नैनमꣳहो अश्नोत्यन्तितो न दूरात् ।

मर्तः । अस्तु । प्रयंस्वान् । यः । ते । आदित्य ।
शिक्षति । व्रतेन । न । हन्यते । न । जीयते ।
त्वोतः । न । एनम् । अꣳहः । अश्नोति । अन्ति-

---

भवतु । क इत्याह—हे आदित्य अदितेः पुत्र यस्तव प्रीतेन कर्मणा यागादिना शिक्षति शक्तो भवितुमिच्छति अविघ्नेनान्वातिष्ठदित्यर्थः । शकेः 'सनि मीमा' इत्यादिना इस् । यद्वा—शिक्ष विद्योपादाने । व्रतेनेति, व्यत्ययेन द्वितीयाबहुवचनस्य स्थाने तृतीयैकवचनम् । व्रतानि शिक्षति पुनःपुनरभ्यस्यतीति । कस्मादेवमुच्यते इत्यत आह—न हन्यते न पीड्यते शत्रुभिः, व्याध्यादिभिश्च । न जीयते नाभिभूयते दारिद्र्यादिभिः । कः? त्वोतः त्वया ऊतो रक्षितः । पृषोदरादित्वादिष्टस्वररूपसिद्धिः, 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । किं च—नैनं त्वया रक्षितं अंहः पापं अश्नोति अन्तितः अन्तिके समीपे सन्तं न दूरात् सन्तम् । 'दूरान्तिकार्थेभ्यो द्वितीया च' इति पञ्चमी, 'कादिलोपो बहुलम्' इत्यन्तिकस्य लोपः, । अतस्त्वामेव परिचरेमेति ॥

यत् ॥ ४५ ॥ चिद्धि ते विशो यथा प्र देव वरुण व्रतम् । मिनीमसि द्यविद्यवि । यत्किं चेदं वरुण दैव्ये

तः । न । दूरात् । [18]यत् ॥ ४५ ॥ चित् । हि । ते । विशः । यथा । प्रेति । देव । वरुण । व्रतम् । मिनीमसि । द्यविद्यवीति द्यवि-द्यवि । [19]यत् । किम् ।

---

[18]'वरुणाय धर्मपतये यवमयं चरुम्'* इत्यस्य पुरोनुवाक्या— यच्चिदिति गायत्री ॥ हे देव वरुण यत्किंचित्ते त्वयि यद्व्रतं यागादिकं कर्म वयं विशः मनुष्यमात्रभूताः द्यविद्यवि दिनेदिने प्रमिनीमसि प्रतर्कयामः अविच्छेदेनानुष्ठातुमिच्छामः तत्तथा करोषि त्वमेव तस्मात् त्वामेव परिचरेमेति । मीञ् हिंसायां, क्र्यादिकः प्वादित्वाद्ध्रस्वत्वम्, 'इदन्तो मसि' प्रपूर्वोयं हिंसाभावे वर्तते । यथा प्रस्मरतीति स्मृत्यभावे, प्रतिष्ठतीति स्थित्यभावे, एवमिहापि द्रष्टव्यम् । यद्वा—यद्व्रतं प्रमिनीमः हिंसितवन्तः विशो यथा यथाजाता मनुष्याः उपतापादापूरयेमेति शेषः ॥

[19]तत्रैव याज्या—यत्किं चेदमिति जगती—हे वरुण देव दैव्ये देवप्रभवे जने । 'देवाद्यञञौ' इति यञ् । तद्विषये किंचित् स्वल्पमपि वा अभिद्रोहं अभितो द्रोहं मनुष्या वयं मनुष्यस्वभावात्संभाव्यमानप्रमादाः यदिदं चरामसि चरामः 'इद-

---

*सं. १-८-१०[1].

जनेऽभिद्रोहं मनुष्याश्चरामसि । अ-
चित्ती यत्तव धर्मा युयोपिम मा न-
स्तस्मादेनसो देव रीरिषः । कित-

च । इदम् । वरुण । दैव्ये । जने । अभिद्रोहमि-
त्यभि-द्रोहम् । मनुष्याः । चरामसि । अचित्ती ।
यत् । तव । धर्मा । युयोपिम । मा । नः । त-
स्मात् । एनसः । देव । रीरिषः । [20]कितवासः ।

---

न्तो मसि' । इदामिति क्रियाविशेषणम् । किंच—यत्तव धर्मा धर्माणि । 'शेश्छन्दसि' इति लोपः । अचित्ती अचित्त्या अज्ञानेन । 'सुपां सुलुक्' इति पूर्वसवर्णः । युयोपिम विनाशयामः । युपु विमोहने, ण्यन्ताच्छान्दसः आर्धधातुकत्वाण्णिलोपः । तस्मादेनसः पापादभिद्रोहलक्षणाद्धर्मविलोपलक्षणाच्च हेतुभूतान्नः अस्मान्मा रीरिषः, अपि तु अनुगृहाणैव ॥

[20]तत्रैव याज्याविकल्पः—कितवास इति त्रिष्टुप् ॥ हे देव वरुण कितवासः स्वार्थसाधनतत्पराः कितवेति प्रवर्तमाना ऋत्विजः यत् येन रिरिपुः नाशितवन्तोस्मान्न दीवि न तु देवने सम्यग्व्यवसिताः प्रवर्तन्ते । दिवेरौणादिकेऽसिचि छान्दसं दीर्घत्वम् । 'ऊडिदम्' इति सप्तम्युदात्ता । यद्वा—यच्च सत्यं बुद्धिपूर्वमेव कृतं पापमश्रद्धादिना । 'घ' इति पादपूरणः, प्रसिद्धौ वा । 'ऋचि मनु' इत्यादिना संहितायां दीर्घत्वम् । उत अपि च यत् न विद्म कृतमपि न जानीमः सौकर्म्यात् । सर्वा ता सर्वाणि तानि तस्माद्दुश्चरितानि । 'शेश्छन्दसि' इति

वासो यद्रिरिपुर्न दीवि यद्वां घा स-
त्यमुत यन्न विद्म । सर्वा ता विष्यं
शिथिरेवं देवाथां ते स्याम वरुण
प्रियासः ॥ ४६ ॥

यत् । रिरिपुः । न । दीवि । यत् । वा । घ । स-
त्यम् । उत । यत् । न । विद्म । सर्वा । ता । वी-
ति । स्य । शिथिरा । इव । देव । अर्थ । ते ।
स्याम । वरुण । प्रियासः ॥ ४६ ॥

सोमो गोषु मा रयिं मन्त्रो यच्छिथिरा सप्त चं ॥११॥

वि वा आ वायो इमे वै चित्तं चाग्निर्भूतानां
देवा वा अभ्यातानानृताषाड्राष्ट्रकामाय देविका
वास्पोष्पते त्वमंग्ने बृहदेकादश ॥ ११ ॥

वि वा एतस्येत्याह मृत्युर्गन्धर्वोवं रुन्धे मध्य-
तस्त्वमंग्ने बृहथ्षट्चत्वारिꣳशत् ॥ ४६ ॥

वि वा एतस्यं प्रियासः ॥

---

लोपः । विष्य विमुक्तबन्धनानि कुरु क्षमस्वेति यावत् । 'उप-सर्गात्सुनोति' इत्यादिना स्यतेष्षत्वम् । शिथिरा शिथिलानीव सुमोचनानीव विमुञ्च । कपिलकादित्वाल्लत्वविकल्पः । अथानन्तरं विमुक्तैनसो वयं तव प्रियासः इष्टास्स्याम भवेम । 'आज्जसेरसुक्', 'निपातस्य च' इति संहितायां अथशब्दस्य दीर्घत्वम् ॥

इति भट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये
तृतीयकाण्डे चतुर्थप्रपाठके एकादशोनुवाकः
समाप्तश्च प्रपाठकः

पूर्णा पश्चादुत पूर्णा पुरस्तादुन्मध्यतः पौर्णमासी जिगाय । तस्यां देवा अधि संवसन्त उत्तमे नाक इह

[1]पूर्णा । पश्चात् । उत । पूर्णा । पुरस्तात् । उदिति । मध्यतः । पौर्णमासीति पौर्ण-मासी । जिगाय । तस्याम् । देवाः । अधीति । संवसन्त इति सं-वसन्तः । उत्तम इत्युत्-तमे । नाके ।

---

अथ पञ्चमप्रपाठकः.

[1]दर्शपूर्णमासावारभमाणस्य द्वौ सारस्वतौ होमौ स्तः, तयोर्द्वे अनुवाक्ये द्वे याज्ये । तत्र प्रथमस्यानुवाक्या—पूर्णेति त्रिष्टुप् ॥ पूर्णा पूरिता पूर्णचन्द्रसंबन्धात् पञ्चदशी तिथिः (पूर्णेति स्थितिः) पूर्णेत्युच्यते । सा पश्चात् तिथेरन्ते पूर्णा, उत अपि च पुरस्तादादौ च पूर्णा, मध्यतश्च पूर्णा । तस्यां हि तिथौ सर्वसवितृकरणामनुप्रवेशेन भासमानाशेषमण्डलश्चन्द्रो भवति । यद्यपि परमार्थतः तिथ्यन्ते सर्वात्मना चन्द्रः पूर्यते । तथाप्युपलब्ध्यभिप्रायेणैवमुक्तं, आरम्भात्प्रभृति तस्यां मण्डलं पूर्णमुपलभामहे न तिथ्यन्तरवत् न्यूनमुपलभ्यते । 'वा दान्तशान्त' इति ण्यन्तस्य पूर्णेति निपात्यते । एवं त्रिष्वपि कालेषु पूर्णश्चन्द्रोस्यामिति पूर्णमासी तिथिः । मसी परिमाणे, ण्यन्तात्क्विप् । मित्रः परिमितिहेतुः । मिमीतेर्वा असुनि माः, पूर्णश्चासौ माश्च

**मा॑दयन्ताम् । यत्ते॑ दे॒वा अद॑धुर्भाग॒-**
**धेय॒मम॑ावास्ये सं॒वस॑न्तो मह्ति॒त्वा ।**

**इह । मा॒द॒यन्ता॒म् । [2]यत् । ते॒ । दे॒वाः । अद॑धुः । भा॒ग॒धे॒य॒मिति॑ भाग—धेय॑म् । अमा॑वास्य॒ इत्यमा॑—वा॒स्ये॒ । सं॒वस॑न्त॒ इति॑ सं—वस॑न्तः । म॒हि॒त्वेति॑ महि—त्वा । सा । नः॒ । य॒ज्ञम् । पि॒पृ॒हि॒ । वि॒श्व॒-**

---

पूर्णमाः, तस्येयं पौर्णमासी पञ्चदशी । यद्वा—पूर्णो मा अस्मिन्निति पूर्णमासः पर्वान्तः कर्मविशेषो वा । अच्समासान्तः । यद्वा—करणे घञ्, मासः चन्द्रः, तत्सम्बन्धिनी पौर्णमासी । उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम् । सा उज्जिगाय उज्जयत्यन्याः तिथीः । उत्कृष्टा भवतीति यावत् । छान्दसे लिटि 'सन् लिटोर्जेः' इति कुत्वम् । तस्यां तादृश्यां देवा अधिसंवसन्त एकीभूय वर्तमाना उत्तमे उन्नततमे नाके सुखैकरूपे इहास्मिन् लोके मादयन्ताम् । मद तृप्तियोगे, चौरादिकः, उत्तमशब्द उञ्छादिरन्तोदात्तः ॥

[2]अथ द्वितीयस्य याज्या—यत्ते इति त्रिष्टुप् ॥ हे अमावास्ये ते तव देवाः भागधेयं इमं होमं यत् यस्मात् अदधुः दत्तवन्तः । अमा सह सूर्याचन्द्रमसावस्यां संवसत इत्यमावास्या । 'अमावस्यदन्यतरस्याम्' इति निपात्यते, पादादित्वादामन्त्रिताद्युदात्तत्वम् । देवा विशेष्यन्ते—संवसन्तः संभूयैकत्र वसन्तमहित्वा तव माहात्म्येन । यस्मात्तव भागमिमं होममदधुः, तस्मात्

सा नो॑ य॒ज्ञं पि॑पृहि विश्ववारे र॒यिं नो॑ धेहि सुभगे सु॒वीर॑म् । नि॒वेश॑नी सं॒गम॑नी॒ वसू॑ना॒ं विश्वा॑ रू॒पाणि॒ वसू॑न्यावे॒शय॑न्ती । स॒ह॒स्र॒पो॒ष॒ꣳ सु॒भगा॒

वा॒र॒ इति॑ विश्व-वा॒रे॒ । र॒यिम् । न॒ः । धे॒हि॒ । सु॒भ॒ग॒ इति॑ सु-भ॒गे॒ । सु॒वीर॒मिति॑ सु-वीर॑म् । [3]नि॒वे॒श॒नीति॑ नि-वेश॑नी । स॒ङ्ग॒म॒नीति॑ सं-गम॑नी । वसू॑नाम् । विश्वा॑ । रू॒पाणि॑ । वसू॑नि । आ॒वे॒श॒य॒न्तीत्या॑-वे॒शय॑न्ती । स॒ह॒स्र॒पो॒षमिति॑ सहस्र-पो॒-

हे विश्ववारे विश्वकालवति विश्वैर्वा वरणीये सा तादृशी देवैर्दत्तभागा नोस्माकमिमं यज्ञं होमात्मकं पिपृहि पूरय कामैः, पालय वा । पॄ पालनपूरणयोः, शपः श्लुः, धातोर्ह्रस्वत्वम्, अभ्यासस्य चेत्वम् । यद्वा—पृ प्रीतौ, प्रीत्या गृहाणेत्यर्थः । महित्वशब्दात्तृतीयैकवचनस्याजादेशः । किंच—हे सुभगे कल्याणधने अनेन हविषा प्रीता त्वं नः अस्मभ्यं रयिं धनं सुवीरं कल्याणवीरयुक्तं धेहि धनं देहीति । 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम् ॥

[3]अथ द्वितीयस्यानुवाक्या—निवेशनीति त्रिष्टुप् ॥ निवेशनी वसूनाम्, निविशते वसूनि यस्यां तादृशी, संगमनी संगच्छन्ती वसून्यनया तादृशशीलया विश्वानि च रूपाणि यानि रूपवन्ति वसूनि तानि आवेशयन्ती अस्मात्प्रत्युत्कर्षन्ती सहस्रपोषं

ररा॒णा सा न॒ आ ग॒न्वर्च॑सा ॥१॥
सं॒वि॒दा॒ना । अ॒ग्नीषो॑मौ प्र॒थ॒मौ वी॒-
र्ये॑ण॒ वसू॒न्रु॒द्रानादि॒त्यानि॒ह जिन्वत-
म् । मा॒ध्यꣳ हि पौर्ण॑मा॒सं जु॒षेथा॑ं ब्र-

षम् । सु॒भगेति॑ सु–भगा॑ । ररा॒णा । सा । न॒ः । एति॑ । ग॒न्न् । वर्च॑सा ॥ १ ॥ सं॒वि॒दा॒नेति॑ सं–वि॒-दा॒ना । [4]अ॒ग्नीषो॑मा॒वित्य॒ग्नी–सो॒मौ । प्र॒थ॒मौ । वी॒-र्ये॑ण । वसू॒न् । रु॒द्रान् । आ॒दि॒त्यान् । इ॒ह । जि॒-न्व॒त॒म् । मा॒ध्यम् । हि । पौ॒र्ण॒मा॒समिति॒ पौर्ण–मा॒सम् । जु॒षेथा॒म् । ब्रह्म॑णा । वृ॒द्धौ । सु॒कृ॒तेनेति॑

सहस्रपुष्टियुक्तं यथा तथा रराण ददातु । रातेर्व्यत्ययेनात्मनेपदम्, शपः श्लुः । सुभगा शोभनधना सा तादृशी सती अमावास्या नोस्मान् आगन् आगच्छतु वर्चसा दीप्त्या उपलक्षिता संविदाना सम्यग्जानती । 'समो गमृच्छि' इत्यात्मनेपदम्, गमेश्छान्दसे लङि शपो लुक्, 'मो नो धातोः' ॥

[4]अथ प्रथमस्य याज्या—अग्नीषोमावित्यतिशक्करी पञ्चपदा ॥ हे अग्नीषोमौ युवां प्रथमौ प्रधानौ वीर्येणात्मीयेन बलेन वसून् रुद्रानादित्यान् च इहास्मिन् कर्मणि जिन्वतं प्रीणयतम् । जिवि प्रीणने, इदित्वान्नुम् । माध्यं मध्यभावं सर्वदेवसाधारणं मध्यस्थमित्यर्थः । पौर्णमासं पौर्णमास्यां भवमिदं हविः जुषेथां ततो

ह्मणा वृद्धौ सुकृतेन सातावथास्म-
भ्यꣳ सहवीराꣳ रयिं नि यच्छतम्।
आदित्याश्चाङ्गिरसश्चाग्नीनाऽदधत ते
दर्शपूर्णमासौ प्रैप्सन्तेषामङ्गिरसां
निरुप्तꣳ हविरासीदथादित्या एतौ
होमावपश्यन्तावजुहवुस्ततो वै ते

सु–कृतेन । सातौ । अथ । अस्मभ्यमित्यस्म–भ्यम् । सहवीरामिति सह–वीराम् । रयिम् । नीति । यच्छतम् । [5]आदित्याः । च । अङ्गिरसः । च । अग्नीन् । एति । अदधत । ते । दर्शपूर्णमासाविति दर्श–पूर्णमासौ । प्रेति । ऐप्सन् । तेषाम् । अङ्गिरसाम् । निरुप्तमिति निः–उप्तम् । हविः । आसीत् । अथ । आदित्याः । एतौ । होमौ । अपश्यन् । तौ । अजुहवुः । ततः । वै । ते।

---

ब्रह्मणाऽनेन अन्नेन वृद्धौ सुकृतेन शोभनकर्मणा सातौ संसक्तौ। 'सूपमानात्क्तः' इति सुकृतशब्दोन्तोदात्तः । अथानन्तरमस्मभ्यं सहवीरां विक्रान्तपुरुषसहितां रयिं धनं नियच्छतं नियमेन दत्तम् ॥

[5]अथैनयोर्होमयोर्ब्राह्मणम्—आदित्याश्चाङ्गिरसश्चाग्नीनादधत, दर्शपूर्णमासौ प्राप्तुं प्रारब्धुमैच्छन् । 'आपूज्ञप्यृधाम्' इतीत्वम् ।

दर्शपूर्णमासौ ॥ २ ॥ पूर्वे आऽलं-
भन्त दर्शपूर्णमासावालभमान एतौ
होमौ पुरस्ताज्जुहुयात्साक्षादेव दर्श-
पूर्णमासावा लभते ब्रह्मवादिनो व-

दर्शपूर्णमासाविति दर्श—पूर्णमासौ ॥२॥ पूर्वे । एति । अलभन्त । दर्शपूर्णमासाविति दर्श—पूर्ण-मासौ । आलभमान इत्या—लभमानः । एतौ । होमौ । पुरस्तात् । जुहुयात् । साक्षादिति स—अक्षात् । एव । दर्शपूर्णमासाविति दर्श—पूर्ण-मासौ । एति । लभते । [6]ब्रह्मवादिन इति ब्रह्म—

---

तेषां मध्ये अङ्गिरसां निरुप्तमासीद्धविः । अहुत्वैव सारस्वतौ होमौ हविरुप्तवन्तः । दर्शपूर्णमासस्थानीयत्वादेतयोः होमयोर्दर्शपूर्णमास-शब्दौ कर्मप्रवचनौ । तत्र दृशिरयं ज्ञानमात्रे वर्तते । अथा-दृष्टार्थः 'पश्यार्थैश्चानालोचने' इत्यालोचनेन न गृह्यते, अस्ति चेति तु केवलं ज्ञायते । अधिकरणे सन्तन्यते दिनेदिने चा-प्यते तं सन्ततमुत्तरार्धमासः आत्मलाभत्वात्तदनुविधायिनोः तदपेक्षे आनुलोम्यप्रातिलोम्ये । विपर्ययलक्षणेत्येके । पूर्णमासो व्याख्यातः ॥

[6]ब्रह्मवादिन इत्यादि ॥ तुशब्दोनुलोमविदन्येभ्यो व्यावर्तयति अत्रायं यज्ञात्मनः औत्तरस्मादर्धमासात् प्रतिपत्प्रभृति सन्ततं सन्त-न्यते दिनेदिने चाप्यते तं सन्ततमुत्तरार्धमासे आगते आलभते

दन्ति स त्वै दर्शपूर्णमासावा लं-
भेत य एनयोरनुलोमं च प्रतिलोमं
च विद्यादित्यमावास्यांया ऊर्ध्वं त-
दनुलोमं पौर्णमास्यै प्रतीचीनं तत्प्रं-
तिलोमं यत्पौर्णमासीं पूर्वामालभेत

वादिनः । वदन्ति । सः । तु । वै । दर्शपूर्णमा-
साविति दर्श-पूर्णमासौ । एति । लभेत । यः ।
एनयोः । अनुलोममित्यनु-लोमम् । च । प्रति-
लोममिति प्रति-लोमम् । च । विद्यात् । इति ।
अमावास्यांया इत्यमा-वास्यांयाः । ऊर्ध्वम् ।
तत् । अनुलोममित्यनु-लोमम् । पौर्णमास्या इति
पौर्ण-मास्यै । प्रतीचीनम् । तत् । प्रतिलोममिति
प्रति-लोमम् । यत् । पौर्णमासीमिति पौर्ण-मा-

---

न विकरोति । ततस्तं कालेकाले आगते यजते तत्र मध्यात् पूर्वपर्वसन्धौ भूयिष्ठस्योत्तरार्धमासस्य तस्मिन्नह्नि यागः कर्तव्यः, अन्यथोत्तरेद्युः । एतयोश्चन्द्राधीनात्मलाभत्वात्तदनुविधायिनोः तदपेक्षे आनुलोम्यप्रातिलोम्ये । तत्रामावास्यायाः परस्तादूर्ध्वं उपर्युपर्युपची-यमानस्वस्वरूपं चन्द्रस्यावस्थानं, यज्ञस्य तु विपरीतं तत्प्रातिलोमं भवति, ततश्च यदि पौर्णमासीं पूर्वामालभेत प्रतिलोममेनावालभेत प्राप्नुयात् तदानीं हि चन्द्रोपचीयते यज्ञ उपचीयते इति प्रतिलो-

प्रतिलोममेनावा लभेतामुमपक्षीय-
माणमन्वप ॥ ३ ॥ क्षीयेत सारस्व-
तौ होमौ पुरस्ताज्जुहुयादमावास्यां

सीम् । पूर्वाम् । आलभेतेत्या—लभेत । प्रतिलो-
ममिति प्रति—लोमम् । एनौ । एति । लभेत ।
अमुम् । अपक्षीयमाणमित्यप—क्षीयमाणम् । अ-
नु । अपेति ॥ ३ ॥ क्षीयेत । सारस्वतौ । होमौ ।
पुरस्तात् । जुहुयात् । अमावास्येत्यमा—वास्या ।
वै । सरस्वती । अनुलोममित्यनु—लोमम् । एव ।

---

मत्वम् । ततश्चामुं चन्द्रमपक्षीयमाणमनु यज्ञोप्यपक्षीयेत । अमावास्योपक्रमे तु नायं दोषः, तदानीं हि चन्द्रोप्युपचीयते यज्ञोपीत्यनुलोमत्वम् । 'अच्प्रत्यन्ववपूर्वात्' इत्युभयत्राच्प्रत्ययस्समासान्तः । तर्ह्यमावास्यैव पूर्वमारभ्यताम् । नैवं शक्यम् । यथोक्तमाचार्येण— 'अथेमौ दर्शपूर्णमासौ पौर्णमास्युपक्रमावमावास्यासंस्थावाचार्या ब्रुवते । तत्रोदाहरन्ति—ऊर्ध्वं मध्यरात्रात्पौर्णमास्याः चन्द्रमाः पूर्यते स एतं चापररात्रं पूर्णो भवति सर्वं चाहरुत्तरस्याश्च रात्रेरा मध्यरात्रात् । अथामावास्याया उपवसथीयेऽह्नि ऊर्ध्वं मध्याह्नरात्राच्चन्द्रमसमादित्यौ रेतस एतं चापराह्णे उपरब्धो भवति सर्वां च रात्रिमुत्तरस्य चाह्न आ मध्यन्दिनात् एवं सन्धिमभियजेतेति । रात्रिर्हि पौर्णमास्यां संशुद्धमाभाति अहरमावास्यायां द्वे पौर्ण-

वै सरस्वत्यनुलोममेवैनावा लभतेऽ-
मुमाप्यायमानमन्वा प्यायत आग्ना-
वैष्णवमेकादशकपालं पुरस्तान्निर्व-
पेत्सरस्वत्यै चरुꣳ सरस्वते द्वादश-
कपालं यदाग्नेयो भवत्यग्निर्वै यज्ञ-

एनौ । एति । लभते । अमुम् । आप्यायमानमि-
त्या-प्यायमानम् । अनु । एति । प्यायते । [7]आ-
ग्नावैष्णवमित्याग्ना-वैष्णवम् । एकादशकपालमि-
त्येकादश-कपालम् । पुरस्तात् । निरिति । वपेत् ।
सरस्वत्यै । चरुम् । सरस्वते । द्वादशकपालमिति
द्वादश-कपालम् । यत् । आग्नेयः । भवति । अ-
ग्निः । वै । यज्ञमुखमिति यज्ञ-मुखम् । यज्ञमुख-

---

मास्यौ द्वे अमावास्ये पूर्वां पूर्वां पौर्णमासीमुत्तरामुत्तराममावास्यां, या पूर्वा पौर्णमासी साऽनुमतिः, योत्तरा सा राका, या पूर्वाऽमावास्या सा सिनीवाली, योत्तरा सा कुहूरित्येवमुपक्रमाणि च कर्माणि शुक्लादयः चार्धमासाः' इति । एवं पौर्णमास्युपक्रमत्वे प्रातिलोम्यं प्रसक्तं तत्परिहारार्थमाह—सारस्वतावित्यादि । अमावास्या अमावास्यास्थानीया । सरस्वत्याः प्रथमयागात्पौर्णमास्युपक्रमदोषाप्रसंगः ॥

[7]आग्नावैष्णवमित्यादि ॥ साक्षादारभते इति । अन्वारम्भणी-

मुखं यज्ञमुखमेवर्धिं पुरस्ताद्धत्ते य-
द्वैष्णवो भवति यज्ञो वै विष्णुर्यज्ञ-
मेवारभ्य प्र तनुते सरस्वत्यै चरुर्भ-
वति सरस्वते द्वादशकपालोमावा-
स्या वै सरस्वती पूर्णमासस्सरस्वा-
न्तावेव साक्षादा रभत ऋध्नोत्याभ्यां
द्वादशकपालस्सरस्वते भवति मिथु-

---

मिति यज्ञ–मुखम् । एव । ऋद्धिम् । पुरस्तात् । धत्ते । यत् । वैष्णवः । भवति । यज्ञः । वै । वि-ष्णुः । यज्ञम् । एव । आरभ्येत्या–रभ्य । प्रेति । तनुते । सरस्वत्यै । चरुः । भवति । सरस्वते । द्वादशकपाल इति द्वादश–कपालः । अमावास्ये-त्यमा–वास्या । वै । सरस्वती । पूर्णमास इति पूर्ण–मासः । सरस्वान् । तौ । एव । साक्षादिति स–अक्षात् । एति । रभते । ऋध्नोति । आभ्याम् । द्वादशकपाल इति द्वादश–कपालः । सरस्वते । भवति । मिथुनत्वायेति मिथुन–त्वाय । प्रजात्या

नत्वाय प्रजात्यै मिथुनौ गावौ दक्षि-
णा समृद्ध्यै ॥ ४ ॥
ऋषयो वा इन्द्रं प्रत्यक्षं नापश्यन्तं
वसिष्ठः प्रत्यक्षमपश्यत्सोऽब्रवीद्ब्राह्मणं

इति प्र-जात्यै । मिथुनौ । गावौ । दक्षिणा । स-
मृध्या इति सं-ऋध्यै ॥ ४ ॥

वर्चसा वै ते दर्शपूर्णमासावपं तनुते
सरस्वत्यै पञ्चविंशतिश्च ॥ १ ॥

[1]ऋषयः । वै । इन्द्रम् । प्रत्यक्षमिति प्रति-अ-
क्षम् । न । अपश्यन् । तम् । वसिष्ठः । प्रत्यक्ष-
मिति प्रति-अक्षम् । अपश्यत् । सः । अब्रवीत् ।
ब्राह्मणम् । ते । वक्ष्यामि । यथा । त्वत्पुरोहिता

---

येयमिति त्रीण्येतानि हवींषि । मिथुनौ गावौ स्त्रीपुंसौ । गतमन्यत् ॥
इति तृतीये पञ्चमे प्रथमोऽनुवाकः.

---

[1]ऋषयो वा इत्यादि ॥ ब्रह्मैव ब्राह्मणम् । जातावेकवचनम् ।
ब्राह्मणमन्त्रांस्तव वक्ष्यामीति । यद्वा—ब्रह्मत्वसाधनं ब्राह्मणं ज्ञानं

ते वक्ष्यामि यथा त्वत्पुरोहिताः प्र-
जाः प्रं जनिष्यन्तेऽथ मेतंरेभ्य ऋ-
षिंभ्यो मा प्र वोंच इति तस्मां ए-
तान्स्तोमंभागानब्रवीत्ततो वसिंष्ठपु-

इति त्वत्–पुरोहिताः । प्रजा इतिं प्र–जाः । प्रज-
निष्यन्त इतिं प्र–जनिष्यन्तें । अथं । मा । इतं-
रेभ्यः । ऋषिंभ्य इत्यृषिं–भ्यः । मा । प्रेतिं । वो-
चः । इतिं । तस्मैं । एतान् । स्तोमंभागानिति
स्तोमं–भागान् । अब्रवीत् । ततः । वसिंष्ठपुरो-

---

तद्वक्ष्यामि । शान्तिकादिकर्तृत्वसामान्यात् पुरोहितशब्देन ब्रह्मोच्यते । शान्तिकादिषु पुरस्तान्निधीयते स्थाप्यते इति । त्वं पुरोहितो ब्रह्म यासां तादृश्यः प्रजाः प्रजनिष्यन्ते येन तादृशं तव ब्राह्मणं ब्रह्मत्वप्रदं ज्ञानं मन्त्रजातं वा ते वक्ष्यामि । एतत्त्वमितरेभ्यः ऋषिभ्यो मा प्रवोचः इति वसिष्ठमब्रवीदिन्द्रः । उक्त्वा च तस्मै वसिष्ठाय एतान् स्तोमभागान् 'रश्मिरसि'* इत्यादीन् अब्रवीत् । ततो वसिष्ठपुरोहिताः वासिष्ठकाः प्रजः प्राजायन्त । तस्माद्वासिष्ठो ब्रह्मा कार्यः स्तोमभागान्विद्यादिति सामर्थ्याद्गम्यते तेन प्रैव जायते यजमानः । वसिष्ठशब्दादृष्यण् । अत्रायं प्रयोगक्रमः—यत्राह ब्रह्मन् स्तोष्यामः प्रशास्तरिति तद्ब्रह्म प्रसौति 'देव सवितः'† इत्येतां प्रतिपदमुक्त्वा 'रश्मिरसि क्षयाय त्वा क्षयं जिन्व'* इति एतस्यानुवाकस्य एकैकमु-

---

*सं ४-४-१.[1] †सं १-७-७,[1]

रोहिताः प्रजाः प्राजायन्त तस्मा-
द्वासिष्ठो ब्रह्मा कार्यः प्रैव जायते
रश्मिरसि क्षयाय त्वा क्षयं जिन्वे-
ति ॥ ५ ॥ आह देवा वै क्षयो देवे-
भ्य एव यज्ञं प्राह प्रेतिरसि धर्माय

हिता इति वसिष्ठ–पुरोहिताः । प्रजा इति प्र–जाः । प्रेति । अजायन्त । तस्मात् । वासिष्ठः । ब्रह्मा । कार्यः । प्रेति । एव । जायते । [2]रश्मिः । असि । क्षयाय । त्वा । क्षयम् । जिन्व । इति ॥ ५ ॥ आह । देवाः । वै । क्षयः । देवेभ्यः । एव । यज्ञम् । प्रेति । आह । [3]प्रेतिरिति प्र–इतिः । असि । ध-

पादाय प्रसौति । एवमेव प्रसवद्वादशभिः अग्निष्टोमं प्रसौति, त्रयोदशभिरत्यग्निष्टोमं पञ्चदशभिरुक्थ्यं, षोडशभिष्षोडशिनम्, सप्तदशभिर्वाजपेयम्, एकोनत्रिंशताऽतिरात्रम्, सर्वैरप्तोर्यामम् । यत्र राथन्तराय सन्धये सर्पन्ति तदाह—'वसुकोसि वेषश्रिरसि वस्यष्टिरसि'* इति । एवमेव प्रसौत्याप्तोर्यामादिति । यज्ञस्य स्तोमानां तेजोभागाः स्तोमभागाः । उक्तं च—'बृहस्पतिर्वा एतद्यज्ञस्य तेजस्समभरद्यत्स्तोमभागाः'† इति । दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम् ॥

[2—5]इदानीं मन्त्रपदानि व्याचष्टे—रश्मिरसीत्यादि ॥ क्षयति

*सं. ४-४-१. †सं ५-३-५.

त्वा धर्मं जिन्वेत्याह मनुष्या वै ध-
र्मो मनुष्येभ्य एव यज्ञं प्राहान्विति-
रसि दिवे त्वा दिवं जिन्वेत्याहैभ्य
एव लोकेभ्यो यज्ञं प्राह विष्टम्भोसि
वृष्ट्यै त्वा वृष्टिं जिन्वेत्याह वृष्टिमे-
वाव ॥ ६ ॥ रुन्धे प्रवाऽस्यनुवाऽसी-

मीय । त्वा । धर्मम् । जिन्व । इति । आह ।
मनुष्याः । वै । धर्मः । मनुष्येभ्यः । एव । यज्ञम् ।
प्रेति । आह । [4]अन्वितिरित्यनु–इतिः । असि ।
दिवे । त्वा । दिवम् । जिन्व । इति । आह । एभ्यः ।
एव । लोकेभ्यः । यज्ञम् । प्रेति । आह । [5]विष्टम्भ
इति वि–स्तम्भः । असि । वृष्ट्यै । त्वा । वृष्टिम् ।
जिन्व । इति । आह । वृष्टिम् । एव । अवेति ॥६॥
रुन्धे । [6]प्रवेति प्र–वा । असि । [7] अनुवेत्यनु–

---

निवसत्यास्मिन्विश्वमिति गतम् ॥

[6–7]प्रवाऽस्यनुवाऽसीति द्वयोर्ग्रहणम् ॥

त्याह मिथुनत्वायोशिगसि वसुभ्य-
स्त्वा वसूञ्जिन्वेत्याहाष्टौ वसव एका-
दश रुद्रा द्वादशादित्या एतावन्तो वै
देवास्तेभ्य एव यज्ञं प्राहौजोसि पि-
तृभ्यस्त्वा पितृञ्जिन्वेत्याह देवानेव
पितृननु सं तनोति तन्तुरसि प्रजा-
भ्यस्त्वा प्रजा जिन्व ॥ ७ ॥ इत्याह

वा । असि । इति । आह । मिथुनत्वायेति मिथुन-त्वाय । [8]उशिक् । असि । वसुभ्य इति वसु-भ्यः । त्वा । वसून् । जिन्व । इति । आह । अष्टौ । वसवः । एकादश । रुद्राः । द्वादश । आदित्याः । एतावन्तः । वै । देवाः । तेभ्यः । एव । यज्ञम् । प्रेति । आह । [9]ओजः । असि । पितृभ्य इति पितृ-भ्यः । त्वा । पितृन् । जिन्व । इति । आह । देवान् । एव । पितृन् । अनु । समिति । तनोति । [10]तन्तुः । असि । प्रजाभ्य इति प्र-जाभ्यः । त्वा । प्रजा इति प्र-जाः । जिन्व ॥ ७ ॥ इति । आह ।

---

[8—10]उशिगसीत्यादीनां त्रयाणां वस्वादिमन्त्राणां ग्रहणम् । तदाह—अष्टौ वसव इत्यादि । देवानेवेत्यादि । स्थापयति ॥

पितॄनेव प्रजा अनु सं तनोति पृ-
तनाषाडसि पशुभ्यस्त्वा पशूञ्जि-
न्वेत्याह प्रजा एव पशूननु सं त-
नोति रेवदस्योषधीभ्यस्त्वौषधीर्जि-
न्वेत्याहौषधीष्वेव पशून्प्रतिष्ठापय-
त्यभिजिदसि युक्तग्रावेन्द्राय त्वेन्द्रं

पितॄन् । एव । प्रजा इति प्र—जाः । अनु । सम्-इति । तनोति । [11]पृतनाषाट् । असि । पशुभ्य इति पशु—भ्यः । त्वा । पशून् । जिन्व । इति । आह । प्रजा इति प्र—जाः । एव । पशून् । अनु । सम्-इति । तनोति । [12]रेवत् । असि । ओषधीभ्य इत्योषधि—भ्यः । त्वा । ओषधीः । जिन्व । इति । आह । ओषधीषु । एव । पशून् । प्रतीति । स्थापयति । [13]अभिजिदित्यभि—जित् । असि । युक्तग्रावेति युक्त—ग्रावा । इन्द्राय । त्वा । इन्द्रम् ।

---

[11]प्रजा एवेति ॥ पितॄणामनन्तरं प्रजास्सन्तनोति, प्रजानां पशून् सन्तनोति ॥

[12—13]रेवदसीत्यादि ॥ गतम् ॥

जिन्वेत्याहाभिजित्या अधिपतिरसि प्राणाय त्वा प्राणम् ॥ ८ ॥ जिन्वेत्याह प्रजास्वेव प्राणान्दधाति त्रिवृदसि प्रवृदसीत्याह मिथुनत्वाय संरोहोसि नीरोहोसीत्याह प्रजात्यै वसुकोसि वेषश्रिरसि व-

जिन्व । इति । आह । अभिजित्या इत्यभि-जित्यै । [14]अधिपतिरित्यधि-पतिः । असि । प्राणायेति प्र-अनाय । त्वा । प्राणमिति प्र-अनम् ॥८॥ जिन्व । इति । आह । प्रजास्विति प्र-जासु । एव । प्राणानिति प्र-अनान् । दधाति । [15]त्रिवृदिति त्रि-वृत् । असि । [16]प्रवृदिति प्र-वृत् । असि । इति । आह । मिथुनत्वायेति मिथुन-त्वाय । [17]संरोह इति सं-रोहः । असि । [18]नीरोह इति निः-रोहः । असि । इति । आह । प्रजात्या इति प्र-जात्यै । [19]वसुकः । असि । [20]वेषश्रिरिति वेष-

[14-16]अधिपतिरसीत्यादि ॥ चतुर्णां प्राणादिमन्त्राणां ग्रहणम् । प्राणानिति । प्राणापानचक्षुश्श्रोत्राणि । मिथुनत्वायेति 'तासु त्रिवृदसीत्येव मिथुनमदधात्'* इति दर्शनात् ॥

[17-21]संरोहोसीत्यादीनां चतुर्णां प्रजननमन्त्राणां ग्रहणम् । 'ता-

* सं. ५-३-६.

स्यांष्टिरसीत्यांह प्रतिष्ठित्यै ॥ १ ॥
अग्निनां देवेन पृतना जयामि गा-
यत्रेण छन्दंसा त्रिवृता स्तोमेन रथं-
तरेण साम्नां वषट्कारेण वज्रेण पूर्व-

श्रिः । असि । [21]वस्यंष्टिः । असि । इतिं । आह ।
प्रतिंष्ठित्या इति प्रतिं—स्थित्यै ॥ १ ॥

जिन्वेत्यवं प्रजा जिन्व प्राणं त्रिꣳशच्च ॥२॥

[1]अग्निनां । देवेनं । पृतनाः । जयामि । गाय-
त्रेणं । छन्दंसा । त्रिवृतेतिं त्रि—वृतां । स्तोमेन ।
रथन्तरेणेतिं रथं—तरेणं । साम्नां । वषट्कारेणेतिं व-
षट्—कारेणं । वज्रेण । पूर्वजानितिं पूर्व—जान् ।

---

रुसंरोहोसि नीरोहोसीत्येव प्राजनयत्' * इति दर्शनात् । प्रतिष्ठित्या इति । 'प्रजा एव प्रजाता एषु लोकेषु प्रतिष्ठापयति'* इति । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् ॥

इति तृतीये पञ्चमे द्वितीयोनुवाकः

---

[1]अग्निना देवेनेत्याद्या अभिचारादिः । संवत्सरमेतैः क्रमैः क्रमेत—अग्निना देवेन पृतनाः परसेनाः जयामि अभिभवामि गायत्रेण छन्दसा । गायत्र्येव गायत्रं, 'नपुंसके स्वार्थ उपसंख्या-

---

* सं ५-३-६.

जान्भ्रातृ॑व्यान॒धरा॑न्पादया॒म्यवै॑ना-
न्बाधे॒ प्रत्ये॑नान्नुदे॒ऽस्मिन्क्षये॒ऽस्मि-
न्भू॑मिल्लो॒के यो॑ऽस्मान्द्वेष्टि॒ यं च॑ व॒-
यं द्वि॒ष्मो विष्णोः॒ क्रमे॒णात्ये॑नान्का-

भ्रातृ॑व्यान् । अ॒धरा॑न् । पा॒द॒या॒मि॒ । अवेति॑ । ए॒-
ना॒न् । बा॒धे॒ । प्रतीति॑ । ए॒ना॒न् । नु॒दे॒ । अ॒स्मिन्न् ।
क्षये॑ । अ॒स्मिन्न् । भू॒मि॒ल्लो॒क इति॑ भूमि—लो॒के ।
यः । अ॒स्मान् । द्वेष्टि॑ । यम् । च॒ । व॒यम् । द्वि॒-
ष्मः । विष्णोः॑ । क्रमे॑ण । अतीति॑ । ए॒ना॒न् ।

नम्' इत्यण् । त्रिवृता स्तोमेन नवस्तोत्रीयेण स्तोमेन त्र्यचवय-वास्तिस्रो वृत्तयः यस्य इति त्रिवृत्, त्रिचक्रादित्वादुत्तरपदान्तो-दात्तत्वम् । रथन्तरेण साम्ना 'अभि त्वा शूर नोनुमः'* इत्येत-द्योनिना वषट्कारेणायुधेन अग्निप्रसादेन गायत्र्यादिभिस्साधनभूतैर्जे-यामि पूर्वजान् प्रथमजान् भ्रातृव्यान् शत्रून् । 'व्यन् सपत्ने' इति व्यन् । अधरान् पादयामि अधोमुखान्निपातयामि । किंच—एनानवबाधे अवमतान् कृत्वा बहुधा पीडयामि यथा मामेव श-रणं भजेयुः । एनादेशोनुदात्तः । किं च—एनान् प्रतिनुदे प्रत्येकं प्रातिलोम्येन वा व्यथयामि अस्मिन् क्षये गृहे । 'क्ष-यो निवासे' इत्याद्युदात्तत्वम् । 'ऊडिदम्' इतीदमो विभक्तिरु-दात्ता । अस्मिन् भूमिलोके पृथिवीस्थाने न गृहमात्र एव । योस्मान् द्वेष्टि अविदितमस्माकं, यं च वयं द्विष्मः अविदितं

*ऐ. २-४-१४.[6]

मामीन्द्रेण देवेन पृतना जयामि
त्रैष्टुभेन छन्दसा पञ्चदशेन स्तोमेन
बृहता साम्ना वषट्कारेण वज्रेण ॥ १० ॥
सहजान् विश्वेभिर्देवेभिः पृतना

क्रामामि । [2]इन्द्रेण । देवेन । पृतनाः । जयामि । त्रैष्टुभेन । छन्दसा । पञ्चदशेनेति पञ्च–दशेन । स्तोमेन । बृहता । साम्ना । वषट्कारेणेति वषट्–कारेण । वज्रेण ॥ १० ॥ सहजानिति सह–जान् । [3]विश्वेभिः । देवेभिः । पृतनाः । जयामि । जागतेन ।

---

तस्य तावुभावपि भ्रातृव्यौ पीडयामि । किं च—विष्णोः क्रमेण विष्णोरेव वा क्रमेण तेन पूर्वकृतेन साधनभूतेन निरस्य अतिक्रम्य अधितिष्ठामि ॥

[2]इन्द्रेणेत्यादि ॥ द्वितीयोतिक्रमः । त्रिष्टुबेव त्रैष्टुभम् । उत्सादित्वात्स्वार्थिकोञ् । पञ्चदशः पञ्चदशस्तोत्रीयः । 'स्तोमे डविधिः पञ्चदशाद्यर्थे' इति डः । बृहता साम्ना 'त्वामिद्धि हवामहे'* इत्येतद्योनिना । समानमन्यत् । सहजानिति विशेषः । संकुल्याः स्वाभाविका वा । पूर्ववत्सः । 'भ्रातृव्यान्' इत्याद्यनुषज्यते ॥

[3]विश्वेभिरिति ॥ तृतीयोतिक्रमः । जगतीशब्दोप्युत्सादिः । सप्तदशस्तोत्रीयः प्रवसथः । वामदेवेन दृष्टं साम वामदेव्यं,

---

* सं २-४-१४[7]

जयामि जागतेन छन्दसा सप्तदशेन स्तोमेन वामदेव्येन साम्ना वषट्कारेण वज्रेणापरजानिन्द्रेण सयुजो वयꣳ सासह्याम पृतन्यतः । घ्नन्तो वृत्राण्यप्रति । यत्ते अग्ने तेज-

छन्दसा । सप्तदशेनेति सप्त-दशेन । स्तोमेन । वाम-देव्येनेति वाम-देव्येन । साम्ना । वषट्कारेणेति वषट्-कारेण । वज्रेण । अपरजानित्यपर-जान् । [4]इन्द्रेण । सयुज इति स-युजः । वयम् । सासह्याम । पृतन्यतः । घ्नन्तः । वृत्राणि । अप्रति । [5]यत् । ते । अग्ने । तेजः । तेन । अहम् । तेज-

वामदेवाद्यत् । समानमन्यत् । 'कया नश्चित्र आ भुवत्'* इत्येतद्योनि वामदेव्यम् । अपरजानिति विशेषः । अपरेण केनचिन्निमित्तेन सजाताश्शत्रवः । स एव सः । पूर्ववद्भ्रातृव्यानित्याद्यनुषज्यते ॥

[4]अथ शुक्रामन्थिनः—इन्द्रेणेति गायत्री ॥ इन्द्रेण सयुजः संयुक्ता वयं सासह्याम भृशमभिभवेम । यङन्ताद्व्यत्ययेन परस्मैपदम् । पृतन्यतः पृतनां सङ्ग्राममस्माभिस्सह कर्तुमिच्छतः । क्यचि 'कव्यध्वरपृतनस्य' इति लोपः । घ्नन्तो वृत्राणि वारकाणि परबलानि पापानि वा । अप्रति अप्रतिबलं यथा भवति तथा । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् ॥

[5]यत्ते अग्ने इत्यादि यजुः ॥ तेजो दीप्तिः । वर्चोऽन्नम् ।

* सं ४-२-११.

स्तेनाहं तेजस्वी भूयासं यत्ते अग्ने
वर्चस्तेनाहं वर्चस्वी भूयासं यत्ते
अग्ने हरस्तेनाहꣳ हरस्वी भूयासम्॥
ये देवा यज्ञहनो यज्ञमुषः पृथि-

स्वी । भूयासम् । यत् । ते । अग्ने । वर्चः । तेन ।
अहम् । वर्चस्वी । भूयासम् । यत् । ते । अग्ने ।
हरः । तेन । अहम् । हरस्वी । भूयासम्॥ ११ ॥

बृहता साम्ना वषट्कारेण वज्रेण
षट्चत्वारिꣳशच्च ॥ ३ ॥

[1]ये । देवाः । यज्ञहन इति यज्ञ—हनः । यज्ञ-
मुष इति यज्ञ—मुषः । पृथिव्याम् । अधीति ।

---

हरः बलम् । त्वदीयैस्तेजःप्रभृतिभिः मदीयेन यागेन वर्धमानैर्हे-
तुभिः अहं तेजःप्रभृतिमान् भूयासमिति ॥

इति तृतीये पञ्चमे तृतीयोनुवाकः

---

[1]अथातिमोक्षः । वैश्वकर्मणानि हुत्वा गार्हपत्ये आज्यं विलाप्य
उत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा गार्हपत्ये जुहोत्यन्वारब्धे यज-
माने—ये देवा इत्यादि ॥ अत्र प्रथमे अनुष्टुभौ । तृतीया

ऽ्यामध्यासंते । अग्निर्मा तेभ्यो र-
क्षतु गच्छेम सुकृतो वयम्।आऽगंन्म
मित्रावरुणा वरेण्या रात्रींणां भागो
युवयोर्यो अस्ति । नाकं गृह्णानास्सु-
कृतस्यं लोके तृतीयें पृष्ठे अधि रो-

आसंते । अग्निः । मा । तेभ्यंः । रक्षतु । गच्छेम ।
सुकृत इति सु-कृतः । वयम् । [2]एति । अगन्म ।
मित्रावरुणेति मित्रा-वरुणा । वरेण्या । रात्रीं-
णाम् । भागः । युवयोः । यः । अस्ति । नाकंम् ।
गृह्णानाः । सुकृतस्येति सु-कृतस्यं । लोके । तृ-

---

त्रिष्टुप् । चतुर्थीपञ्चम्यौ अनुष्टुभौ । षष्ठी त्रिष्टुप् । सप्तम्यष्ट-म्यावनुष्टुभौ । नवमी त्रिष्टुप् । 'ये देवा यज्ञहनो यज्ञमुषः' इति प्रथमयोः प्रथमौ पादौ, समाना अन्येऽपि पादाः । एवं सर्वत्र वाक्यभेदेन द्वे द्वे अनुष्टुभौ । ये देवा यज्ञहनः यज्ञ-स्य हन्तारः ये च यज्ञमुषः यज्ञफलस्य नाशयितारः पृथिव्या-मधि पृथिव्या उपर्यासते अग्निर्मा तेभ्यो यज्ञहभ्यो यज्ञमुड्भ्यश्च सुकृतः शोभनकारिणः अहतामुषितयज्ञाः वयं कर्मस्थानफलं गच्छेम ॥

[2]अथाग्नीध्रमभिप्रैति—आऽगन्मेति ॥ हे मित्रावरुणा मित्रावरुणौ वरेण्या वरेण्यौ वरणीयौ रात्रीणां सम्बन्धी अहोरात्रेषु अस्मा-

चने दिवः । ये देवा यज्ञहनो य-
ज्ञमुषोन्तरिक्षेऽध्यासते । वायुर्मा
तेभ्यो रक्षतु गच्छेम सुकृतो वयम् ।
यास्ते रात्रीस्सवितः ॥ १२ ॥ देव-

तीये । पृष्ठे । अधीति । रोचने । दिवः । [3]ये । देवाः । यज्ञहन इति यज्ञ–हनः । यज्ञमुष इति यज्ञ–मुषः । अन्तरिक्षे । अधीति । आसते । वायुः । मा । तेभ्यः । रक्षतु । गच्छेम । सुकृत इति सु–कृतः । वयम् । [4]याः । ते । रात्रीः । सवितः ॥ १२ ॥ देवयानीरिति देव–यानीः । अ-

भिर्दत्तः युवयोर्भागः हविरंशो योस्ति सामर्थ्यात्तस्य फलं वयमागन्म आभिमुख्येन गच्छेम नाकं स्वयमेव गृह्णानाः आददानाः सुकृतस्य लोके सुष्ठुकृतानां कर्मणां तृतीये फलस्थाने दिवः पृष्ठे रोचने दीप्यमाने अधि उपरि सुकृतमागन्मेति । यद्वा—अधिकं रोचमाने दिवः पृष्ठे आगन्मेति । 'कर्षात्वतः' इति भागशब्दोन्तोदात्तः, न 'भ्राणनपात्' इत्यादौ नाकशब्दोन्तोदात्तो निपात्यते । 'सूपमानात्क्तः' इति सुकृतशब्दोन्तोदात्तः, 'अनुदात्तेतश्च हलादेः' इति रोचनशब्दो युजन्तः ॥

[3]अथाग्नीध्रं गत्वा स्रुचि चतुर्गृहीतं गृहीत्वा शये[आग्नीध्रे]ऽन्वारब्धे यजमाने जुहोति—ये देवा इति द्वाभ्यां पृथगाहुतिद्वयम् । गतौ च मन्त्रौ ॥

[4]अथाग्नीध्रमुपतिष्ठते—यास्ते इति ॥ हे सवितः यास्तव स-

यानींरन्तरा द्यावांपृथिवी वियन्तिं । गृहैश्च सर्वैः प्रजया न्वग्रे सुवो रुहांणास्तरता रजांꣳसि । ये

न्तरा । द्यावांपृथिवी इति द्यावां—पृथिवी । वियन्तीतिं वि—यन्तिं । गृहैः । च । सर्वैः । प्रजयेतिं प्र—जयां । नु । अग्रें । सुवंः । रुहांणाः । तरत । रजाꣳसि । [5]ये । देवाः । यज्ञहन इतिं यज्ञ—हनंः ।

म्बन्धिन्यो रात्रीः रात्रयः अग्निसमीपप्राप्तिहेतवः देवयानीः देवान् गच्छन्ति यासु ता देवयान्यः यागवत्य इति यावत्, उभयत्रापि 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । द्यावापृथिवी अन्तरा द्यावापृथिव्योर्मध्ये या वियन्ति विविधं गच्छन्ति । 'दिवो द्यावा' इति द्यावादेशः 'देवताद्वन्द्वे च' इत्याद्युदात्तत्वम् । 'अन्तराऽन्तरेण' इति द्वितीया । ताभिर्हेतुभूताभिः अग्रे प्रथममेव गृहैः गृहवासिभिः सर्वैर्जनैः प्रजया सह । समुच्चये नुशब्दः । सुवो रुहाणाः सुखैकरूपं स्वर्गं आरोहन्तः ऋत्विग्यजमानाः रजांसि लोकान्तराणि दुःखबलानि तरतः तरन्तु त्वत्प्रसादेन । व्यत्ययेन मध्यमः । यद्वा—वयं तराम त्वत्प्रसादादिति । सर्वथा मध्यमव्यत्ययेन मुच्यामहे । 'अन्येषामपि दृश्यते' इति संहितायामस्य दीर्घत्वम् । 'इमानेव लोकांस्तीर्त्वा सगृहस्सपशुस्सुवर्गं लोकमेति'* इति ब्राह्मणम् । 'स्वरो रोहतौ छन्दसि' इत्युत्वम् । रुहेर्व्यत्ययेनात्मनेपदम् । लसार्वधातुकानुदात्तत्वं च ॥

[5]अथाहवनीयं[अनु]द्रुत्य स्रुचि चतुर्गृहीतं गृहीत्वा आहवनीये जुहो-

* सं ३-५-४.7

देवा यज्ञहनो यज्ञमुषो दिव्यध्यास-
ते । सूर्यो मा तेभ्यो रक्षतु गच्छेम
सुकृतो वयम् । येनेन्द्राय समभरः
पयाꣳस्युत्तमेन हविषा जातवेदः ।
तेनाग्ने त्वमुत वर्धयेमꣳ सजातानाꣳ

यज्ञमुष इति यज्ञ–मुषः । दिवि । अधीति । आ-
सते । सूर्यः । मा । तेभ्यः । रक्षतु । गच्छेम ।
सुकृत इति सु–कृतः । वयम् । येन । इन्द्राय ।
समभर इति सम्–अभरः । पयाꣳसि । उत्तमेने-
त्युत्–तमेन । हविषा । जातवेद इति जात–वेदः ।
तेन । अग्ने । त्वम् । उत । वर्धय । इमम् । स-
जातानामिति स–जातानाम् । श्रैष्ठ्ये । एति ।

---

त्यन्वारब्धे यजमाने—ये देवा इति द्वाभ्यां पृथगाहुतिद्वयम् । गतौ च मन्त्रौ ॥

[6]अथाहवनीयमुपतिष्ठते—येनेन्द्रायेति ॥ हे जातवेदः जातानां वेदितः अग्ने येन बलेन स्नेहेन वा इन्द्राय पयांसि दधिघर्मादीनि समभरः संभरसि । छान्दसो लङ् । उत्तमेन तेन बलेन स्नेहेन वा । उत अपि च हविषा एतद्भुतेन हेतुना इमं यजमानं त्वं वर्धय । कीदृशी वृद्धिरस्य कर्तव्येति चेद्ब्रूमः—सजातानां समानजातानां श्रैष्ठ्ये श्रेष्ठभावे यथाऽयं सजातानां श्रेष्ठः

श्रैष्ठ्य आ धेह्येनम् । यज्ञहनो वै
देवा यज्ञमुषः ॥ १३ ॥ सन्ति त
एषु लोकेष्वासत आददाना विम-
थ्नाना यो ददाति यो यजते तस्य ।
ये देवा यज्ञहनः पृथिव्यामध्यासते
ये अन्तरिक्षे ये दिवीत्याहेमानेव

धेहि । एनम् । [7]यज्ञहन इति यज्ञ-हनः । वै ।
देवाः । यज्ञमुष इति यज्ञ-मुषः ॥ १३ ॥ सन्ति ।
ते । एषु । लोकेषु । आसते । आददाना इत्या-
ददानाः । विमथ्नाना इति वि-मथ्नानाः । यः ।
ददाति । यः । यजते । तस्य । ये । देवाः । यज्ञ-
हन इति यज्ञ-हनः । पृथिव्याम् । अधीति । आ-
सते । ये । अन्तरिक्षे । ये । दिवि । इति । आह ।
इमान् । एव । लोकान् । तीर्त्वा । सगृह इति

---

प्रशस्यतमो भवति तथा तत्र एनं यजमानं धेहि स्थापय स
जातानां मध्ये । उत्तमशब्द उञ्छादिरन्तोदात्तः । 'वा जाते'
इति सजातशब्दोन्तोदात्तः । केचिदाहुः—तिस्र एव गार्हपत्ये
जुहोति, तिस्र आग्नीध्रे, तिस्र आहवनीये इति ॥

[7]अथैषामतिमोक्षाणां ब्राह्मणम्—यज्ञहनो वा इत्यादि ॥ आद-
दाना हविरादि । विमथ्नानाः शालाभङ्गादिकमाचरन्तः । कस्य?

लोकाꣳस्तीर्त्वा सगृहस्सपशुस्सुव-
र्गं लोकमेत्यप वै सोमेनेजानाद्दे-
वताश्च यज्ञश्च क्रामन्त्याग्नेयं पञ्चक-
पालमुदवसानीयं निर्वपेदग्निस्सर्वा
देवताः ॥ १४ ॥ पाङ्क्तो यज्ञो देव-

स—गृहः । सपशुरिति स—पशुः । सुवर्गमिति सुवः—गम् । लोकम् । एति । [8]अपेति । वै । सोमेन । ईजानात् । देवताः । च । यज्ञः । च । क्रामन्ति । आग्नेयम् । पञ्चकपालमिति पञ्च—कपालम् । उदवसानीयमित्युत्—अवसानीयम् । निरिति । वपेत् । अग्निः । सर्वाः । देवताः ॥ १४ ॥ पाङ्क्तः । यज्ञः । देवताः । च । एव । यज्ञम् । च । अवेति ।

---

यो ददाति, यश्च यजते तस्य । ये देवा यज्ञहन इति । यज्ञमोक्षणमन्त्राणामप्युपलक्षणम् । येऽन्तरिक्षे ये दिवीति शिष्टानां चतुर्णां ग्रहणम् ॥

[8]अप वै सोमेनेत्यादि ॥ उदवसानीयं उदवसीयतेऽनेनेत्युदवसानीयं, करणे कृत्यः, 'उपोत्तमं रिति' इत्युपोत्तमस्योदात्तत्वम् । अग्निस्सर्वा देवता इति । अग्न्यधीनस्थितित्वात्सर्वदेवानाम् । पाङ्क्तो यज्ञ इति । धानादिपञ्चकात्मकपाङ्क्तिप्रभवत्वात् ॥

ताश्चैव यज्ञं चावं रुन्धे गायत्रो वा अग्निर्गायत्रछंन्दास्तं छन्दंसा व्यंर्धयति यत्पञ्चंकपालं करोत्यष्टाकंपालः कार्योऽष्टाक्षंरा गायत्री गायत्रोऽग्निर्गायत्रछंन्दास्स्वेनैवैनं छन्दंसा समंर्धयति पङ्क्त्यौ याज्यानुवाक्ये भवतः

रुन्धे । [9]गायत्रः । वै । अग्निः । गायत्रछंन्दा इति गायत्र–छन्दाः । तम् । छन्दंसा । वीति । अर्धयति । यत् । पञ्चंकपालमिति पञ्च–कपालम् । करोति । अष्टाकंपाल इत्यष्टा–कपालः । कार्यः । अष्टाक्षरेत्यष्टा–अक्षरा । गायत्री । गायत्रः । अग्निः । गायत्रछंन्दा इति गायत्र–छन्दाः । स्वेन । एव । एनम् । छन्दंसा । समिति । अर्धयति । पङ्क्त्यौ । याज्यानुवाक्ये इति याज्या–अनुवाक्ये ।

---

[9]पञ्चकपालं निन्दति—गायत्रीप्रभवस्य गायत्रछन्दसः अग्नेः पञ्चकपालोऽवृद्धिहेतुः । तस्मादष्टाकपाल एव कार्यः । तर्हि पञ्चकपालान्वयाभावात् पाङ्क्तो यज्ञो न लभ्यते तत्राह—पङ्क्त्याविति । स्विष्टकृत इत्येके । प्रधानस्येत्यन्ये । याज्यानुवाक्ययोः पङ्क्तित्वात्पाङ्क्तयज्ञलाभः । पङ्क्तिशब्दोऽप्युत्सादिः । 'अग्ने तमद्या-

पाङ्क्तो यज्ञस्तेनैव यज्ञान्नैति ॥ १५ ॥
सूर्यो मा देवो देवेभ्यः पातु वायु-
रन्तरिक्षाद्यजमानोऽग्निर्मा पातु चक्षु-

भवतः । पाङ्क्तः । यज्ञः । तेन । एव । यज्ञात् ।
न । एति ॥ १५ ॥

सवितर्देवा यज्ञमुषस्सर्वा देवतास्त्रि-
चत्वारिꣳशच्च ॥ ४ ॥

[1]सूर्यः । मा । देवः । देवेभ्यः । पातु । वायुः ।
अन्तरिक्षात् । यजमानः । अग्निः । मा । पातु ।

---

श्वं न स्तोमैः'* इत्यक्षरपङ्क्तयः याज्यानुवाक्या भवन्ति । द्वे आग्नेयस्य । द्वे स्विष्टकृतः ॥

इति तृतीये पञ्चमे चतुर्थोऽनुवाकः.

---

[1]प्रवृताहुतिं द्वितीयां जुहोति—सूर्यो मेति । इयं त्रिष्टुप् । 'यजमानः' इति तृतीयपादान्तः ॥ सूर्यो देवो मा देवेभ्यः पातु देवापराधनिमित्तादुपद्रवाद्रक्षतु । वायुर्देवः अन्तरिक्षादन्तरिक्षचारिनिमित्तादुपद्रवात्पातु इत्येव । अग्निर्देवः यजमानः यजमा-

*सं. ४-४-४.

षः । सक्ष शूष सवितर्विश्वचर्षण एतेभिस्सोम नामभिर्विधेम ते ते-भिस्सोम नामभिर्विधेम ते । अहं

चक्षुषः । [2]सक्ष । शूष । सवितः । विश्वचर्षण इति विश्व-चर्षणे । एतेभिः । सोम । नामभि-रिति नाम-भिः । विधेम । ते । तेभिः । सोम । नामभिरिति नाम-भिः । विधेम । ते । [3]अहम् ।

---

नात्मा देवानां वा स्वयमेव यष्टा चक्षुषः चक्षूरूपादपराधात् मां पातु ॥

[2]अभिचरन् बभ्रुवा बभ्रुवत्सायाः पयो जुहोति—सक्षेति । इयं त्रिपदा जगती ॥ हे सक्ष अभिभवितः शत्रूणाम् । सहते-रौणादिकस्सः । यद्वा—सक्षतिरभिभवकर्मा छान्दसः । यद्वा—समानं क्षपति विश्वमिति सक्षः, समानं क्षियत्यस्मिन्निति वा सक्षः, पृषोदरादिः । शूष शोषयितः । छान्दसस्स्वरविकारः । सवितः सर्वस्य प्रेरक । यद्वा—सर्वस्यानुज्ञातः । विश्वचर्षणे विश्वमनुष्य विश्वेऽपि मनुष्यास्स्वत्वेन भवन्तीति । यद्वा—विश्वदर्शन । 'आम-न्त्रितं पूर्वमविद्यमानवत्' इति सर्वेषामामन्त्रिताद्युदात्तत्वम् । हे सोम प्रसवैश्वर्ययुक्त एतेभिः एभिश्चतुर्भिः सक्षादिभिर्नामभिः ते त्वां विधेम परिचरेम । विधतिः परिचरणकर्मा, 'बहुलं छन्दसि' इत्यैसभावः ॥

[3]पात्नीवतस्य श्रयणम्—अहमिति । इयं पञ्चपदा शक्करी ॥ अहं परस्तादुपरिष्टात् भूयासम् । अहमेवावस्तात् अधस्ताच्च भूया-

परस्तादहमवस्तादहं ज्योतिषा वि
तमो ववार । यदन्तरिक्षं तदु मे
पिताऽभूदहꣳ सूर्यमुभयतो ददर्शा-
हं भूयासमुत्तमस्समानानाम् ॥ १६ ॥
आ समुद्रादाऽन्तरिक्षात्प्रजापतिरुद्-

परस्तात् । अहम् । अवस्तात् । अहम् । ज्योति-
षा । वीति । तमः । ववार । यत् । अन्तरिक्षम् ।
तत् । उ । मे । पिता । अभूत् । अहम् । सूर्यम् ।
उभयतः । ददर्श । अहम् । भूयासम् । उत्तम
इत्युत्-तमः । समानानाम् ॥ १६ ॥ [4]एति । स-
मुद्रात् । एति । अन्तरिक्षात् । प्रजापतिरिति प्र-

---

सम् । सर्वव्यापी भूयासमिति यावत् । ज्योतिषा तेजसा । तमः ध्वान्तं तमोहेतुभूतमनिष्टं वा अहं विववार विशेषेण वारयितुं समर्थो भूयासम् । छान्दसो लिट् । यदन्तरिक्षं परमं व्योम तदेव मे पिता अभूत् भूयात् । छान्दसो लुङ् । किञ्च—उभयतः इह च प्रेत्य चाहं सूर्यं ददर्श, अहं भूयासम् । सूर्यवत्स्वेष्वेव लोकेषु वर्तीतिवत् । छान्दसो लिट् । किञ्च—अहं समानानामुत्तमो भूयासम् । उञ्छादित्वादन्तोदात्तः ॥

[4]उपांशुसवनेनादित्यग्रहमधस्तादुदाहरन्ति—आ समुद्रादिति त्रिष्टुभा ॥ आ समुद्रात् अन्तरिक्षावधिकायां प्रजापतिरुदधिं उद-

धिं च्यावयातीन्द्रः प्र स्नौतु मरुतो व-
र्षयन्तून्नम्भय पृथिवीं भिन्धीदं दि-
व्यं नभः । उद्नो दिव्यस्य नो देही-

जा-पतिः । उदधिमित्युद-धिम् । च्यावयाति ।
इन्द्रः । प्रेति । स्नौतु । मरुतः । वर्षयन्तु । [5]उदि-
ति । नम्भय । पृथिवीम् । भिन्धि । इदम् । दिव्यम् ।
नभः । उद्नः । दिव्यस्य । नः । देहि । ईशानः ।

---

कस्य धारयितारं च्यावयाति च्यावयतु सर्वत्र वर्षतु । लेट्याडागमः । इन्द्रः प्रस्नौतु स्नावयतु वर्षत्विति यावत् । स्नु प्रस्नवने । मरुतश्च वर्षयन्तु । इन्द्रस्य साहाय्यकं प्रतिबन्धन्तां त्वत्प्रसादेन हे आदित्यग्रह ॥

[5]अथ द्वितीया—उन्नम्भयेति ॥ व्याख्यातेयं 'देवा वसव्या अग्ने'* इत्यत्र । हे आदित्यग्रह त्वं पृथिवीमुन्नम्भय अविचलितां कुरु पृथिवीम् । नभ हिंसायां, छान्दसो नुट् । इदं दिव्यं दिवि भवं नभः नभस्थं मेघम्, तात्स्थ्यात्ताच्छब्द्यम् । यथा मञ्चाः क्रोशन्तीति । भिन्धि विदारय । भित्त्वा च उद्नः उदकस्य । 'पद्दन्' इत्यादिना उदन्भावः । दिव्यस्य देवार्हस्य । दण्डादित्वाद्यः, 'क्रियाग्रहणं कर्तव्यम्' इति सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी । दिव्यमुदकं नः अस्मभ्यं देहि विसृज विमुञ्च दृतिं मेघं विश्लथितबन्धं कुरु ईशानः । संहितायां दीर्घत्वम् ॥

---

*सं. २-४-८.

शानो विसृजा दृतिम् । पशवो वा एते यदादित्य एष रुद्रो यदग्निरोषधीः प्रास्याग्नावादित्यं जुहोति रुद्रादेव पशूनन्तर्दधात्यथो ओषधीष्वेव पशून् ॥ १७ ॥ प्रतिष्ठापयति कवि-

वीति । सृज । दृतिम् । [6]पशवः । वै । एते । यत् । आदित्यः । एषः । रुद्रः । यत् । अग्निः । ओषधीः । प्रास्येति प्र—अस्य । अग्नौ । आदित्यम् । जुहोति । रुद्रात् । एव । पशून् । अन्तः । दधाति । अथो इति । ओषधीषु । एव । पशून् ॥ १७ ॥ प्रतीति । स्थापयति । [7]कविः । यज्ञस्य । वीति । तनोति ।

---

[6]अथादित्यग्रहस्य च प्रयोगविशेषार्थं ब्राह्मणं—पशवो वा इत्यादि ॥ पशुसाधनत्वादादित्यग्रहः पशुत्वेनोच्यते । अग्नावोषधीः प्रास्य प्रक्षिप्य आदित्यग्रहं जुहोति । ततो रुद्रात्पशूनन्तर्दधाति व्यवहितान् करोति । अथो अपि च अग्नावोषधीः प्रक्षिप्यादित्यग्रहहोमात् ओषधीषु पशवः प्रतिष्ठापिता भवन्ति ॥

[7]प्रायणीयोदयनीययोः स्रुवां जुहोति—कविर्यज्ञस्येति द्वाभ्यां त्रिष्टुब्भ्याम् ॥ तत्र प्रथमा—कविः क्रान्तदर्शनः वितनोति विस्तारयति । किम्? यज्ञस्य पन्थां मार्गम् । व्यत्ययेन द्वितीयायामप्याकारः । क्व? नाकस्य केवलसुखरूपस्य दिवः द्युलोकस्य पृष्ठे अधि

यज्ञस्य वि तनोति पन्थां नाकस्य
पृष्ठे अधि रोचने दिवः । येन हव्यं
वहसि यासि दूत इतः प्रचेता अमु-
तस्सनीयान् । यास्ते विश्वास्समि-

पन्थाम् । नाकस्य । पृष्ठे । अधीति । रोचने ।
दिवः । येन । हव्यम् । वहसि । यासि । दूतः । इ-
तः । प्रचेता इति प्र-चेताः । अमुतः । सनीयान् ।
[8]याः । ते । विश्वाः । समिध इति सं-इधः । स-

---

भूलोकोपरि रोचने रोचमाने । नाकरोचनशब्दौ व्याख्यातौ* । येन पथा हव्यं वहसि देवेभ्यः, येन पथा सुखं यासि गच्छसि । कुतः? (त्वमस्माकम्) इतः अस्मात्सकाशात् प्रचेताः प्रवृद्धचेताः अमुतः अमुष्माल्लोकात् आदाय मनुष्येभ्यः सनीयान् संभक्तृतरः तेन पथा आयाहि इति सामर्थ्याद्गम्यते । सनितृशब्दात् 'परादिश्छन्दसि' इतीयसुन्, 'तुरिष्ठेमेयस्सु' इति तृलोपः । वहसि, 'यद्वृत्तान्नित्यम्' इति न निहन्यते । यासीत्येतत्तु तिङःपरत्वान्न निहन्यते । अनेन पथा गत्वा अस्मदर्थं साधयेति ॥

[8]द्वितीया—यास्तव सर्वा अपि समिधः समिन्धनहेतवः सन्ति काष्ठादयः पृथिव्यां सन्ति । याश्च बर्हिषि परिबृढे आकाशे सन्ति । याश्च सूर्ये द्युलोके सन्ति । तास्सर्वा अपि तव घृतस्याहुतिं गच्छन्ति अनुगच्छन्तु वा । यद्वा—घृताहुतिभावं

---

* सं. ३-५-४.[2]

धस्सन्त्यग्ने याः पृथिव्यां बर्हिषि
सूर्ये याः । तास्ते गच्छन्त्वाहुतिं
घृतस्य देवायते यजमानाय शर्म ।
आशासानस्सुवीर्यꣳ रायस्पोषꣳ
स्वश्वियम् । बृहस्पतिना राया स्व-

न्ति । अग्ने । याः । पृथिव्याम् । बर्हिषि । सूर्ये ।
याः । ताः । ते । गच्छन्तु । आहुतिमित्या–हुतिम् ।
घृतस्य । देवायत इति देव–यते । यजमानाय ।
शर्म । [9]आशासान इत्या–शासानः । सुवीर्यमिति
सु–वीर्यम् । रायः । पोषम् । स्वश्वियमिति सु–
अश्वियम् । बृहस्पतिना । राया । स्वगाकृत इति

---

गच्छन्तु घृताहुतिवत्तव प्रीणयित्र्यस्सन्तु । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् । यथा देवायते देवान् कामयमानाय यजमानाय शर्म सुखं भवति तथा आहुतिभावं भजन्तामिति । देवशब्दात्क्यचि 'न छन्दसि' इतीत्वाभावः ॥

[9]पशौ यूपोपस्थानमन्त्रः—आशासान इति पथ्याबृहती ॥ आशासानः प्रार्थयमानः सुवीर्यं शोभनवीर्ययुक्तं रायः धनस्य पोषं पुष्टिम् । सत्वस्वरावुक्तौ । स्वश्वियं शोभनाश्वसमूहम् । 'केशाश्वाभ्याम्' इति छः, छान्दसं ह्रस्वत्वम् । बृहस्पतिना राया धनभूतेन धात्रा स्वगाकृतः स्वगः आत्मगामी तथाकृतः ।

गाकृंतो मह्यं यजंमानाय तिष्ठ ॥१८

सं त्वां नह्यामि पयंसा घृतेन सं त्वां नह्याम्यप ओषंधीभिः । सं त्वां नह्यामि प्रजयाऽहमद्य सा दीक्षिता

स्वगा-कृतः । मह्यंम् । यजंमानाय । तिष्ठ ॥१८॥

समानानामोषंधीष्वेव पशून्मह्यं यजंमानायैकं च ॥ ५ ॥

[1]समिति । त्वा । नह्यामि । पयंसा । घृतेनं । समिति । त्वा । नह्यामि । अपः । ओषंधीभिरिति-ओषधि-भिः । समिति । त्वा । नह्यामि । प्रजयेति प्र-जया । अहम् । अद्य । सा । दीक्षिता ।

---

छान्दसो डाच्, 'ऊर्यादिच्विडाचश्च' । यजमानाय मह्यं तिष्ठ ॥

इति तृतीये पञ्चमे पञ्चमोनुवाकः

---

[1]पत्नीं संनह्यति—हे पत्नि त्वां संनह्यामि पयसा घृतेन च सह बध्नामि अनेन योक्त्रसंनहनेन हेतुना । किं च—अद्भिरोषधीभिश्च त्वां संनह्यामि । अप इति व्यत्ययेन तृतीयार्थे द्वितीया । यद्वा—त्वत्सन्नहनेन हेतुना अप ओषधीभिस्सह सन्नह्यामि । किं च—त्वां प्रजया पुत्रादिकयाऽहमद्य इदानीं सन्नह्यामि । सा त्वमनेन दीक्षिता अस्मे अस्मभ्यं वाजमन्नं सनवः

संनवो वाजमस्मे । प्रैतु ब्रह्मणस्प-
त्नी वेदिं वर्णेन सीदतु । अथाहमनु-
कामिनी स्वे लोके विशा इह । सु-
प्रजसस्त्वा वयꣳ सुपत्नीरुप सेदिम।

सनवः । वाजम् । अस्मे इति । [2]प्रेति । एतु । ब्रह्मणः । पत्नी । वेदिम् । वर्णेन । सीदतु । अथ । अहम् । अनुकामिनीत्यनु-कामिनी । स्वे । लोके । विशै । इह । [3]सुप्रजस इति सु-प्रजसः । त्वा । वयम् । सुपत्नीरिति सु-पत्नीः । उपेति । सेदिम ।

---

संविभज देहि वा । यद्वा—अस्मदर्थं हविर्लक्षणमन्नं साधय ॥

[2]दीक्षणीयायां पत्नीं प्राचीमुदानयन् वाचयति—प्रैत्वित्यनुष्टुभा ॥ प्रैतु गच्छतु । ब्रह्मणः परिबृढस्यास्य यज्ञस्य पत्नी पालयित्री वेदिं प्राप्नोतु । 'षष्ठ्याः पतिपुत्र' इति सत्वम् । प्राप्य च वर्णेन रूपेण सीदतु उपविशतु आत्मानमेवाह, पुरुषव्यत्ययो वा । अथानन्तरमहं अनुकामिनी अनुक्रमेण यज्ञफलं यज्ञस्यापि धनसंपादनद्वारेण कामयमाना स्वे लोके बर्हिस्स्थाने जघनेन गार्हपत्यं विशै उपविशानि । कारकस्य सर्वानन्यत्वात् लोपे सति निघाताभावः । इहास्मिन् कर्मणि ॥

[3]तत्रोपसीदति—सुप्रजस इत्यनुष्टुभा ॥ व्याख्यातेयं 'प्रत्युष्टम्'* इत्यत्र । सुप्रजसः शोभनपुत्रादिकाः सुपत्नीः शोभनभर्तृकाश्च वयं त्वामुपसेदिम उपसीदामहे । अग्ने सपत्नानां शत्रूणां दम्भनं हिं-

---

*सं. १-१-१०.7

अग्ने सपत्नदम्भनमदब्धासो अदा-
भ्यम् । इमं विष्यामि वरुणस्य पा-
शम् ॥ ११ ॥ यमबध्नीत सविता
सुकेतः । धातुश्च योनौ सुकृतस्य
लोके स्योनं मे सह पत्या करोमि।
प्रेह्युदेह्यृतस्य वामीरन्वग्निस्तेऽग्रे न-

अग्ने । सपत्नदम्भनमिति सपत्न-दम्भनम् । अद-ब्धासः । अदाभ्यम् । [4]इमम् । वीति । स्यामि । वरुणस्य । पाशम् ॥ ११ ॥ यम् । अबध्नीत । सविता । सुकेत इति सु-केतः । धातुः । च । योनौ । सुकृतस्येति सु-कृतस्य । लोके । स्योनम् । मे । सह । पत्या । करोमि । [5]प्रेति । इहि । उदे-हीत्युत्-एहि । ऋतस्य । वामीः । अन्विति । अ-

सितारं अदाभ्यं केन चिदप्यनुपहिंसितव्यम् । अदब्धासः त्वत्प्रसादेन केनचिदप्यनुपहिंस्या वयम् ॥

[4]इमं विष्यामीति योक्त्रविमोचनमन्त्रोऽपि तत्रैव व्याख्यातः* त्रि-ष्टुप् ॥ इमं विष्यामि वरुणस्य वारकस्य पाशं विष्यामि विश्लथयामि, यमबध्नीत सविता सुकेतः सुज्ञानः । धातुरपि कारणभूते सुकृतस्य फलस्थाने स्योनं सुखं मम पत्या सह करोमीति ॥

[5]पन्नेजनीहस्तां पत्नीमुदानयन् वाचयति—प्रेहीति यजुरन्तमानु-

*सं, १-१-१०

यत्वादितिर्मध्यं ददताꣳ रुद्रावसृष्टाऽ-
सि युवा नाम मा मा हिꣳसीर्व-
सुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वे-

ग्निः । ते । अग्रम् । नयतु । अदितिः । मध्यम् । ददताम् । रुद्रावसृष्टेति रुद्र—अवसृष्टा । असि । युवा । नाम । मा । मा । हिꣳसीः । [6-7]वसुभ्य इति वसु—भ्यः । रुद्रेभ्यः । आदित्येभ्यः । विश्वे-

---

ष्टुभम् ॥ हे पत्नि प्रेहि प्रथमं गच्छ, उदेह्युदयं भज यद्वा—उत्कृष्टं गच्छ, प्रथमगामित्वात् । ऋतस्य यज्ञस्य वामीः वननीयेन तद्वती । 'छन्दसीवनिपौ' अग्निस्ते अग्रं अग्रचं मार्गं अनुपश्चान्नयतु सेवताम् । अदितिस्तु मध्यं मार्गस्य मध्यदेशं ददतां धारयतु । व्यत्ययेन द्विवचनम् । धात्वाकारस्य वा छान्दसं ह्रस्वत्वम् । रुद्रैरवसृष्टाऽसि अनुज्ञाताऽसि त्वम् । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । अनुज्ञाकरणमाह—युवा युवतिर्नाम त्वमसि तस्मादहिंस्याऽसि । युवशब्दात् 'यूनः' इति तिप्रत्ययापवादोऽसौ प्रत्ययः छान्दसः, अत एवान्तोदात्तत्वम् । मां मा हिंसीः यज्ञस्यानिवृत्तौ अहं हिंसितस्स्याम् । अत एनामादाय प्रेहीति ॥

[6-7]पत्नेजनीनां ग्रहणसाद न मन्त्रौ वसुभ्य इत्यादिकौ उष्णिहौ, मध्ये अष्टाक्षरः पादः, अभित एकादशाक्षरौ । 'यज्ञाय वः'

भ्यो वो देवेभ्यः पन्नेजनीर्गृह्णामि यज्ञाय वः पन्नेजनीस्सादयामि विश्वस्य ते विश्वावतो वृष्णियावतः ॥ २० ॥ तवाग्ने वामीरनु संदृशि

भ्यः । वः । देवेभ्यः । पन्नेजनीरिति पत्-नेजनीः । गृह्णामि । यज्ञाय । वः । पन्नेजनीरिति पत्-नेजनीः । सादयामि । [8]विश्वस्य । ते । विश्वावत इति विश्व-वतः । वृष्णियावत इति वृष्णिय-वतः ॥ तव । अग्ने । वामीः । अन्विति । सन्दृशीति सं-

---

इति मन्त्रयोरन्तः । गृह्णामीति सादयामीति चेति । सादने वसुभ्य इत्याद्यनुषज्यते ॥

[8]पत्न्यास्सदसि सादनमुद्गात्रा संख्याप्य वाचयति—विश्वस्य त इति द्वाभ्याम् ॥ तत्र प्रथमाऽनुष्टुप्, तवान्तो द्वितीयः पादः सन्दृश्यन्तः तृतीयः, धिषीयान्तश्चतुर्थः । द्वितीया शक्करी षट्पदा । हे अग्ने । पादादावपि व्यत्ययेन निघातः । तत् विश्वस्य विश्वात्मनो विश्वावतः विश्वस्वामित्वात्तद्वतः । छान्दसं संहितायां दीर्घत्वम् । वृष्णियावतः वृष्णियं वीर्यं मर्माणि तद्वतः । पूर्ववद्दीर्घत्वम् । ईदृशस्य तव सन्दृशि सन्दर्शने उद्गातुरभेदोपचारः । वामीः वननीयाः पन्नेजनीरिमा आपः । गौरादित्वान्ङीष् । विश्वा विश्वानि रेतांसि विकारजातानि । तद्धेतुत्वात्ताच्छब्द्यम । ईदृशीरिमा अनुधिषीय तव सन्दर्शनलाभानन्तरं त्वां धारयामि तेनैव

विश्वा रेताँसि धिषीयागन्देवान्
यज्ञो नि देवीर्देवेभ्यो यज्ञमशिषन्न-
स्मिन्थ्सुन्वति यजमान आशिष-
स्स्वाहाकृतास्समुद्रेष्ठा गन्धर्वमा ति-

ष्ठाशि । विश्वा । रेताँसि । धिषीय । [9]अगन्न् । देवान् । यज्ञः । नीति । देवीः । देवेभ्यः । यज्ञम् । अशिषन्न् । अस्मिन्न् । सुन्वति । यजमाने । आ-शिष इत्या–शिषः । स्वाहाकृता इति स्वाहा–कृताः । समुद्रेष्ठा इति समुद्रे–स्थाः । गन्धर्वम् ।

---

हेतुना । धि धारणे, आशिषि लिङ्, 'सुधितवसुधित' इति निपात्यते ॥

[9]अथ द्वितीया—अगन्देवानिति ॥ यज्ञो देवान् न्यगन् निष्कृष्टमगन्, अभिमतानां साकल्येन संपादनं निष्कर्षः । गमेश्छान्दसे लुङि 'मन्त्रे घस' इत्यादिना च्लेर्लुक् । ततो यज्ञस्ताद्दक्स्वभावः । देवीः देव्यः आपः देवेभ्यः देवार्थं अशिषन् देवानां विधेयमकुर्वन् । 'सर्तिशास्त्यर्तिभ्यश्च' इत्यङ्, 'शास इदङ्हलोः' इतीत्वम् । किं च—अस्मिन् सुन्वति सोमेन यष्टरि यजमाने या आशिषः प्रार्थनीया अर्थाः, ता अप्यशिषन्नित्येव । यथाऽस्मिन् साकल्येन संपद्यन्ते तथा कृतवत्यः । तस्माद्यूयमपि स्वाहाकृताः यागोपयुक्ताः । ऊर्यादित्वेन गतित्वात् 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । समुद्रेष्ठाः समुद्रवन्ति अस्मादाप इति समुद्र

ष्ठतानु । वातस्य पत्मन्निड ई-
डिताः ॥ २१ ॥

वषट्कारो वै गायत्रियै शिरोऽच्छिन-
त्तस्यै रसः पराऽपतत्स पृथिवीं प्रा-

एति । तिष्ठत । अनु । वातस्य । पत्मन् । इडः ।
ईडिताः ॥ २१ ॥

पाशं वृष्णियावतास्त्रिꣳशच्च ॥ ६ ॥

[1]वषट्कार इति वषट्-कारः । वै । गायत्रियै ।
शिरः । अच्छिनत् । तस्यै । रसः । परेति । अप-
तत् । सः । पृथिवीम् । प्रेति । अविशत् । सः ।

---

आदित्यः तत्र तिष्ठन्तीति 'सुपि स्थः' इति कः, 'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुक् । अनु अनन्तरं च गन्धर्वं गवामुदकानां धारकं आतिष्ठत वर्तध्वम् । ततो वातस्य पत्मन् पतनस्थाने आकाशे । पतेरौणादिको मनिन् । तत्र वृष्टिद्वारेणागत्येत्यर्थः । इडः अन्नान्योषधीरातिष्ठत । व्यत्ययेन शस उदात्तत्वम्, व्यञ्जनविकारश्च । ईडितः स्तुतः सर्वैः प्रशंसनीयः ॥

इति तृतीये पञ्चमे षष्ठोनुवाकः.

---

[1]अथ स्रुचां लक्षणार्थं ब्राह्मणं—वषट्कार इत्यादि ॥ स्तुत्यर्थमुत्प्रेक्षेयं क्रियते । वषट्क्रियतेऽनेनेति वषट्कारः, वौषट्छब्दः,

विंशत्स खदिरोऽभवद्यस्य खादिर-
स्स्रुवो भवति छन्दसामेव रसेनाव
द्यति सरसा अस्याहुतयो भवन्ति
तृतीयस्यामितो दिवि सोम आ-
सीत्तं गायत्र्याऽहरत्तस्य पर्णमच्छि-
द्यत तत्पर्णोऽभवत्तत्पर्णस्य पर्णत्वं
यस्य पर्णमयी जुहूः ॥ २२ ॥ भ-

खदिरः । अभवत् । यस्य । खादिरः । स्रुवः । भवति । छन्दसाम् । एव । रसेन । अवेति । द्यति । सरसा इति स-रसाः । अस्य । आहुतय इत्या-हुतयः । भवन्ति । [2]तृतीयस्याम् । इतः । दिवि । सोमः । आसीत् । तम् । गायत्री । एति । अहरत् । तस्य । पर्णम् । अच्छिद्यत । तत् । पर्णः । अभवत् । तत् । पर्णस्य । पर्णत्वमिति पर्ण-त्वम् । यस्य । पर्णमयीति पर्ण-मयी । जुहूः ॥ २२ ॥

---

थाथादिनोत्तरपदान्तोदात्तत्वम् । खादिर इति । बिल्वादित्वादण् । छन्दसामिति । सर्वच्छन्दःप्रकृतित्वाद्गायत्र्याः । गतमन्यत् ॥

[2]तृतीयस्यां दिवि इतः तृतीये लोके द्युसंज्ञे सोम आसीत् । पर्णं पत्रं सोमाभरणं रभसेनाच्छिद्यत । पर्णमयीति । 'नित्यं वृद्धशरादिभ्यः' इति मयट् । सौम्या इति । सोममाहरन्त्याः

वंति सौम्या अस्याहुतयो भवन्ति
जुषन्तेऽस्य देवा आहुतीर्देवा वै ब्र-
ह्मन्नवदन्त तत्पर्ण उपाशृणोत्सुश्रवा
वै नाम यस्यं पर्णमयी जुहूर्भवति न
पापꣳ श्लोकꣳ शृणोति ब्रह्म वै पर्णो
विण्मरुतोन्नं विण्मारुतोश्वत्थो यस्यं

भवति । सौम्याः । अस्य । आहुतय इत्या–हुत-
यः । भवन्ति । जुषन्ते । अस्य । देवाः । आहु-
तीरित्या–हुतीः । [3]देवाः । वै । ब्रह्मन्न् । अवदन्त ।
तत् । पर्णः । उपेति । अशृणोत् । सुश्रवा इति
सु–श्रवाः । वै । नाम । यस्य । पर्णमयीति पर्ण–
मयी । जुहूः । भवति । न । पापम् । श्लोकम् । शृणोति ।
[4]ब्रह्म । वै । पर्णः । विट् । मरुतः । अन्नम् । विट् । मारु-
तः । अश्वत्थः । यस्य । पर्णमयीति पर्ण–मयी ।

---

गायत्र्याः ऋक्पर्णात्मिकया जुह्वा हुतत्वात् । 'सोमाड्ड्यण्' ।
अस्याहुतीर्देवा जुषन्ते प्रीयमाणा भजन्ते ॥

[3]ब्रह्मन् ब्रह्मविषये अवदन्त वादं कृतवन्तः । भासने आ-
त्मनेपदम् । ब्रह्मवादश्रवणं पूरणवर्णात्मकजुहूसंबन्धेन पापश-
ब्दानामश्रवणम् ॥

[4]ब्रह्म वै पर्ण इति ॥ ब्राह्मणजातिः, तदेव पर्णः; प्रश-
स्तत्वसामान्यात् । विट् वैश्यजातिः, सा मरुतः; कृष्यादिप्रया-

पर्णमयी जुहूर्भवत्याश्वत्थ्युपभृद्ब्रह्म-
णैवान्नमव रुन्धेऽथो ब्रह्म ॥ २३ ॥
एव विश्यध्यूहति राष्ट्रं वै पर्णो वि-
डश्वत्थो यत्पर्णमयी जुहूर्भवत्याश्व-
त्थ्युपभृद्राष्ट्रमेव विश्यध्यूहति प्र-
जापतिर्वा अजुहोत्सा यत्राहुतिः प्र-
त्यतिष्ठत्ततो विकङ्कत उदतिष्ठत्ततः

जुहूः । भवति । आश्वत्थी । उपभृदित्युप-भृत् । ब्रह्मणा । एव । अन्नम् । अवेति । रुन्धे । अथो इति । ब्रह्म ॥२३॥ एव । विशि । अधीति । ऊहति । राष्ट्रम् । वै । पर्णः । विट् । अश्वत्थः । यत् । पर्णमयीति पर्ण-मयी । जुहूः । भवति । आश्वत्थी । उपभृदित्युप-भृत् । राष्ट्रम् । एव । विशि । अधीति । ऊहति । [5]प्रजापतिरिति प्रजा-पतिः । वै । अजुहोत् । सा । यत्र । आहुतिरित्या-हुतिः । प्रत्यतिष्ठदिति प्रति-अतिष्ठत् । ततः । विकङ्कत इति वि-कङ्कतः । उदिति । अतिष्ठत् । ततः । प्रजा

---

सबहुलत्वात्, विशोन्नत्वात् । अपि च—विश उपरि ब्रह्माध्यूहति स्थापयति ॥

[5]प्रजापतिर्वा इत्यादि ॥ गतम् । वैकङ्कती । पूर्ववदन्‍ ॥

प्रजा असृजत यस्य वैकङ्कती ध्रुवा
भवति प्रत्येवास्याहुतयस्तिष्ठन्त्यथो
प्रैव जायत एतद्वै स्रुचाꣳ रूपं य-
स्यैवꣳरूपास्स्रुचो भवन्ति सर्वाण्ये-
वैनꣳ रूपाणि पशूनामुप तिष्ठन्ते
नास्यापरूपमात्मञ्जायते ॥ २४ ॥

इति प्र–जाः । असृजत । यस्य । वैकङ्कती । ध्रु-
वा । भवति । प्रतीति । एव । अस्य । आहुतय
इत्या–हुतयः । तिष्ठन्ति । अथो इति । प्रेति । एव ।
जायते । [6]एतत् । वै । स्रुचाम् । रूपम् । यस्य ।
एवꣳरूपा इत्येवं–रूपाः । स्रुचः । भवन्ति । स-
र्वाणि । एव । एनम् । रूपाणि । पशूनाम् । उपे-
ति । तिष्ठन्ते । न । अस्य । अपरूपमित्यप–रूपम् ।
आत्मन्न् । जायते ॥ २४ ॥

जुहूरथो ब्रह्म स्रुचाꣳ सप्तदश च ॥ ७ ॥

---

[6]स्रुचामिति ॥ स्रुक्साहचर्यात् स्रुवोपि स्रुगिति व्यपदिश्यते। नास्येति । अस्य यजमानस्य आत्मन् शरीरे अपरूपं रूपशू-न्यं न जायते रूपवानेव भवतीति ॥

इति तृतीये पञ्चमे सप्तमोनुवाकः.

उपयामगृहीतोसि प्रजापतये त्वा ज्योतिष्मते ज्योतिष्मन्तं गृह्णामि दक्षाय दक्षवृधे रातं देवेभ्योग्निजिह्वेभ्यस्त्वर्तायुभ्य इन्द्रज्येष्ठेभ्यो वरुणरा-

[1]उपयामगृहीत इत्युपायम–गृहीतः । असि । प्रजापतय इति प्रजा–पतये । त्वा । ज्योतिष्मते । ज्योतिष्मन्तम् । गृह्णामि । दक्षाय । दक्षवृध इति दक्ष–वृधे । रातम् । देवेभ्यः । अग्निजिह्वेभ्य इत्यग्नि–जिह्वेभ्यः । त्वा । ऋतायुभ्य इत्यृतायु–भ्यः । इन्द्रज्येष्ठेभ्य इतीन्द्र–ज्येष्ठेभ्यः । वरुणराजभ्य इति वरुणराज–

---

[1]प्राजापत्यं दधिग्रहं गृह्णाति—उपयामगृहीतोसीत्यादि ॥ 'इयं वा उपयामः'* तयैव गृहीतोसि । 'तृतीया कर्मणि' इति पूर्वपद-प्रकृतिस्वरत्वम् । प्रजापतये ज्योतिष्मते दीप्तिमते हे दधिग्रह त्वां दीप्तिमन्तं गृह्णामि । दक्षाय सर्वोत्पादनसमर्थाय दक्षवृधे दक्षयोरुत्साहवतोरध्वर्युयजमानयोर्वर्धयित्रे; अन्तरितत्वादिदोषापनय-नात् । 'यां वा अध्वर्युश्च यजमानश्च देवतामन्तरितः'† इति ब्राह्मणम् । वृधेर्ण्यन्तात्क्विप्, 'बहुलमन्यत्रापि' इति णिलुक् । ग्रहो विशे-ष्यते—रातं दत्तं देवेभ्यः । प्रजापतेस्सर्वदेवतात्मकत्वात् तस्मै गृहीतं सर्वदेवेभ्यो दत्तं भवतीति । देवा विशेष्यन्ते—अग्निजिह्वे-भ्यः अग्निः जिह्वास्थानीयो येषां तेभ्यः । ऋतायुभ्यः ऋतं

---

*सं. ६-५-८. †सं. ३-५-९.[1]

जभ्यो वातापिभ्यः पर्जन्यात्मभ्यो
दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वा-
ऽपेन्द्र द्विषतो मनोप जिज्यासतो ज-

भ्यः । वातापिभ्य इति वातापि–भ्यः । पर्जन्या-
त्मभ्य इति पर्जन्यात्म–भ्यः । [2]दिवे । त्वा । अ-
न्तरिक्षाय । त्वा । पृथिव्यै । त्वा । [3]अपेति । इन्द्र ।
द्विषतः । मनः । अपेति । जिज्यासतः । जहि ।

---

यज्ञः सत्यं वा आयुर्येषां तेभ्यः । इन्द्रज्येष्ठेभ्यः इन्द्रो ज्येष्ठः श्रेष्ठो येषां तेभ्यः । वरुणराजभ्यः वरुणो राजा येषां तेभ्यः। वातापिभ्यः वातवद्व्याप्नुवद्भ्यः वातमाविश्य व्याप्नुवद्भ्यः अमूर्तेभ्यः पितृभ्यः । उक्तमुत्तरपदाद्युदात्तत्वम् । पर्जन्यात्मभ्यः वर्षणस्वभावेभ्यः । एभ्यः सर्वेभ्यो यो दत्तो भवति, तं त्वां प्रजापतये गृह्णामीति ॥

[2]आदायोत्तिष्ठति—दिव इत्यादि ॥ दिवाद्यर्थं त्वामुद्यच्छामीति शेषः । 'ऊडिदम्' इति दिवश्चतुर्थ्या उदात्तत्वम् । 'उदात्तयणः' इति पृथिव्याः ॥

[3]पूर्वया द्वारा निष्क्रामति—अपेन्द्रेति पुरोष्णिहा ॥ तृतीयस्याष्टाक्षरत्वात्, (द्वितीयस्य) । हे इन्द्र द्विषतः योऽस्मान् द्वेष्टि भवन्तं वा, तस्य मनः अपजहि अपगमय नाशय । किञ्च— जिज्यासतः योऽस्मान् क्षपयितुमिच्छति, तस्य च मनोपजहि । ताननेन पापेन जहि । यद्वा—जिज्यासतः अस्माकं शत्रूनपजहि

ह्यप यो नोऽरातीयति तं जहि प्राणा-
यं त्वाऽपानायं त्वा व्यानायं त्वा सते
त्वाऽसंते त्वाऽद्भ्यस्त्वौषधीभ्यो वि-
श्वेभ्यस्त्वा भूतेभ्यो यतः प्रजा अ-
क्खिद्रा अजायन्त तस्मै त्वा प्रजा-

अपेति । यः । नः । अरातीयति । तम् । जहि । [4]प्राणायेति प्र–अनायं । त्वा । अपानायेत्यप–अ-नायं । त्वा । व्यानायेति वि–अनायं । त्वा । सते । त्वा । असंते । त्वा । अद्भ्य इत्यत्–भ्यः । त्वा । ओषं-धीभ्य इत्योषधि–भ्यः । विश्वेभ्यः । त्वा । भूतेभ्यः । यतः । प्रजा इति प्र–जाः । अक्खिद्राः । अजा-यन्त । तस्मै । त्वा । प्रजापतय इति प्रजा–पतये ।

जिज्यासतश्च मनोऽपजहि । अरातीयति अदानमिच्छति योस्मभ्यं न किञ्चिदपि दातुमिच्छति, तं चादानशीलं शत्रुं जहि । अरा-तिशब्दात् 'छन्दसि परेच्छायाम्' इति क्यच् ॥

[4]अथ जुहोति—प्राणाय त्वेत्यादिभिः । सर्वे निगदसिद्धाः । प्राणादयश्शब्दा व्युत्पादिताः* । सते । 'शतुरनुमः' इति चतुर्थ्या उदात्तत्वम् । अद्भ्यः । 'ऊडिदम्' इति । अक्खिद्रा अदी-नाः ऊर्जिताः अजायन्त । खिद दैन्ये, औणादिको रक्प्रत्ययः, छान्दसो वर्णोपजनः । तस्मै त्वा प्रजापतये विभूदाम्ने विभूनां

*सं. १-१-६.[8]

पतये विभूदाव्ने ज्योतिष्मते ज्यो-
तिष्मन्तं जुहोमि ॥ २५ ॥
यां वा अध्वर्युश्च यजमानश्च देव-
तामन्तरितस्तस्या आ वृश्चयेते प्रा-
जापत्यं दधिग्रहं गृह्णीयात्प्रजापति-

विभूदाव्न इति विभु-दाव्ने । ज्योतिष्मते । ज्योतिष्मन्तम् । जुहोमि ॥ २५ ॥

ओषधीभ्यश्चतुर्दश च ॥ ८ ॥

[1]याम् । वै । अध्वर्युः । च । यजमानः । च । देवताम् । अन्तरित इत्यन्तः-इतः । तस्यै । एति । वृश्चयेते इति । प्राजापत्यमिति प्राजा-पत्यम् । दधिग्रहमिति दधि-ग्रहम् । गृह्णीयात् । प्रजापति-

महतामर्थानां दात्रे । 'आतो मनिन्' इति वनिप् 'अन्येषामपि दृश्यते' इति संहितायां पूर्वपदस्य दीर्घत्वम् । ज्योतिष्मत इत्यादि । व्याख्यातम्* । तादृशाय प्राणाद्यर्थं त्वां जुहोमीति ॥

इति तृतीये पञ्चमे अष्टमोनुवाकः.

[1]अथास्य दधिग्रहस्य ब्राह्मणम्—यां वा इत्यादि ॥ यां देवतामन्तरितः अन्तर्हितां कुरुतः, लुप्तभागत्वात् । तस्यै तस्या-

* सं. ३-५-८.[1]

स्सर्वा देवता देवताभ्य एव नि ह्नु-
वाते ज्येष्ठो वा एष ग्रहाणां यस्यै-
ष गृह्यते ज्यैष्ठ्यमेव गच्छति सर्वा-
सां वा एतद्देवतानाꣳ रूपं यदेष ग्र-
हो यस्यैष गृह्यते सर्वाण्येवैनꣳ रू-

रिति प्रजा–पतिः । सर्वाः । देवताः । देवताभ्यः । एव । नीति । ह्नुवाते इति । [2]ज्येष्ठः । वै । एषः । ग्रहाणाम् । यस्य । एषः । गृह्यते । ज्यैष्ठ्यम् । एव । गच्छति । सर्वासाम् । वै । एतत् । देवतानाम् । रूपम् । यत् । एषः । ग्रहः । यस्य । एषः । गृह्यते । सर्वाणि । एव । एनम् । रूपाणि । पशू-

---

स्सकाशादेव तौ आवृश्चेते ह्रियेते । तत्परिहारार्थं प्राजापत्यं दधिग्रहं गृह्णीयात् । प्रजापतिस्सर्वदेवतात्मकः सर्वदेवतोपकारार्थमेवान्तरायस्य निह्नवः कृतो भवति योध्वर्युयजमानाभ्यामेकस्यै देवतायै हविरन्तरायः कृतः, सर्वदेवतानां दधिग्रहद्वारेण हविर्लाभहेतुस्सम्पन्न इति ॥

[2]ज्येष्ठो वा इत्यादि ॥ ज्येष्ठो वृद्धतमः । 'वृद्धस्य च' इति ज्यादेशः । ज्येष्ठकनिष्ठयोर्वृद्धत्वं ज्यैष्ठ्यम् । गुणवचने ष्यञ् । सर्वासामित्यादि । गतम् ॥

पाणि पशूनामुप तिष्ठन्त उपया-
मगृहीतः ॥ २६ ॥ असि प्रजाप-
तये त्वा ज्योतिष्मते ज्योतिष्मन्तं
गृह्णामीत्याह ज्योतिरेवैनꣳ समा-
नानां करोत्यग्निजिह्वेभ्यस्त्वर्तायुभ्य
इत्याहैतावतीर्वै देवतास्ताभ्य एवै-
नꣳ सर्वाभ्यो गृह्णात्यपेन्द्र द्विषतो म-
न इत्याह भ्रातृव्यापनुत्यै प्राणाय

नाम् । उपेति । तिष्ठन्ते । [3]उपयामगृहीत इत्युप-
याम-गृहीतः ॥ २६ ॥ असि । प्रजापतय इति
प्रजा-पतये । त्वा । ज्योतिष्मते । ज्योतिष्मन्तम् ।
गृह्णामि । इति । आह । ज्योतिः । एव । एनम् ।
समानानाम् । करोति । अग्निजिह्वेभ्य इत्यग्नि-
जिह्वेभ्यः । त्वा । ऋतायुभ्य इत्यृतायु-भ्यः ।
इति । आह । एतावतीः । वै । देवताः । ताभ्यः ।
एव । एनम् । सर्वाभ्यः । गृह्णाति । अपेति । इन्द्र ।
द्विषतः । मनः । इति । आह । भ्रातृव्यापनुत्या
इति भ्रातृव्य-अपनुत्यै । प्राणायेति प्र-अनाय ।

---

[3]अथ मन्त्रपदानि व्याचष्टे—उपयामगृहीत इति ॥ ज्योतिः द्युतिमन्तं समानानां मध्ये यजमानं करोति । एतावतीः एता-

त्वाऽपानाय त्वेत्याह प्राणानेव य-
जमाने दधाति तस्मै त्वा प्रजापत-
ये विभूदावन्ने ज्योतिष्मते ज्योति-
ष्मन्तं जुहोमि ॥२७॥ इत्याह प्रजा-
पतिस्सर्वा देवतास्सर्वाभ्य एवैनं दे-
वताभ्यो जुहोत्याज्यग्रहं गृह्णीयात्ते-

त्वा । अपानायेत्यप—अनाय । त्वा । इति । आह ।
प्राणानिति प्र—अनान् । एव । यजमाने । दधाति ।
तस्मै । त्वा । प्रजापतय इति प्रजा—पतये । वि-
भूदावन्न इति विभु—दावन्ने । ज्योतिष्मते । ज्यो-
तिष्मन्तम् । जुहोमि ॥ २७ ॥ इति । आह । प्र-
जापतिरिति प्रजा—पतिः । सर्वाः । देवताः । सर्वा-
भ्यः । एव । एनम् । देवताभ्यः । जुहोति । [4]आ-
ज्यग्रहमित्याज्य—ग्रहम् । गृह्णीयात् । तेजस्कामस्ये-

---

वत्यः या अग्निजिह्वाद्याः पर्जन्यान्ताः एतावत्प्रमाणाः भ्रातृव्या-
भिभूत्यै । दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम् ॥

[4]आज्यग्रहमित्यादयः काम्या विधयः । तेजस्कामस्य । 'शी-
लिकामि' इत्यादिना णः, पूर्वपदप्रकृतिस्वरत्वम्, 'अतः कृकमि'
इत्यादिना सत्वम् । तेजो वा इति । तद्धेतुत्वात्ताच्छब्द्यम् । एवं

जस्कामस्य तेजो वा आज्यं तेज-
स्व्येव भवति सोमग्रहं गृह्णीयाद्ब्रह्म-
वर्चसकामस्य ब्रह्मवर्चसं वै सोमो
ब्रह्मवर्चस्येव भवति दधिग्रहं गृह्णी-
यात्पशुकामस्योर्ग्वै दध्यूर्क्पशव ऊ-
र्जैवास्मा ऊर्जं पशूनव रुन्धे ॥२८॥

ति तेजः—कामस्य । तेजः । वै । आज्यम् । तेजस्वी ।
एव । भवति । सोमग्रहमिति सोम—ग्रहम् । गृह्णी-
यात् । ब्रह्मवर्चसकामस्येति ब्रह्मवर्चस—कामस्य ।
ब्रह्मवर्चसमिति ब्रह्म—वर्चसम् । वै । सोमः । ब्र-
ह्मवर्चसीति ब्रह्म—वर्चसी । एव । भवति । दधि-
ग्रहमिति दधि—ग्रहम् । गृह्णीयात् । पशुकामस्येति
पशु—कामस्य । ऊर्क् । वै । दधि । ऊर्क् । पशवः ।
ऊर्जा । एव । अस्मै । ऊर्जम् । पशून् । अवेति ।
रुन्धे ॥ २८ ॥

उपयामगृहीतो जुहोमि त्रिचत्वारिंशच्च ॥१॥

सर्वत्र । 'सावेकाचः' इत्यूर्जस्तृतीयाया उदात्तत्वम् । अस्मा
इत्यन्वादेशेऽशनुदात्तः । 'बर्हिषो बर्हिषि गृह्णीयात् । अंशूनुपसं-
गृह्य सोमं गृह्णीयात्' इत्याचार्याः ॥

इति तृतीये पञ्चमे नवमोनुवाकः.

त्वे क्रतुमपि वृञ्जन्ति विश्वे द्विर्यदेते
त्रिर्भवन्त्यूमाः । स्वादोस्स्वादीय-
स्स्वादुना सृजा समतं ऊषु मधु मधु-

[1]त्वे इति । क्रतुम् । अपीति । वृञ्जन्ति । विश्वे । द्विः । यत् । एते । त्रिः । भवन्ति । ऊमाः । स्वादोः । स्वादीयः । स्वादुना । सृज । समिति । अतः । उ । स्विति । मधु । मधुना । अभीति ।

---

[1]अथ तृतीयेऽह्नि प्राजापत्यमतिग्राह्यं गृह्णाति—त्वे क्रतुमपि वृञ्जन्तीत्येकां त्रिष्टुभमनुद्रुत्य उपयामगृहीतोसीति यजुषा ॥ त्वे तव । 'सुपां सुलुक्' इति शे आदेशः । क्रतुं कर्म पूजादिकं विश्वे सर्वेऽपि वृञ्जन्ति सकृदनुष्ठाय संस्थापयन्ति । तत्र द्विरनुष्ठानं, तेनैते स्मः अस्मदादीनां विलक्षणानां यज्ञकर्मणि वर्तमानानां सः स्वभाव इति । ये त्रिरनुतिष्ठन्ति ते ऊमाः अवितारस्सर्वस्य अस्मत्तोपि विलक्षणाः देवा भवन्ति, देवानां स स्वभाव इति । तस्मादस्माभिः द्वितीयः प्राजापत्यग्रहो गृह्यते इति । त्रिरिति । एकवाक्ये पदात्परत्वाभावाद्भवन्तीति न निहन्यते । अवतेरौणादिके मत्प्रत्यये 'ज्वरत्वर' इत्यादिना ऊठ् । तस्मात्स्वादोः पूर्वस्मात् प्राजापत्यात् स्वादीयः स्वादुतरमेतत् स्वादुना दध्यादिना संसृज संसृजामि । पुरुषव्यत्ययः, 'द्व्यचोतस्तिङः' इति संहितायां दीर्घत्वम् । अतस्त्वमपि हे प्रजापते ग्रह एव वा । मधु मधुनः फलस्य साधनमेतत्कर्म मधुना कर्मफलेन सुष्ठु अभियोधि आभिमुख्येन संसृज । 'वा छन्दसि' इत्यपित्त्वाभावेना-

नाऽभि योधि। उपयामगृहीतोसि प्रजापतये त्वा जुष्टं गृह्णाम्येष ते योनिः प्रजापतये त्वा। प्राणग्रहान्गृ-

योधि। [2]उपयामगृहीत इत्युपयाम-गृहीतः। असि। प्रजापतय इति प्रजा-पतये। त्वा। जुष्टम्। गृह्णामि। [3]एषः। ते। योनिः। प्रजापतय इति प्रजा-पतये। त्वा। [4]प्राणग्रहानिति प्राण-ग्रहान्।

---

ङित्त्वात् 'अङितश्च' इति धिभावः, 'उतो वृद्धिः' इति व्यत्ययेन न क्रियते, 'अन्येषामपि दृश्यते' इति उकारस्य संहितायां दीर्घत्वम्, 'सुञः' इति षत्वम् ॥

[2]उपयामगृहीतोसीत्यादि ॥ गतम्* ॥

[3]अनेन गृहीत्वा परिमृज्य सादयति—एष ते योनिः प्रजापतये त्वेत्यादि ॥ 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरत्वम् ॥

[4]प्राणग्रहान् गृह्णातीत्यादि ब्राह्मणम् ॥ एषां मन्त्रास्त्वनन्तरकाण्डे भविष्यन्ति। तत्रायं प्रयोगक्रमः—सन्नद्धस्य राज्ञो नवांशून् प्राच आयातयति 'अयं पुरोभुवः'† इति। 'अयं दक्षिणा विश्वकर्मा'† इति नव दक्षिणा आयातयति। 'अयं पश्चाद्विश्वव्यचाः'† इति नव प्रतीच आयातयति। 'इदमुत्तरात्सुवः'† इति नवोदीच आयातयति। 'इयमुपरि मतिः'† इति नवोपरिष्टात्प्रदक्षिणं पर्यायातयति। तानपानभृद्भिः प्रत्यूहति 'प्राची दिशाम्'‡ इति। वाचयति 'पितरः पितामहाः'‡ इति,

---

*सं १-७-१२.[12] †सं. ४-३-२. ‡सं. ४-३-३.

ह्णात्येतावद्वा अस्ति यावदेते ग्रहा-
स्स्तोमाश्छन्दाꣳसि पृष्ठानि दिशो
यावदेवास्ति तत् ॥२१॥ अव रुन्धे
ज्येष्ठा वा एतान्ब्राह्मणाः पुरा वि-
दामक्रन्तस्मात्तेषाꣳ सर्वा दिशोभि-

गृह्णाति । [5]एतावत् । वै । अस्ति । यावत् । एते ।
ग्रहाः । स्तोमाः । छन्दाꣳसि । पृष्ठानि । दिशः ।
यावत् । एव । अस्ति । तत् ॥ २१ ॥ अवेति ।
रुन्धे । [6]ज्येष्ठाः । वै । एतान् । ब्राह्मणाः । पुरा ।
विदाम् । अक्रन् । तस्मात् । तेषाम् । सर्वाः ।
दिशः । अभिजिता इत्यभि–जिताः । अभूवन् ।

---

ये पुरस्ताद्भवन्ति । अथ 'दक्षिणा दिशाम्'* इति ये दक्षिणतो भवन्ति । अथ 'प्रतीची दिशाम्'* इति ये पश्चाद्भवन्ति । अथ 'उदीची दिशाम्'* इति य उत्तरतो भवन्ति । अथ 'ऊर्ध्वा दिशाम्'* इति य उपरिष्टात्प्रदक्षिणं पर्याता भवन्ति ॥

[5]एतावद्वा इत्यादि ॥ एतावदेवास्मिन् जगति पुनरेते ग्रहाः स्तोमास्त्रिवृदादयः, छन्दांसि गायत्र्यादीनि, पृष्ठानि सामानि रथन्तरादीनि । एतदात्मका एते ग्रहाः एतावदेवास्ति सर्वमवरुन्धे ॥

[6]ज्येष्ठा वा इत्यादि ॥ गतम् । विदामक्रन् । विदेर्लुङि 'अभ्यु-

---

*सं. ४-३-३.

जिता अभूवन् यस्यैते गृह्यन्ते ज्यैष्ठ्यमेव गच्छत्यभि दिशो जयति पञ्च गृह्यन्ते पञ्च दिशस्सर्वास्वेव दिक्ष्वृध्नुवन्ति नवनव गृह्यन्ते नव वै पुरुषे प्राणाः प्राणानेव यजमानेषु दधति प्रायणीये चोदयनीये च गृ-

यस्य । एते । गृह्यन्ते । ज्यैष्ठ्यम् । एव । गच्छति । अभीति । दिशः । जयति । [7]पञ्च । गृह्यन्ते । पञ्च । दिशः । सर्वासु । एव । दिक्षु । ऋध्नुवन्ति । नवनवेति नव–नव । गृह्यन्ते । नव । वै । पुरुषे । प्राणा इति प्र–अनाः । प्राणानिति प्र–अनान् । एव । यजमानेषु । दधति । [8]प्रायणीय इति प्र–अयनीये । च । उदयनीय इत्युत्–अयनीये । च । गृह्यन्ते । प्राणा इति प्र–अनाः । वै । प्राणग्रहा

---

त्सादयाम्' इत्यादौ आम्प्रत्ययो निपात्यते, 'मन्त्रे घस' इत्यादिना अनुप्रयुज्यमानस्य च्लेर्लुक् ॥

[7]पञ्च गृह्यन्ते इत्यादयो विधयः। नियतमेव नवांशवो गृह्यन्ते। नव वा इति। सप्त शीर्षण्याः, द्वाववाञ्चौ। यजमानेषु दधतीति। सत्रविषयत्वाद्बहुवचनम् ॥

[8]क्व पुनरेते ग्रहाः गृहीतव्या इत्याह—प्रायणीये चेत्यादि ॥

ह्यन्ते प्राणा वै प्राणग्रहाः ॥ ३० ॥
प्राणैरेव प्र यन्ति प्राणैरुद्यन्ति द-
शमेऽहन्गृह्यन्ते प्राणा वै प्राणग्र-
हाः प्राणेभ्यः खलु वा एतत्प्रजा
यन्ति यद्वामदेव्यं योनेश्च्यवते दश-
मेऽहन्वामदेव्यं योनेश्च्यवते यद्द-

इति प्राण-ग्रहाः ॥ ३० ॥ प्राणैरिति प्र-अनैः । एव । प्रयन्तीति प्र-यन्ति । प्राणैरिति प्र-अनैः । उदिति । यन्ति । दशमे । अहन् । गृह्यन्ते । [१]प्राणा इति प्र-अनाः । वै । प्राणग्रहा इति प्राण-ग्रहाः । प्राणेभ्य इति प्र-अनेभ्यः । खलु । वै । एतत् । प्रजा इति प्र-जाः । यन्ति । यत् । वामदेव्यमिति वाम-देव्यम् । योनेः । च्यवते । दशमे । अहन् । वामदेव्यमिति वाम-देव्यम् । योनेः । च्यवते । यत् । दशमे । अहन् । गृह्यन्ते । प्राणे-

---

एते प्रायणीयोदयनीययोरेव नियुक्ता गृह्यन्ते । 'दशमेहंस्तदु रात्रिसत्रेष्वग्निष्टोम आयातयाति वा गृह्णीयादगदो हैव भवति' इत्याचार्याः ॥

[१]प्राणेभ्य इत्यादि ॥ प्राणेभ्यः प्रजायन्ति उपगच्छन्ति तदा, यदा वाम-

शमेऽहन्गृह्यन्ते प्राणेभ्य एव तत्प्र-
जा न यन्ति ॥ ३१ ॥
प्र देवं देव्या धिया भरता जातवे-
दसम् । हव्या नो वक्षदानुषक् ।

भ्य इति प्र-अनेभ्यः । एव । तत् । प्रजा इति प्र-जाः । न । यन्ति ॥ ३१ ॥

तत्प्राणग्रहास्सप्तत्रिंशञ्च ॥ १० ॥

[1]प्रेति । देवम् । देव्या । धिया । भरत । जातवेदसमिति जात-वेदसम् । हव्या । नः । वक्षत् ।

---

देव्यं साम योनेश्च्यवते । कदा पुनस्तद्योनेश्च्यवते? आह—दशमेऽहन्नित्यादि । गतम् । 'वामदेवाड्ड्यड्यौ' ॥

इति तृतीये पञ्चमे दशमोनुवाकः.

---

[1]अथ वरुणप्रघासानामग्निप्रणयनीया अष्टौ—प्र देवमिति गायत्री ॥ हे ऋत्विग्यजमानाः देवं जातवेदसं जातानां वेदितारं जातधनादिकं वा अग्निं प्रभरत प्रकर्षेण भरत प्रणयत । 'अन्येषामपि दृश्यते' इति सांहितिको दीर्घः । देव्या दीप्तया धिया प्रज्ञया कर्मणा वा । 'उदात्तयणः' इति विभक्तेरुदात्तत्वम् । किं प्रयो-

अयमु॒ष्य प्र दे॑व॒युर्होता॑ य॒ज्ञाय॑ नीयते । रथो॒ न योर॒भीवृ॑तो॒ घृणी॑वाञ्चेतति॒ त्मना॑ । अयम॒ग्निरु॑रुष्य-

आ॒नु॒षक् । [2]अ॒यम् । उ॒ । स्यः । प्रेति॑ । दे॒व॒युरिति॑ दे॒व–युः । होता॑ । य॒ज्ञाय॑ । नी॒य॒ते॒ । रथ॑ः । न । योः । अ॒भीवृ॑त॒ इत्य॒भि–वृ॒तः । घृणी॑वान् । चे॒त॒ति॒ । त्मना॑ । [3]अ॒यम् । अ॒ग्निः । उ॒रु॒ष्य॒ति॒ । अ॒मृता॑त् ।

---

जनमिति चेत्? नः अस्माकं हव्या हव्यानि हवींषि । ‘शेश्छन्दसि’ इति लोपः ॥

[2]अथ द्वितीया—अयमुष्य इत्यनुष्टुप् ॥ अयमु अयमेव स्यः सः देवयुः देवान्यष्टुमिच्छन् । ‘न छन्दस्यपुत्रस्य’ इतीत्वाभावः, ‘क्याच्छन्दसि’ इत्युप्रत्ययः । होता देवानामाह्वाता सोयमेव यज्ञाय प्रणीयते । रथो न रथ इव । रंहणशील आदित्यो रथः रथवान्वा, लुप्तमत्वर्थीयः । अभीवृतः ब्राह्मणैर्वेष्टितः । सांहितिकमुपसर्गस्य दीर्घत्वम्, ‘गतिरनन्तरः’ इति गतेः प्रकृतिस्वरत्वम् । योः मिश्रयिता हविषां देवैः । यौतेर्विच् । घृणीवान् रश्मिवान् । सांहितिकं दीर्घत्वम्, ‘छन्दसीरः’ इति मतुपो वत्वम्, व्यत्ययेन ‘छन्दसि’ इति रुर्न प्रवर्तते । चेतति जानाति त्मना आत्मना स्वयमेव यागनिवृत्त्युपायान् वेत्तीति । ‘मन्त्रेष्वाङ्यादेः’ इति लोपः ॥

[3]अथ तृतीया—अयमग्निरित्यनुष्टुप् ॥ अयं प्रणीयमानोग्निरुरु-

त्यमृतादिव जन्मनः । सहसश्चि-
त्सहीयान्देवो जीवातवे कृतः । इ-
डायास्त्वा पदे वयं नाभा पृथिव्या

इव । जन्मनः । सहसः । चित् । सहीयान् । देवः ।
जीवातवे । कृतः । [4]इडायाः । त्वा । पदे । वयम् ।
नाभा । पृथिव्याः । अधि । जातवेद इति जात-

---

ष्यति रक्षति यागं रक्षःप्रभृतिभ्यः । यद्वा—रक्षत्यात्मानं आ समा-
प्तेरविनाशो वर्तिष्यते । अमृतादिव जन्मनः यथा अमृतादविद्य-
मानमरणात् जन्महेतोरविनाशोयं स्तुतो भवति । एवमस्मादाहवनी-
याज्जातत्वान्नास्य विनाश इति । उरुष्यतिः कण्ड्वादिः 'नञो
जरमर' इत्यमृतशब्दस्योत्तरपदाद्युदात्तत्वम् । सहसश्चित्सहीयान् ।
सहो बलम् । मत्वर्थीयो लुप्यते । चिच्छब्दोप्यर्थे । बलवद्भ्योपि
बलवत्तरः । सहस्वच्छब्दादीयसुनि 'विन्मतोर्लुक्' इति लुक्,
'टेः' इति टिलोपः । देवः दीप्तिमान् । जीवातवे जीवनहेतवे
यागाय कृतः प्रणीतः । सोयमग्निः उरुष्यति ॥

[4]अथ चतुर्थी—इडाया इत्यनुष्टुप् ॥ हे अग्ने जातवेदः
इडायाः पृथिव्याः अवयवे पदे अस्मिन् स्थाने । कस्मिन्?
नाभा उत्तरनाभौ । 'सुपां सुलुक्' इति सप्तम्या डादेशः ।
पृथिव्याः प्रथिताया उत्तरवेद्या अधि उपरिष्टात् निधीमहि
स्थापयामः । धीङ् आधारे, छान्दसे लुङि शपो लुक्, 'बहुलं
छन्दस्यमाङ्योगेऽपि' इत्यडभावः । किमर्थम्? हव्याय वोढवे

अधि । जातवेदो नि धीमह्यग्ने ह-
व्याय वोढवे ॥ ३२ ॥ अग्ने विश्वे-
भिस्स्वनीक देवैरूर्णावन्तं प्रथमस्सी-
द योनिम् । कुलायिनं घृतवन्तꣳ
सवित्रे यज्ञं नय यजमानाय सा-

वेदः । नीति । धीमहि । अग्ने । हव्याय । वोढवे ॥ ३२ ॥ [5]अग्ने । विश्वेभिः । स्वनीकेति सु–अनीक । देवैः । ऊर्णावन्तमित्यूर्णा–वन्तम् । प्रथमः । सीद । योनिम् । कुलायिनम् । घृतवन्तमिति घृत–वन्तम् । सवित्रे । यज्ञम् । नय । यजमानाय ।

---

हविर्वोढुं देवेभ्यः । 'तुमर्थे सेसेन्' इति तवेन्प्रत्ययः । हवमर्हतीति हव्यः, दण्डादित्वाद्यः, 'क्रियाग्रहणं कर्तव्यम्' इति संप्रदानत्वम् ॥

[5]अथ पञ्चमी—अग्ने विश्वेभिरिति त्रिष्टुप् ॥ हे अग्ने विश्वेभिस्सर्वैर्देवैः स्वनीकः सुसेनामुखः विश्वेर्देवैस्सह । ऊर्णावन्तं ऊर्णास्तुकया तद्वन्तं योनिं योनिस्थानं प्रथमो मुख्यस्त्वं सीद आस्व । कुलायिनं संभारैस्तद्वन्तं घृतवन्तं व्याघारणभूतेन तद्वन्तम् । तत्रासीनस्त्वं सवित्रे आदित्याय यज्ञं इष्टं हविर्नय प्रापय । सर्वमिष्टं कुर्विति यावत् । यथोक्तम्—'अग्नौ प्रास्ताहुतिस्सम्यगादित्यमुपतिष्ठते' । इति । किमर्थम्? यजमानाय साधु यथा

धु। सीदं होतस्स्व उं लोके चिकि-
त्वान्त्सादयां यज्ञꣳ सुकृतस्य यो-
नौं। देवावीर्देवान् हविषां यजास्य-
ग्ने बृहद्यजंमाने वयों धाः। नि हो-

साधु। [6]सीदं। होतः। स्वे। उ। लोके। चिकि-
त्वान्। सादयं। यज्ञम्। सुकृतस्येतिं सु-कृतस्यं।
योनौं। देवावीरितिं देव-अवीः। देवान्। हविषां।
यजासि। अग्ने। बृहत्। यजंमाने। वयंः। धाः।
[7]नीतिं। होतां। होतृषदंन इतिं होतृ-सदंने। वि-

---

यजमानार्थं साधयेद्यागफलम्। 'कृपावाज्ञि' इत्युण्प्रत्ययः। यद्वा—यजमानस्य फलावाप्तये यज्ञं साधु सवितारं नय॥

[6]अथ षष्ठी—सीदेति त्रिष्टुप्॥ हे अग्ने होतः आह्वातः स्व उ लोके स्व एव स्थाने उत्तरवेद्यां सीद आस्व। चिकित्वान् स्वव्यापारं जानानः। कित ज्ञाने। सीदंश्च त्वं यज्ञं सुकृतस्य कर्मणः योनौ स्थाने सादय। सांहितिकं दीर्घत्वम्। 'सूपमानात्क्तः' इति सुकृतशब्दोन्तोदात्तः। तदर्थमित्थं कर्तव्यमित्याह—देवावीः देवानामविता रक्षिता तर्पयिता वा। 'अवितृस्तृतन्त्रिभ्य ईः'। यस्मादेवं तस्मात् देवान् हविषा यजासि यज। लोट्याडागमः। इदं च कर्तव्यमित्याह—बृहत् महत् यजमाने वयः अन्नं धाः धेहि स्थापय। दधातेर्लेटि शपो लुक्॥

[7]अथ सप्तमी—नि होतेति त्रिष्टुप्॥ होता आह्वाता विद्वानः

तां होतृषदने विदानस्त्वेषो दीदिवाꣳ असदत्सुदक्षः । अदब्धव्रतप्रमतिर्वसिष्ठस्सहस्रंभरश्शुचिजिह्वो अ-

दानः । त्वेषः । दीदिवान् । असदत् । सुदक्ष इति सु-दक्षः । अदब्धव्रतप्रमतिरित्यदब्धव्रत-प्रमतिः । वसिष्ठः । सहस्रंभर इति सहस्रं-भरः । शुचि-

---

स्वाधिकारज्ञः । व्यत्ययेनानुदात्तेत्त्वमात्मनेपदम्, लसार्वधातुकानुदात्तत्वम् । त्वेषः दीप्तिमान् दीदिवान् ज्वलन् । दीव्यतेश्छान्दसस्य लिटः क्वसुरादेशः । सुदक्षः सुष्ठु शीघ्रः सुपण्डितो वा । 'परादिश्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । अदब्धव्रतप्रमतिः अनुपहिंसितकर्मा चासौ प्रकृष्टमतिश्चेति कर्मधारयन्याये दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम् । अनुपहिंसितकर्मा, प्रकृष्टा मतिर्यस्येति । वसिष्ठः वसुमत्तरः । सहस्रंभरः बहुधनः धनस्य भर्ता । यद्वा—बहुधनो हि सहस्रं भृत्यादीन् बिभर्तीति । भर्तेः 'संज्ञायां भृतृवृजि' इति खः । शुचिजिह्वः शुद्धज्वालः । अतस्सर्वेऽपि देवाः त्वदर्चिर्लीढमदन्ति । ईदृशोऽग्निः अञ्जनादिगुणयुक्तः होतृषदने न्यषीदत् निषीदतु । 'सदिरप्रतेः' इति षत्वम् । निषण्णश्चास्माकं अभिप्रेतानि साधयत्विति । छान्दसो लुङ्, इरित्वादङ् ॥

ग्निः । त्वं दूतस्त्वम् ॥ ३३ ॥ उ
नः परस्पास्त्वं वस्य आ वृषभ प्र-
णेता । अग्ने तोकस्य नस्तने तनू-

जिह्व इति शुचि-जिह्वः । अग्निः । [8]त्वम् । दूतः ।
त्वम् ॥ ३३ ॥ उ । नः । परस्पा इति परः-पाः ।
त्वम् । वस्यः । एति । वृषभ । प्रणेतेति प्र-नेता ।
अग्ने । तोकस्य । नः । तने । तनूनाम् । अप्रयु-

---

[8]अथाष्टमी—हे अग्ने नोस्माकं त्वं दूतः देवेषु गन्ता, त्वमेव नः परस्पाः प्रकृष्टः पारयिता । पारस्करादित्वात्सुट् । वस्यः वसुमत्तरः । ईयसुन आद्यक्षरलोपः, व्यत्ययेन नपुंसकत्वम्, क्रियाविशेषणं वा । वसीयः प्रणेतेति । आमन्त्रितं वा हे वसीयः । व्यत्ययेन निघाताभावः । आकारस्समुच्चये वसीयः प्रणेता प्रधानपाकान्तरशोः [पारयित्रोः] पूर्वापेक्षया समुच्चयः । त्वं नः परस्पाः प्रणेता चेति । हे वृषभ वर्षितः अतोस्माकं तोकस्य तने तनयस्य नप्त्रादेः । छान्दसो वर्णलोपः, विभक्तिव्यत्ययश्च । तनूनां शरीराणां च त्वमेव गोपाः गोपयिता । आयप्रत्ययान्तात्क्विप्, अतो लोपयलोपौ, 'धातोः' इत्यन्तोदात्तत्वम् । पदकारमते पाता गोपाः । स एव विशेष्यते—अप्रयुच्छन् अप्रमाद्यन् दीद्यत् दीप्यमानः । देदितिर्दीप्तिकर्मा छान्दसः अभ्यस्तधर्मः, 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । यदुक्तं त्वमेव नः रक्षेति एतत् त्वं बोधि बुद्ध्यस्व । लेटि शपो लुक् । 'वा छन्दसि' इत्यपित्त्वाभावात् लघूपधगुणाभावः । धातोरन्त्यलोपश्छान्दसः । कर्मणि

नामप्रयुच्छन्दीद्यंद्बोधि गोपाः ।अ-
भि त्वां देव सवितरीशांनं वार्यां-
णाम् । सदांऽवन्भागमीमहे । मही
द्यौः पृथिवी चं न इमं यज्ञं मिमि-

च्छन्नित्यप्रं–युच्छन्न् । दीद्यंत् । बोधि । गोपा इतिं
गो–पाः । [9]अभीतिं । त्वा । देव । सवितः । ई-
शांनम् । वार्यांणाम् । सदां । अवन्न् । भागम् ।
ईमहे । [10]मही । द्यौः । पृथिवी । च । नः । इमम् ।
यज्ञम् । मिमिक्षताम् । पिपृताम् । नः । भरींम-

---

वा लुङ्, एतत्त्वया बोधि बुध्यतां विदितमिदं तवास्तु त्वमेव नः गोपायितेति । 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावः ॥

[9]अत्रैवाग्निमन्थनीयास्त्रयोदश, सर्वा गायत्र्यः, त्रयोदशी त्रिष्टुप् ॥ तत्र प्रथमा—अभि त्वेति ॥ हे देव दानादिगुणयुक्त हे सवितः सर्वस्य प्रसावक त्वामीशानं ईशितारं स्वामिनं वार्याणां वरणीयानां वरिष्ठानां धनानाम् । वृणातेः 'ऋहलोर्ण्यत्', 'ईडवन्द' इत्युदात्तत्वम् । हे सदावन् सर्वदा विश्वरक्षिन् भागं भजनीयं धनं अभीमहे आभिमुख्येन याचामहे । 'कर्षात्वतः' इत्यन्तोदात्तत्वम् ॥

[10]द्वितीया—मही द्यौरिति ॥ व्याख्यातेयं 'सूर्यो देवः'* इत्यत्र । मही महती द्यौः पृथिवी च नोस्माकं इमं यज्ञं

---

*सं २-३-१०.[6]

क्षताम् । पिपृतां नो भरीमभिः ।
त्वामग्ने पुष्करादध्यथर्वा निरमन्थ-
त । मूर्ध्नो विश्वस्य वाघतः । तमु
॥ ३४ ॥ त्वा दध्यङ्ङृषिः पुत्र ईधे

भिरिति भरीम-भिः । [11]त्वाम् । अग्ने । पुष्करात् ।
अधीति । अथर्वा । निरिति । अमन्थत । मूर्ध्नः ।
विश्वस्य । वाघतः । [12]तम् । उ ॥ ३४ ॥ त्वा ।
दध्यङ् । ऋषिः । पुत्रः । ईधे । अथर्वणः । वृत्रह-

---

मिमिक्षतां सिञ्चताम्, पिपृतां प्रीणयतां चास्मान् । भरीमभिः भरणप्रकारैरिति ॥

[11]तृतीया—त्वामग्ने इति ॥ हे अग्ने त्वां अथर्वा ऋषिः पुष्करात्पुष्करपर्णात् अधि उपरि निरमन्थत पुष्करपर्णस्थं मन्थनेन ततो निष्कृष्य अलभत । यथोक्तम्—'पुष्करपर्णे ह्येनमुपश्रितमविन्दत्'* इति । कीदृशात्? मूर्ध्नः मूर्धस्थानीयात् प्रधानभूतात् पुष्करपर्णात् । उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । विश्वस्य वाघतः ऋत्विक्समुदायस्य [वाहकात्] उदकात्प्राणो निरमन्थदित्येके ॥

[12]चतुर्थी—तमु त्वेति ॥ तमेव त्वा दध्यङ्नाम ऋषिः अथर्वणः पुत्रः ईधे दीपयामास । 'इन्धिभवतिभ्यां च' इति कित्त्वात् 'अदिताम्' इति लोपः । वृत्रहणं वृत्रस्यासुरस्य पाप्मनो वा हन्तारं पुरन्दरं पुरामसुरसम्बन्धिनीनां दारयितारम् । 'पूःसर्वयोः' इति खच्, 'वाचंयमपुरन्दरौ' इति निपात्यते ॥

---

*सं ५-१-४.

अथर्वणः । वृत्रहणं पुरंदरम् । तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तंमम् । धनंजयꣳ रणेरणे । उत ब्रुवन्तु जन्तव उदग्निर्वृत्रहाऽजंनि । धनंजयो रणेरणे । आ यꣳ हस्ते

णमिति वृत्र–हनंम् । पुरन्दरमिति पुरं–दरम् । [13]तम् । उ । त्वा । पाथ्यः । वृषा । समिति । ईधे । दस्युहन्तंममिति दस्यु–हन्तंमम् । धनञ्जयमिति धनं–जयम् । रणेरण इति रणे–रणे । [14]उत । ब्रुवन्तु । जन्तवः । उदिति । अग्निः । वृत्रहेति वृत्र–हा । अजनि । धनञ्जय इति धनं–जयः । रणेरण इति रणे–रणे । [15]एति । यम् । हस्ते । न । खा-

[13]पञ्चमी—तमु त्वा पाथ्य इति ॥ तमेव त्वां पाथ्यो नाम ऋषिः वृषा प्रधानभूतः समीधे दीपितवान् दस्युहन्तमं दस्यूनां हन्तृतमं हन्तारम् । 'नाद्धस्य' इति नुट् । धनञ्जयं धनानां जेतारं रणेरणे संग्रामे । पूर्ववत्खच् । 'अनुदात्तं च' इति द्वितीयो रणशब्दोनुदात्तः ॥

[14]षष्ठी—उत ब्रुवन्त्विति ॥ उत अपि च जन्तवः मनुष्या ऋत्विगादयः ब्रुवन्तु स्तुतिं कुर्वन्तु । अयमग्निः वृत्रहा पापादेर्हन्ता उदजनि धनंजयो रणेरणे ॥

[15]अथ सप्तमी—आ यमिति ॥ यमग्निमध्वर्युः हस्ते अञ्जलौ

न खादिनꣳ शिशुं जातं न बिभ्रं-
ति । विशामग्निꣳ स्वध्वरम् । प्र
देवं देववीतये भरंता वसुवित्तंमम् ।

दिनंम् । शिशुंम् । जातम् । न । बिभ्रंति । वि-
शाम् । अग्निम् । स्वध्वरमितिं सु-अध्वरम् । [16]प्रे-
तिं । देवम् । देववीतय इतिं देव-वीतये । भरंत ।
वसुवित्तंममितिं वसुवित्-तमम् । एतिं । स्वे ।

---

बिभ्रति । विभक्तिवचनव्यत्ययः । यद्वा—लेटि अडागमे 'नाभ्य-स्तस्याचि' इति गुणाभावः । 'ससाधनां क्रियामुपसर्ग आह' इति आ इत्यागतोग्निरुच्यते । आगतमेवाग्निं बिभर्ति, न खादिनं हविर्भुञ्जानं ज्वलद्वस्थमित्यर्थः । यथाऽऽहुः—'जातमध्वर्युरञ्जलिना गृह्णाति' इति । शिशुं जातं न जातमिव, यथा मात्रादयो जातमात्रमेव शिशुं हस्ते बिभ्रति । अग्निर्विशेष्यते—विशां मनुष्याणां स्वध्वरं शोभनयज्ञम्; अवितथफलसाधनत्वात् । 'नञ्सुभ्याम्' इत्युत्तरप-दान्तोदात्तत्वम् । 'सावेकाचः' इति विशो विभक्तिरुदात्ता । सोयमग्निरुदजनीति ॥

[16]अथाष्टमी—प्र देवमिति ॥ देवमग्निं वसुवित्तमं धनानां लब्धृ-तम प्रभरत । सांहितिकं दीर्घत्वम् । देववीतये देवानां यागाय, देवा वियन्ति भुञ्जतेऽस्मिन्निति । दासीभारादित्वात्पूर्वपदप्रकृतिस्वर-त्वम् । सोयं स्वे योनौ आहवनीयस्थाने आहवनीये निषीदतु आगत्यास्ताम् ॥

आ स्वे योनौ निषीदतु। आ॥३५॥
जातं जातवेदसि प्रियꣳ शिशीता-
तिथिम्। स्योन आ गृहपतिम्।
अग्निनाऽग्निस्समिध्यते कविर्गृहप-

योनौ। नीति। सीदतु। [17]एति॥ ३५॥ जातम्। जातवेदसीति जात-वेदसि। प्रियम्। शिशीत। अतिथिम्। स्योने। एति। गृहपतिमिति गृह-पतिम्। [18]अग्निना। अग्निः। समिति। इध्यते। कविः। गृहपतिरिति गृह-पतिः। युवा। हव्यवा-

---

[17]अथ नवमी—आ जातमिति॥ जातमिममग्निं जातवेदसि आहवनीये अग्नौ आशिशीत आनीय तीक्ष्णं कुरुत। अध्यर्थे वा आकारः। आहवनीयस्योपरि तीक्ष्णं कुरुतेति। ज्वालावत्तीक्ष्णत्वम्, महत्त्वं वा। प्रियमतिथिमिव, यथा प्रियमतिथिमागतं पूजया तर्पयन्ति एवममुं ग्रहपतिं ग्रहाणां पातारमग्निं स्योने स्थाने वा आशिशीत। आकारस्समुच्चये। शतेर्लोटि शपश्श्लुः, 'ई हल्यघोः' इतीत्वम्॥

[18]दशमी—अग्निनेति॥ 'यस्त्वा हृदा'* इत्यत्र व्याख्याता। अग्निना प्रभूतेनाग्निना आहवनीयः समिध्यते। कविः क्रान्तदर्शनः ग्रहपतिः ग्रहाणां पाता युवा हविषां देवैर्मिश्रयिता।

---

*सं. १-४-४६.[11]

तिर्युवा । हव्यवाड्जुह्वास्यः । त्वꣳ
ह्यग्ने अग्निना विप्रो विप्रेण सन्त्स-
ता । सखा सख्या समिध्यसे । तं
मर्जयन्त सुक्रतुं पुरो यावानमाजि-

डिति हव्य-वाट् । जुह्वास्य इति जुहु-आस्यः ।
[19]त्वम् । हि । अग्ने । अग्निना । विप्रः । विप्रेण ।
सन् । सता । सखा । सख्या । समिध्यस इति
सं-इध्यसे । [20]तम् । मर्जयन्त । सुक्रतुमिति सु-
क्रतुम् । पुरोयावानमिति पुरः-यावानम् । आजि-

---

यद्वा—नित्यतरुणः । हव्यवाट् वोढा च हविषाम् । जुह्वास्यः जुहूरास्यस्थानीया यस्येति ॥

[19]एकादशी—त्वं हीति ॥ इयमपि तत्रैव व्याख्याता* । हे अग्ने त्वमग्निना प्रणीयमानेन विप्रः मेधावी विप्रेण तादृशेन सन् समीचीनकामस्सन् सता तादृशेन सखा समानख्यानः सख्या तादृशेन । हि हेतौ । यस्मादीदृशः तस्मादेतेन त्वं समिध्यसे इति ॥

[20]द्वादशी—तमिति ॥ तमग्निं सुक्रतुं शोभनकर्माणम् । 'क्रत्वादयश्च' इत्युत्तरपदान्तोदात्तत्वम् । पुरोयावानमग्रेगन्तारम् । 'आतो मनिन्' इति वनिप् । आजिषु यज्ञभूमिषु स्वेषु क्षयेषु स्वेषु स्थानेषु वाजिनं हविषा तद्वन्तं; तत्र तत्र यष्ट-

---

*सं. १-४-४६.[12]

षुं। स्वेषु क्षयेषु वाजिनम् । यज्ञेनं यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महि-

षुं । स्वेषुं । क्षयेषु । वाजिनम् । [21]यज्ञेनं । यज्ञम् । अयजन्त । देवाः । तानि । धर्माणि । प्रथमानि । आसन् । ते । ह । नाकम् । महिमानः । सचन्ते ।

---

व्यत्वात् । 'क्षयो निवासे' इत्याद्युदात्तत्वम् । ईदृशं मर्जयन्त संस्कुर्वन्ति । मृजेर्ण्यन्ताच्छान्दसो लङ्, वृद्ध्यभावश्छान्दसः, 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावः । तस्माद्वयमपि संस्कुर्म इति ॥

[21]त्रयोदशी—यज्ञेनेति ॥ इज्यते इति यज्ञोऽग्निः । 'यजयाच' इति नङ्प्रत्ययः । तेनेतरमग्निमयजन्त यजन्ते देवाः ऋत्विजः । स एव लङ् । यत्रैव तदेव क्रियते । तानि धर्माणि कर्माणि प्रथमानि मुख्यानि आसन् हिंसारहितानि अभावयन् । 'बहुलमन्यत्रापि' इति णिलुक । ये त्वेवं कुर्वन्ति ते ह त एव नाकं स्वर्गं महिमवन्तः महिमानः । मत्वर्थीयो लुप्यते । नाको विशेष्यते—यत्र पूर्वे साध्याः साधकाः यजमानाः देवाः देवीभूतास्सन्ति इदानीमपि तत्र विद्यन्ते । साधयतेः 'अचो यत्' इति कर्तरि यत्, णिलोपः, 'यतो नावः'

मानंस्सचन्ते यत्र पूर्वे साध्यास्सन्ति
देवाः ॥ ३६ ॥

यत्रं । पूर्वे । साध्याः । सन्ति । देवाः ॥ ३६ ॥

वोढंवे दूतस्त्वं तमु सीदृत्वा यत्रं
चत्वारि च ॥ ११ ॥

पूर्णर्वियोग्निना ये देवास्सूर्यो मा सं त्वा
नह्यामि वषट्कारस्स खंदिर उंपयामगृही-
तोसि यां वै त्वे क्रतुं प्र देवमेकादश ॥ ११ ॥

पूर्णा संहजान्तवांग्ने प्राणैरेव
षट्त्रिंशत् ॥ ३६ ॥

पूर्णा सन्ति
देवाः.

---

इत्याद्युदात्तत्वे उदात्तनिवृत्तिस्वरेण यत उदात्तत्वम् । तस्माद्वय-
मप्येतेन कर्मणा तद्धनं सचेमहीति ॥

इति श्रीभट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये
तृतीये काण्डे पञ्चमप्रश्ने एकादशोनुवाकः.

पञ्चमः प्रश्नस्समाप्तः.

समाप्तश्च तृतीयः काण्डः

# शोधनपत्रिका

| पृष्ठे. | पङ्क्तौ. | अशुद्धम् | शुद्धम्. |
|---|---|---|---|
| ७ | ६ | अस्मात् | अस्मात् |
| १३ | ५ | स्थाम् | स्थाम् |
| २३ | ३ | नमो | नमो |
| २९ | १० | पुजयेति | प्रजयेति |
| ७८ | ६ | यः | [5]यः |
| ८१ | ,, | द्रुह्नते | दुह्नते |
| ११२ | २ | न॑ꣳशु | न॑ꣳशु |
| १४२ | ९ | रुद्र | [6]रुद्र |
| १५८ | ७ | स्कन्दाति | स्कन्दति |
| १६५ | ४ | हे | हे |
| १८९ | ९ | तेन | तेन |
| १९७ | २ | व | वं |
| २०० | ७ | प्रेति | [2]प्रेति |
| २४३ | १० | प्रजापाति | प्रजापति |
| २९४ | ५ | अन्तर | अन्तर |
| ३१७ | ७ | चन्द्रमाः | [6]चन्द्रमाः |
| ,, | ८ | मित्रः | [8]मित्रः |

| पृष्ठे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
| --- | --- | --- | --- |
| ३३६ | २ | देव॑न | देव॑ने |
| ,, | ११ | र॒थ॒मु॒ख | [5]र॒थ॒मु॒ख |
| ३४३ | १२ | द्यम् | द्य॑म् |
| ३४६ | ६ | देवि॑काः | [1]देवि॑काः |
| ३४८ | १३ | ए॒ताः | [3]ए॒ताः |
| ३६१ | ५ | ब्र॒ह्मा | [4]ब्र॒ह्मा |
| ३८६ | ७ | नि॒व | नि॒वे |
| ३९० | ५ | वूर्वा॑ | पूर्वा॑ |
| ४०१ | ८ | येन॑ | [6]येन॑ |
| ४१२ | ६ | प॒ङ | प॒ङ् |
| ४३१ | ५ | पाय॒म | पय॒ाम |

## भाष्यशुद्धपत्रिका.

| पुटे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| ६ | ७ | निर्घ्नुन्ति | निर्घ्नन्ति |
| ३१ | २ | यज्ञश्च: | यज्ञश्च |
| ५१ | ५ | स्तीत्सद्ध्यै | स्तत्सिद्ध्यै |
| ९४ | ८ | न्नवेदाः | न्नवेदा |
| १२९ | ६ | हयतामिति | ह्वयतामिति |
| १३२ | ४ | ऋच्छति | ऋच्छति |
| १६७ | ३ | 'तृम्पन्तां होत्राः' | 'तृम्पन्तां होत्राः'* |
| २१२ | २ | सूर्य इति | सूर्येति |
| २२८ | १ | सोमामिति | सोमेति |
| ३१८ | " | फलपाकान्ताम् | फलपाकान्तानाम् |
| ३३० | ९ | द्युलोक्ता | द्युलोकान्त |
| ४१८ | ३ | ईतः | इतः |
| " | " | अस्मा | अस्म |
| ४५२ | ११ | 'अदिताम्' | 'अनिदिताम्' |



